श्रीः

भाविसमीरश्रीमद्वादिराजपूज्यचरणकृतः

# महाभारतलक्षालङ्कारः ।

## प्रथमो भागः ।



प्रथमावृत्तिः—विकारिसं० १८८१



श्रीसोदावादिराजमठः
उडुपि

# प्रस्तावना ।

व्यासाय भवनाशाय श्रीशाय गुणराशये ।
हृद्याय शुद्धविद्याय मध्वाय च नमो नमः ॥
तपोविद्याविरक्त्यादिसद्गुणौघाकरानहम् ।
वादिराजगुरून्वन्दे हयग्रीवदयाश्रयान् ॥

महोदयाः !

इदमिदानीं साधारमावेदयितुं सादरमुत्कण्ठामहे । यदस्माभिरधुना प्रकाश्यमानोऽयं लक्षालङ्काराख्यो ग्रन्थविशेषः श्रीमद्भाविसमीरश्रीवादिराजगुरुवर्यैः कदा कुत्र किमर्थं विरचयाञ्चक्र इति; कोऽस्य विषयः; कथमस्य सार्थकनामता; काऽस्य प्रणयनेन प्रणेतुः प्रथमाना प्रतिष्ठेति च । तत्र तावदस्य निमित्तं ग्रन्थकर्तारो गुरुचरणा एतद्ग्रन्थान्त एवं स्वयमावेदयाञ्चक्रुः—

व्यासस्य कृपया लक्षालङ्काराख्यः कृतो मया ।
ग्रन्थोऽयं यः प्रभुः कीटमकरोत्पृथिवीपतिम् ॥
भारतस्य सुधाम्भोधेर्भारतीशादयः सुराः ।
यथावन्मथने शक्ताः कृतशिक्षा हरेर्मुखात् ॥
अहं तु मानुषः कुर्यां महाकार्ये कथं मतिम् ।
अत्रास्ति कारणं किञ्चिद्गुह्यं तच्छ्रूयतां बुधैः ॥
प्रयागे ब्रह्मणः सन्ध्यामठे जपपरायणः ।
अहमासं तदा लक्षालङ्कारं कुर्विति प्रभुः ॥
भारतस्य श्लोकलक्षस्यार्थविस्तरणात्मकम् ।
कारयामास योगीन्द्रो लक्षालङ्कारमीदृशम् ॥
व्यास एव यतः कर्ता दासस्य हृदि मे स्थितः ।
अतो न विस्मयः कार्यः किमकार्यं महाप्रभोः ॥
सद्वाक्यरत्नमालेयं तद्व्यासस्य गलेऽर्पिता ।
सदा स्यात्स्वाङ्गकान्त्येमां स एव प्रथयेत्प्रभुः ॥
नमोऽस्तु वासुदेवाय व्यासदेवाय धीमते ।
अस्तुदेवाय देवेभ्यो गुरुभ्यश्च नमो नमः ॥

श्रीदेव्यै भारतीदेव्यै गौरीदेव्यै नमो नमः ।
नमः शच्यै च रत्यै च मातृभ्यश्च नमो नमः ॥ इति ॥

किञ्चात्र श्रीमद्वादिराजपूज्यचरणप्रशिष्यश्रीमद्वेदनिधितीर्थान्तेवासिश्री-रामचन्द्राचार्यविरचित-श्रीवादिराजगुरुवरचरितामृततृतीयबिन्दुगतं वचनमेवं संवदति—

प्रयागे ब्रह्मणः सन्ध्यामठे जपपरस्य हि ॥ १८ ॥
मुनिवेषधरो व्यासः साक्षाद्दृष्टिपथे स्थितः ।
मात्रोपयाचितं वत्स लक्षभूपानिवेदनम् ॥ १९ ॥
सुपुत्रेण त्वया कार्यं महाभारतटीकया ।
लक्षग्रन्थिपदार्थानां विवृत्या लक्षभूपया ॥ २० ॥
मदर्चनेन मात्रोक्तं साधितं स्यादितीरितः ।
व्यासाज्ञां शिरसा धृत्वा बदरीं गतवान्मुदा ॥ २१ ॥
प्रणम्य मध्वहंसेन्द्रान् व्यासमध्वप्रचोदितः ।
लक्षालङ्कारटीकां स विलिख्यार्पयते स्म हि ॥ २२ ॥ इति ॥

अत्र पट्पुराचार्यकृतश्रीवादिराजगुणरत्नमालायाश्चतुर्थविकासीयं वचन-मेवमाभाति—

एकस्मिन् दिवसे गौरी क्रोडमूर्तिं समर्चिताम् ।
पश्यन्ती मनसाऽवाञ्छत्तद्वक्षाङ्गगतं सुमम् ॥ १४ ॥
तदा तदेव पतितं पात्रसात्कृत्य मस्करी ।
तीर्थप्रदानतेऽदात्तस्यै सा ननन्दातिविस्मिता ॥ १५ ॥
तस्मिन्नेव दिने गौरी शुभर्तुसमयस्थिता ।
प्रियेण सङ्गता गर्भं बभार कुलनन्दिनी ॥ १६ ॥
अन्तर्वत्नी क्रमाद्दध्रे शुभं दौहृदलक्षणम् ।
बहून्यहानि साऽऽहारहीना कृशवपुर्बभौ ॥ १७ ॥
तदा तद्बान्धवा एत्य पप्रच्छुस्ते किमीप्सितम् ।
साधयामस्तद्वदस्वेत्युक्ता निश्वस्य साऽवदत् ॥ १८ ॥

अहो वत दरिद्रायाः कथं साध्यं ममेप्सितम् ।
लक्षस्य हैमपद्मानामर्पणं किटिमूर्तये ॥ १९ ॥
अशक्यपूरणमतो वृथा तद्वचनेन किम् ।
इत्याकर्ण्योचुराप्तास्ते वागीशमुनिसन्निधौ ॥ २० ॥
श्रुत्वा परिव्राट्प्रवरः सितास्यस्तां समादधत् ।
वत्से महानुभावस्ते सुतस्ते(सुतस्तत् )पूरयिष्यति ॥ २१ ॥ इति ॥

तत्रैव परं षष्ठे विकासे एवमुक्तम्—

प्रयागे ब्रह्मणः सन्ध्यामठं प्रापाविलम्बितम् ।
तत्रार्वास्यं प्रणम्योपतस्थौ तस्यान्तिके यदा ॥ ४५ ॥
धीमन्तं विनयोपेतमेनमाह हरिस्तदा ।
सौम्य वेत्सि प्रसादान्मे भारतार्थमसंशयम् ॥ ४६ ॥
तद्लक्षपदव्याख्यां कुरु साधुमुदे द्रुतम् ।
.....................................
अशेषनिगमप्रोक्तानुक्तसर्वार्थभूषितम् ॥ ६० ॥
महाभारतनामानं पञ्चमं वेदमुत्तमम् ।
सञ्जानन्नञ्जसा विष्णोः प्रसादाद्धरिदासराट् ॥ ६१ ॥
तत्रत्यलक्षसङ्ख्याकपदव्याख्याविभूषितम् ।
लक्षालङ्कारमतुलं भारतार्थप्रकाशकम् ॥ ६२ ॥
विधाय प्राक्तनं मातुः पूरयामास दौहृदम् ।
तदा तज्जननी स्वप्ने भूवराहं महातनुम् ॥ ६३ ॥
ददर्श लक्षहैमाब्जस्रगामुक्तशिरोधरम् ॥ ६३ ॥

यस्यार्थं स्वयमेव वेद भगवान् व्यासात्मकः श्रीपति-
र्ब्रह्माद्या ऋजवोऽखिला अपि विदन्त्येतत्प्रसादात्परम् ।
सोऽयं भाविसमीरणाकृतियतिस्तद्भावसारं वदन्
संमान्यस्त्रिदशेश्वरैर्विजयते श्रीवादिराजाभिधः ॥ ६४ ॥ इति

एवमत्र प्रथिते ग्रन्थे भारतगतलक्षपदव्याख्याया अदर्शनेऽपि भार

ताख्यलक्षग्रन्थस्याभरणरूपा व्याख्येति वा, भारतस्य स्वीयैर्लक्षपदैः कृताऽऽभरणरूपा व्याख्येति वा, भारतस्य लक्षपदानां व्याख्यार्हतया लक्षीभूतानां व्याख्येति वा सम्भाव्यमाने व्युत्पत्त्यन्तरे जाग्रत्यपि तद्भलक्षपदव्याख्येति प्रसिद्धवचनानुसारेणात्र नियद्धेतरेपामपि शिष्टपदानां व्याख्या विशिष्टमात्रसुलभा गुरुवरकृता जागृयादिति सम्भाव्यते ।

एवमनन्यसुलभां भारतव्याख्यां विदधानाः श्रीवादिराजपूज्यचरणाः श्रीमन्महाभारततात्पर्यनिर्णयकर्तॄणां श्रीमदाचार्याणामात्यन्तिकसाम्यं भाविब्रह्मतारूपमर्हन्तीति सप्रमाणमित्थं विशदीक्रियते श्रीवादिराजगुरुवरचरितामृते अष्टमबिन्दौ—

"दुर्विज्ञेयमतः सर्वैर्भारतं तु सुरैरपि ।
स्वयं व्यासो हि तद्वेद ब्रह्मा वा तत्प्रसादतः ॥"
तात्पर्यनिर्णयोक्तिश्च इत्थं भारततत्वकम् ।
व्यासब्रह्मोभयज्ञेयं प्राह तन्मरुदब्रवीत् ...... ... ॥ ६ ॥
भारतार्थस्य तात्पर्यनिर्णयं मध्वरूपभाक् ।
लक्षालङ्कारतो वादिराजोऽप्यूचे तदर्थकम् ॥ ७ ॥
वादिराजस्ततो भावी ब्रह्मा वायुरितीर्यते ।
"यावज्ज्ञानं चास्ति मे वासुदेवे
तावज्ज्ञानं वायुदेवस्य चास्ति ।
यावज्ज्ञानं वायुदेवस्य चास्ति
तावज्ज्ञानं चास्ति वै तदृजूनाम् ॥"
इति गारुडवाक्यात्तु ऋजूनां ज्ञानसाम्यकम् ॥ ८ ॥
सिध्यत्येव तथा स्वामिवृन्दावनवचस्त्विदम् ।
लक्षालङ्कारकरणे व्यासाज्ञां साधयत्यलम् ॥ ९ ॥
"प्रयागे ब्रह्मणः सन्ध्यामठे जपपरायणः ।
अहमासं तदा लक्षालङ्कारं कुर्वीत प्रभुः ॥" इति ॥

श्रीस्वामिवृन्दावनाख्याने दशमाध्याये चायं विषय इत्थं सङ्कृतते—

इदं तु वेदवेद्याख्यश्रीपादस्य सुतस्य मे ॥ ६४ ॥
वक्तव्यं तत्र गत्वा तु नात्र कार्या विचारणा ।
भारतीपतिवद्भाति भारतार्थप्रकाशनात् ॥ ६५ ॥
भारतार्थप्रकाशत्वात्तत्कर्तृसदृशो हि सः ।
तत्कर्तृसदृशत्वात्तु तद्वत्पूज्यो गुरुः सताम् ॥ ६६ ॥ इति ॥

एवमादिप्रमाणप्रथितमहिमां भाविसमीरश्रीवादिराजगुरुचरणानां कृतिं सुकृतिसुलभां श्रीव्यासमहितां लक्षालङ्कारटीकां तत्प्रसादिकाम्यया मुद्राप्य प्रकाशने प्रवृत्तानामस्माकं लिखितमूलग्रन्थदानेन कृपया अनुगृहीतवतः श्रीकाणूरुमठाधीशश्रीविद्यासमुद्रतीर्थश्रीमच्चरणान्, श्रीपुत्तिकामठाधीशश्रीसुज्ञानेन्द्रतीर्थश्रीमच्चरणान्, श्रीकृष्णापुरमठाधीशश्रीविद्यारत्नतीर्थश्रीमच्चरणांश्च सप्रणामं केवलं धन्यवादैः कृतज्ञताप्रकाशनोपायनैः सत्करवामहे । एवमेव लिखितपुस्तकदानेन सहकृतवतां श्रीअदमारुमठाधीशश्रीविबुधेशतीर्थश्रीमच्चरणानां, तथा शिलोच्चये मणिमिव स्वीयग्रन्थराशौ निगूढं हयग्रीवस्तोत्रं श्रीवादिराजपूज्यचरणैः कृतं पद्यपञ्चकात्मकमुद्धर्तुमवकाशमुपकल्पितवतां श्रीफलिमारुमठाधीशश्रीरघुवल्लभतीर्थश्रीमच्चरणानां साहाय्यं सानन्दमभिनन्द्यते ।

किञ्चास्माकमावश्यकं स्वीयं लिखितमूलपुस्तकं सम्प्रेष्य उपकृतवतां द्वैतवेदान्तविदुषां मैसूरु तिरुपतिगुण्डाचार्याणां, तथा अतिवेलं व्यग्रतया मुद्रणकार्यं समञ्जसं विधाय परितोषं वितन्वतां पावञ्जे गुरुराव् अण्ड् सन्स् इत्येतेषां श्रेयोऽभिवृद्धिं च भगवाननुगृह्णात्विति श्रीवादिराजगुरुपूज्यचरणाराध्यश्रीभूवराहहयग्रीववेदव्यासात्मकं श्रीहरिं सम्प्रार्थयामहे ॥

श्रीसोदावादिराजमठः
उडुपि ।
२५—४—१९५९

श्रीसोदावादिराजमठीय-
श्रीविश्वोत्तमतीर्थश्रीमच्चरणाः ।

# शुद्धाशुद्धपत्रिका।

| अशुद्धम् | शुद्धम् | पृष्ठं | पंक्तिः |
|---|---|---|---|
| संख्या | संख्यां | १८ | २४ |
| कोचकानां वधं | कीचकानांवधं | २१ | ३ |
| शचित्ववत् | शुचित्ववत् | ३७ | ७ |
| सूर्याशुभिरिति | सूर्यांशुभिरिति | ३७ | ८ |
| त्रय अनुजाः | त्रयः अनुजाः | ७३ | ८ |
| तद्धनं | तद्वनं | ८८ | २ |
| स्वाहांकार | स्वाहंकार | ९४ | १ |
| देवत्रयाणां वर्षिमनुष्याणां | त्रयाणां देवर्षिमनुष्याणां | ११५ | २० |
| इच्छत् | इच्छेत् | १३० | १० |
| युष्स्मासु | युष्मासु | १४१ | १९ |
| मध्यमपरुष | मध्यमपुरुष | १४४ | ४ |
| स्वकरणैव | स्वकरेणैव | १५३ | २५ |
| घिगिति | धिगिति | १५४ | १५ |
| पुरस्ताश्च | पुरस्ताच | १९१ | १९ |
| अमिधीयते | अभिधीयते | २०६ | १६ |
| परिपव्या | परिपाट्या | २०६ | २३ |
| कंचित् | कचित् | २०७ | १५ |
| दर्विहोगा | दर्विहोमा | २१० | ४ |
| स परिहार्यः | स पारिहार्यः | २१५ | १७ |
| अनागासि | अनागसि | २१६ | २३ |
| स्थानाः | स्थाना- | २३६ | १ |
| सद्य | सद्यः | ,, | ३ |
| कमेव | कर्मैव | २३८ | २४ |
| तराष्ट्रेण | धृतराष्ट्रेण | २५४ | १८ |
| हसं हसन् | हसे हसन | २५७ | २० |
| चतुर्मूर्ति | चतुर्मूर्तिः | ३१९ | १३ |
| गदाः | गदा- | ,, | १४ |
| वियोग | नियोग | ३३९ | ७ |
| भ्रतृभिः | भ्रातृभिः | ,, | १५ |
| एभ्यस्तानि | येभ्यस्तानि | ३८६ | ११ |
| दक्षिणोऽमि | दक्षिणोऽग्निः | ४२० | २४ |
| मागं | मार्गं | ४२५ | २० |
| पुत्रैर्निमित्तर्गतं | पुत्रैर्निमित्तैर्गतं | ,, | ,, |

॥ श्रीः ॥

॥ श्रीमच्छ्वेतहयवदनाय नमः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ भाविसमीरश्रीमद्वादिराजगुरुभ्यो नमः ॥

भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितः

# ॥ महाभारतलक्षालङ्कारः ॥

---

## आदिपर्व ।

### ( अनुक्रमणिकापर्व । )

### ॥ प्रथमोऽध्यायः ॥

व्यासायाप्रतिमेतिहासरचनोल्लासाय दुर्वादिनां
त्रासायासकराय सत्सु कृतविश्वासाय दोषद्विषे ।
भासा यामुनरम्यतोयसदृशायासायमासेविने
दासायाभयदाय मध्वगुरुहृद्वासाय तुभ्यं नमः ॥ १ ॥
अगाधव्यासबोधाब्धौ निगूढाः शब्दराशयः ।
न विवेदयितुं[1] शक्या मादृशैर्मन्दबुद्धिभिः ॥ २ ॥
प्रक्रान्तार्थानुसारेण शिक्षाशून्यपदस्य च ।
अर्थं कथञ्चिद्वक्ष्यामि तत्क्षन्तव्यं महात्मभिः ॥ ३ ॥
योऽक्षरत्यागयोगाभ्यां क्षत्रं शूद्राभिधं व्यधात् ।
तस्य व्यासस्य वचसो वैदग्ध्यीं वेत्ति कः कविः ॥ ४ ॥
नारायणस्य व्यासस्य मध्वस्य च कृपाबलात् ।
[2]भारतस्य श्लोकलक्षालङ्कारः क्रियते मया ॥ ५ ॥

---

[1]विवेशयितुं, विवेचयितुं. [2]भारतस्थ.

रोमहर्षणपुत्र उग्रश्रवा इत्यत्र रोमहर्षणपुत्रपदेनानन्दजनककथाकथकसूतपुत्रत्वोक्त्या सूतकथारूपस्यास्य ग्रन्थस्य सर्वेष्टदायकत्वं सूचितम् । उग्रश्रवा इत्युक्तेश्च 'न यत्र श्रवणादीनि रक्षोघ्नानि'. 'कृष्णचरितं कलिकल्मषघ्नम्' इत्यादिस्मृत्या रक्षसां कलेः पापानां च उग्रं, श्रवः गुरुमुखाद्धरिकथाश्रवणं यस्य स इत्यर्थलाभेन समस्तानिष्टपरिहारकत्वं च सूच्यते । अथ वा उ क्लेशं, गमयति प्रापयति यः संसारः । 'रीङ् क्षय' इति धातोस्तन्नाशकत्वात्; उ उच्चं, गं ज्ञानं, रं रमणं च यस्मादिति चोग्रपदेनैवोभयलाभात् उग्रं श्रवो यस्येतिवाक्यादेव सूतश्रुतभारतकथाया अप्यनिष्टनिवर्तकत्वमिष्टप्रापकत्वं च गम्यते ॥

विनयावनतो भूत्वा कदाचित्सूतनन्दन इति श्लोके नैमिशारण्यवासिनस्तानृपीन् ददर्शेत्युचितक्रियाध्याहारेण सम्बन्धः । 'अथातो ब्रह्मजिज्ञासे'त्यादिस्वसूत्र इव स्वग्रन्थेऽप्यस्मिन्नुचितक्रियादिपदानामध्याहारोपि तत्र तत्र कर्तव्य इति सूचनाय प्रथमवाक्य एव क्रियानुक्तिः । अत एवादौ श्रवणतो माङ्गलिकरोमहर्षणपदोपादानान्न पृथङ्मङ्गलाचरणं च । महिम्ना गुरूणामपि गभीरपुरुषाणां वचनरचनायां लघुतैव भूषणमिति भावः । यद्वा, सूतः कदाचित ब्रह्मर्षीन् अभि आभिमुख्येन, अगच्छदागच्छत् । आगच्छन्तं च तं सूतं नैमिशारण्यवासिनस्ते मुनयः परिवव्रुः । सूतनन्दनःताननु तमाश्रमं प्राप्य विनयावनतो भूत्वा तानपृच्छदित्यर्थक्रमेणैकैव योजना ॥

ब्रह्मभूता हि मे मता इत्यत्र ब्रह्मणि परमात्मनि, भूताः स्थिताः, आश्रिता इत्यर्थः ॥

जनमेजयस्य यां राज्ञ इति श्लोके, सत्रे पृष्टः वैशम्पायनो मुनिः द्वैपायनाज्ञया यां संहितां यथावदुक्तवान् तां श्रोतुमिच्छाम इत्युत्तरश्लोकेन सम्बन्धः ॥ अवाप्तसकलकामत्वात्केवलं शिष्यशिक्षार्थं सूचितमङ्गलो व्यासः । सम्भावितबहुतरविघ्नभरितत्वात् सूतस्तु सविस्तरं स्तुतिनतिरूपमङ्गलमाचरतीत्याह—सूत इति । व्यक्ताव्यक्तं कस्यचिद्व्यक्तं कस्यचिदव्यक्तं, कदाचिद्व्यक्तं कदाचिदव्यक्तं च ॥ असच्च सच्च कार्यात्मकं कारणात्मकं च, दुर्जनात्मकं सज्जनात्मकं च वा;

[1]सौतिः. [2]सौतिं. [3]सौतिस्तु. [4]सौतिः.

यद्विश्वं तस्मात्सदसतः, परं विलक्षणं, उत्तमं च । (यद्वा यद्ब्रह्म असत् कारणात्मकप्रपञ्चनियामकं, सत् कार्यरूपजगन्नियामकमित्यर्थः । 'सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता' इति वचनात् । विश्वं पूर्ण, सदसतः परं मूर्तामूर्तविलक्षणमित्यर्थः ।)

परावराणां स्रष्टारं पुराणमित्यत्र पुराणशब्दः 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति श्रुतिसमाख्यया पुरं देहाख्यपुरमणति व्याप्नोतीति तत्तदन्तर्यामित्ववाची । प्रागुक्तपुराणशब्दस्तु पुरातनवाचीति विवेकः । पुरुषमिति पाठे स्पष्टोऽर्थः । मङ्गल्यं भजतां नमस्कारादिमङ्गल्योग्यम् । मङ्गलं स्वत एव परमशोभनम् ॥

न तथा फलदं सूते नारायणकथा यथेत्यत्र नारायणकथा यथा फलं सूते इति फलदपदात् फलपदमध्याहृत्य योजना । तथा प्रागुक्तसर्वाश्रमाभिगमनादिकं फलदं नेति पूर्वेणान्वयः । अस्यैव वचनस्य शौनकं प्रति सूतवचनत्वात्सौते[1] इति सूतसम्बोधनाभिप्रायेण कचिच्छोधनमज्ञानमूलम् ॥

इदं तु त्रिपु लोकेष्वित्यत्र ज्ञानं ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनम् । इदं भारताख्यमाख्यानम् ॥

कथमध्यापयामीदं शिष्यं नित्यमचिन्तयदित्यत्र नित्यं कथं शिष्यं अध्यापयामीत्यचिन्तयदिति योजना ॥

तस्य चिन्तयतश्चापीत्यत्र अपिपदेन व्यासस्य चिन्तां गर्हयति ॥

स्मृत्याऽऽजगामेत्यत्र स्मृत्या कारणेनाजगामेति योजना । महर्षेः प्रीत्यर्थं, लोकानां हितकाम्यया चेति सम्बन्धः । व्यासावतारे वसिष्ठनप्तृव्यासं प्रति वसिष्ठपितुर्ब्रह्मणो वृद्धप्रपितामहत्वाल्लोकरीत्या प्रणामादिकमिति ज्ञेयम् ॥

व्यासः स्वयमुपाविशदित्यत्र स्वयमनुज्ञां विनैवोपाविशदिति भ्रान्तिवारणायानुज्ञात इत्याद्युक्तम् । स्वयमेवोपाविशत्; न तु शिष्यैः सहेति सूचनाय स्वयमित्युक्तमिति भावः ॥

---

[1] सौतिवचनत्वात्.

काव्यं परमपूजनमित्यत्र परमं पूजनं सर्वजनैः पूजनं यस्येति विग्रहः ॥

इतिहासपुराणानामुन्मिषन्निमिषच्च यदित्यत्र इतिहासपुराणानां विस्तरक्रिया ख्यापितेति पूर्वेणान्वयः । उन्मिषन्निमिषदित्यादेरुत्तरेणान्वयः । उन्मिषन्निमिषत् रात्रौ चक्षुर्निमेषणं दिवा चक्षुरुन्मेषणं कुर्वत् दिवाचरात्मकं; दिवा निमेषणं कुर्वत् रात्रौ चक्षुरुन्मेषणं च कुर्वत् नक्तञ्चरात्मकं च यज्जगत् (तत्) अस्मिन् भारताख्याने, कीर्तितं विविच्य कथितं, उपरि 'यच्च सर्वगतं वस्तु' इत्येतत्पर्यन्तं वक्ष्यमाणं यच्च सकलं प्रमेयमस्मिन्नाख्याने कीर्तितं, तत्सर्वं क्षन्तुमर्हसि । त्वत्सृष्टिकौशलकथनसमये न्यूनातिरिक्तमस्ति चेत्क्षन्तव्यमिति भावः ॥

त्रिविधं कालसंज्ञितमित्यत्र कालात्संज्ञा अस्य सञ्जातेति कालसंज्ञितं त्रिविधं भूतभव्यभविष्यदात्मकं जगत् कीर्तितम् । एवमुत्तरत्रापि मध्ये मध्ये कीर्तितमितिपदं योजनीयम् ॥

भावाभावविनिश्चयमित्यत्र जरामृत्युभयव्याधीनां भावाभावयोर्विनिश्चयो यस्मिंस्तत्, नित्यानित्यात्मकं जगदित्यर्थः ॥

वेदाध्यात्मं तथैव चेत्यत्र आत्मानं परमात्मानमधिकृत्य वर्तमानमध्यात्मं, वेदोक्तमध्यात्मं वेदाध्यात्मम् ॥

ज्ञानं पाशुपतं तथेत्यत्र पाशुपतं पाशुपतमतोक्तं, यज्ज्ञानं तच्च मया कचित्प्रसङ्गात्कीर्तितमित्यनेनोपरिक्रियमाणपशुपतिस्तोत्रादिकं न स्वमतमिति सूचितम् ॥

इति नैकाश्रयं जन्मेत्यत्र दिव्यमानुषसंज्ञितमित्यनेन प्रकारेण नैकाश्रयं एक आश्रयो यस्य तदेकाश्रयं, एकाश्रयं न भवतीति नैकाश्रयं जन्मेति सम्बन्धः । दिव्यं देवसम्बन्धि, मानुषं मनुष्यसम्बन्धि, एवं सञ्जाता संज्ञा यस्य तद्दिव्यमानुषसंज्ञितम् । इदं च पशुपक्ष्यादिजन्मनः जडजन्मनश्चोपलक्षकम् । अत एव नैकाश्रयमित्युक्तम् । अन्यथा द्व्याश्रयमित्यवक्ष्यत् । अस्यैव प्रपञ्चनं तीर्थानां चैवेत्यादि । जन्मेतिपदं कल्पानामिति वक्ष्यमाणषष्ठ्यन्तपदपर्यन्तमावर्तनीयम् ॥

यच्च सर्वगतमित्यत्र सर्वगतं उक्तेष्वेतेषु सर्वेषु गतं अन्तर्यामितया

स्थितं ब्रह्म चास्मिन्नाख्याने यत्कीर्तितमिति सम्बन्धः ॥

मन्ये श्रेष्ठतममिति वदता वसिष्ठपितुः स्वस्मादपि श्रेष्ठमिति सूचितम् ॥

जन्मप्रभृतीत्यत्र सत्यां निर्दुष्टायां सत्यवत्यां, जन्मप्रभृति जन्मारभ्येत्यर्थः॥

तस्मात्काव्यं भविष्यतीति वदता ब्रह्मणा आदिकवेर्मभैव योग्यमिति सूचितम् ॥

न समर्था विशेषण इत्यत्र अस्य काव्यस्य सकाशाद्विशेषणे अतिशयितग्रन्थकरणे, न समर्था इत्यन्वयः ॥

विशेषेण गृहस्थस्येत्यत्र विशेषाः गृहस्थेभ्योऽपि विशिष्यन्त इति विशेषा उत्कृष्टाः गृहस्थस्य सकाशादन्ये ये त्रय आश्रमाः ब्रह्मचारिवानप्रस्थयत्याख्या आश्रमाः । एतदात्मकं जगद्विशेषेणातिशयेन, जडान्धबधिरोन्मत्ततमोभूतं जडान्धबधिरोन्मत्तवत्तमसाऽज्ञानेन भूतमभिभूतं भवेदित्यन्वयः । तमसाऽन्धस्येति •वक्ष्यमाणत्वाद्भूतपदमभिभूतपरम् । कुटुम्बभरणोद्यतगृहस्थस्य भारताभावेऽपि (कर्मणि)प्रवृत्तिसम्भवात् ज्ञानाधिकारिभूतमाश्रमत्रयमेव गृहीतम् ॥

धर्मार्थकाममोक्षार्थैरित्यत्र धर्मार्थकाममोक्षाख्यैरर्थैः पुरुषार्थैरित्यर्थः । त्वया भारतसूर्येण कीर्तितैर्निमित्तैर्नृणां तमो विनिहतमित्यन्वयः ॥

लोकगर्भगृहमित्यत्र लोकस्य गर्भगृहमन्तर्हृदयम् ॥

कर्णपर्वचितैः पुष्पैरित्यत्र युक्त इति योग्यपदाध्याहारः ॥

मौसलश्रुतिसङ्क्षेप इत्यत्र मौसलपर्व(णि)णः श्रुतिः श्रवणमेव संक्षेपः वृक्षावसानं यस्य स तथोक्तः ॥ प्राक् ब्रह्मणोऽग्रे प्रस्तावितभारतस्यैव करणप्रकारं सूतः पुनः सविस्तरं वक्तुमारभते— तस्य वृक्षस्येति ॥

युगस्यादिनिमित्तं तदित्यत्र युगस्य कृतादियुगस्य, आदिनिमित्तं आदिभूतं निमित्तं, तत् ब्रह्माण्डं, महाद्दिव्यं अतिशयेन दिव्यं प्रचक्षते ॥

सौति ब्रह्म सनातनमित्यत्र सौति सूतिसम्बन्धि, जगत्सृष्टिकारणमित्यर्थः ॥

असच्चाप्यनुजातं चेत्यत्र असत् न विद्यते सदेव जगत्प्रलयकाले यस्मा-

काव्यं परमपूजनमित्यत्र परमं पूजनं सर्वजनैः पूजनं यस्येति विग्रहः॥

इतिहासपुराणानामुन्मिषन्निमिषच्च यदित्यत्र इतिहासपुराणानां विस्तरक्रिया ख्यापितेति पूर्वेणान्वयः। उन्मिषन्निमिषदित्यादेरुत्तरेणान्वयः। उन्मिषन्निमिषत् रात्रौ चक्षुर्निमेषणं दिवा चक्षुरुन्मेषणं कुर्वत् दिवाचरात्मकं; दिवा निमेषणं कुर्वत् रात्रौ चक्षुरुन्मेषणं च कुर्वत् नक्तञ्चरात्मकं च यज्जगत् (तत्) अस्मिन् भारताख्याने, कीर्तितं विविच्य कथितं, उपरि 'यच्च सर्वगतं वस्तु' इत्येतत्पर्यन्तं वक्ष्यमाणं यच्च सकलं प्रमेयमस्मिन्नाख्याने कीर्तितं, तत्सर्वं क्षन्तुमर्हसि। त्वत्सृष्टिकौशलकथनसमये न्यूनातिरिक्तमस्ति चेत्क्षन्तव्यमिति भावः॥

त्रिविधं कालसंज्ञितमित्यत्र कालात्संज्ञा अस्य सञ्जातेति कालसंज्ञितं त्रिविधं भूतभव्यभविष्यदात्मकं जगत् कीर्तितम्। एवमुत्तरत्रापि मध्ये मध्ये कीर्तितमितिपदं योजनीयम्॥

भावाभावविनिश्चयमित्यत्र जरामृत्युभयव्याधीनां भावाभावयोर्विनिश्चयो यस्मिंस्तत्, नित्यानित्यात्मकं जगदित्यर्थः॥

वेदाध्यात्मं तथैव चेत्यत्र आत्मानं परमात्मानमधिकृत्य वर्तमानमध्यात्मं, वेदोक्तमध्यात्मं वेदाध्यात्मम्॥

ज्ञानं पाशुपतं तथेत्यत्र पाशुपतं पाशुपतमतोक्तं, यज्ज्ञानं तच्च मया क्वचित्प्रसङ्गात्कीर्तितमित्यनेनोपरिक्रियमाणपशुपतिस्तोत्रादिकं न स्वमतमिति सूचितम्॥

इति नैकाश्रयं जन्मेत्यत्र दिव्यमानुषसंज्ञितमित्यनेन प्रकारेण नैकाश्रयं एक आश्रयो यस्य तदेकाश्रयं, एकाश्रयं न भवतीति नैकाश्रयं जन्मेति सम्बन्धः। दिव्यं देवसम्बन्धि, मानुषं मनुष्यसम्बन्धि, एवं सञ्जाता संज्ञा यस्य तद्दिव्यमानुषसंज्ञितम्। इदं च पशुपक्ष्यादिजन्मनः जडजन्मनश्चोपलक्षकम्। अत एव नैकाश्रयमित्युक्तम्। अन्यथा द्व्याश्रयमित्यवक्ष्यत्। अस्यैव प्रपञ्चनं तीर्थानां चैवेत्यादि। जन्मेतिपदं कल्पानामिति वक्ष्यमाणषष्ठ्यन्तपदपर्यन्तमावर्तनीयम्॥

यच्च सर्वगतमित्यत्र सर्वगतं उक्तेष्वेतेषु सर्वेषु गतं अन्तर्यामितया

स्थितं ब्रह्म चास्मिन्नाख्याने यत्कीर्तितमिति सम्बन्धः ॥

मन्ये श्रेष्ठतममिति वदता वसिष्ठपितुः स्वस्मादपि श्रेष्ठमिति सूचितम् ॥

जन्मप्रभृतीत्यत्र सत्यां निर्दुष्टायां सत्यवत्यां, जन्मप्रभृति जन्मारभ्येत्यर्थः॥

तस्मात्काव्यं भविष्यतीति वदता ब्रह्मणा आदिकवेर्भमेव योग्यमिति सूचितम् ॥

न समर्था विशेषण इत्यत्र अस्य काव्यस्य सकाशाद्विशेषणे अतिशयितग्रन्थकरणे, न समर्था इत्यन्वयः ॥

विशेषेण गृहस्थस्येत्यत्र विशेषाः गृहस्थेभ्योऽपि विशिष्यन्त इति विशेषा उत्कृष्टाः गृहस्थस्य सकाशादन्ये ये त्रय आश्रमाः ब्रह्मचारिवानप्रस्थयत्याख्या आश्रमाः । एतदात्मकं जगद्विशेषेणातिशयेन, जडान्धवधिरोन्मत्ततमोभूतं जडान्धवधिरोन्मत्तवत्तमसाऽज्ञानेन भूतमभिभूतं भवेदित्यन्वयः । तमसाऽन्धस्येति •वक्ष्यमाणत्वाद्भूतपदमभिभूतपरम् । कुटुम्बभरणोद्यतगृहस्थस्य भारताभावेऽपि (कर्मणि)प्रवृत्तिसम्भवात् ज्ञानाधिकारिभूतमाश्रमत्रयमेव गृहीतम् ॥

धर्मार्थकाममोक्षार्थैरित्यत्र धर्मार्थकाममोक्षाख्यैरर्थैः पुरुषार्थैरित्यर्थः । तथा भारतसूर्येण कीर्तितैर्निमित्तैर्नृणां तमो विनिहतमित्यन्वयः ॥

लोकगर्भगृहमित्यत्र लोकस्य गर्भगृहमन्तर्हृदयम् ॥

कर्णपर्वचितैः पुष्पैरित्यत्र युक्त इति योग्यपदाध्याहारः ॥

मौसलश्रुतिसङ्क्षेप इत्यत्र मौसलपर्व(णि)णः श्रुतिः श्रवणमेव संक्षेपः वृक्षावसानं यस्य स तथोक्तः ॥ प्राक् ब्रह्मणोऽग्रे प्रस्तावितभारतस्यैव करणप्रकारं सूतः पुनः सविस्तरं वक्तुमारभते— तस्य वृक्षस्येति ॥

युगस्यादिनिमित्तं तदित्यत्र युगस्य कृतादियुगस्य, आदिनिमित्तं आदिभूतं निमित्तं, तत् ब्रह्माण्डं, महादिव्यं अतिशयेन दिव्यं प्रचक्षते ॥

सौति ब्रह्म सनातनमित्यत्र सौति सूतिसम्बन्धि, जगत्सृष्टिकारणमित्यर्थः ॥

असच्चाप्यनुजातं चेत्यत्र असत् न विद्यते सदेव जगत्प्रलयकाले यस्मा-

त्तदसत् । अनु अनन्तरं सृष्टिकाले जातं जगद्यस्मात्तदनुजातम् । न तु अक्षैवासत्, अनन्तरं जातं च । 'सदेव सोम्येदमग्र आसीत्' 'अजमनिद्रमस्वप्न'मित्यादिश्रुतिविरोधात् ॥

**सदसदात्मकं** कार्यकारणरूपजगदन्तर्यामि । 'अत सातत्यगमन' इति धातुः । सन्तः शुभाः, असन्तो अशुभाश्च जीवाः आत्मनि स्वोदरे यस्य तद्वा ॥

**प्राचेतसस्तथेत्यत्र** प्राचेतसः दशप्रचेतसां पुत्रो दक्षः ॥

**ततः प्रजानां पतयः प्राभवन्नेकविंशतिरित्यत्र** ततः ब्रह्मस्थाण्वाद्येकादशदेवोत्पत्त्यनन्तरं, एकविंशतिः स्वायम्भुवमनोरुक्तत्वादेकमनोर्विष्णुत्वात् द्वादश मनवः, इन्द्रादिवायुपर्यन्ताः षड्लोकपालाः, उत्तरदिगधिपती सोमकुबेरौ, अधोलोकाधिपतिः शेषः, ईशानदिगधिपते रुद्रस्य, ऊर्ध्वलोकाधिपतेर्ब्रह्मणश्च पूर्वमेवोक्तत्वान्नैते लोकपालाश्चेत्येकविंशतिः ॥

**पुरुषश्चाप्रमेयात्मेत्यत्र** ऋषयः, ऋष्युपदेशात्सर्वं जगच्च यं विदुः तैरपि प्रकर्षेण आन्तं मेयो न भवतीत्यप्रमेय आत्मा यस्य स पुरुषश्च पुरुषनामको हरिश्च प्राभवत् अवतारादिरूपेण प्रादुरभूत् । सर्वस्वरूपत्वे अप्रमेयत्वविरोधादुक्त एवार्थः ॥

**एवमेतदनाद्यन्तमित्यत्र** अनाद्यन्तं प्रवाहतो नित्यत्वादाद्यन्तशून्यम् । अनादिनिधनं आदिनिधनशून्यम् । नित्यत्वे तात्पर्यद्योतनायाभ्यासः । किञ्चित्प्रवाहत आद्यन्तशून्यं, किञ्चित्स्वरूपत आद्यन्तशून्यमिति विभागसूचनार्थं वा । भूतसङ्घातः पञ्चमहाभूतसमुदाय एव कारकं कारणं यस्य । भूतसङ्घे अतो व्याप्तो नारायण एव कारणं यस्येति वा । चक्रं जगच्चक्रम् । एवं ऋतुपर्यायवदेव सम्परिवर्तत इति योजना ॥

**त्रयस्त्रिंशत्सहस्राणीत्यत्र** ब्रह्मवीन्द्रेन्द्रा इति त्रयः, एकादशरुद्राः, एकादशादित्याः, अष्टौ वसवश्चेति त्रयस्त्रिंशत्प्रधानदेवा इत्यतिसंक्षेपतः सृष्टिः । कयाचित्संख्यया त्रयस्त्रिंशच्छतानि देवा इति मध्यमदेवानामीषद्विस्तृतसंक्षेपतः सृष्टिः । ततोप्यवरदेवानां कयाचित्संख्यया मेलने सति त्रयस्त्रिंशत्सहस्राणि देवा भवन्ति । अस्य सर्वस्य संक्षेपत्वकथनाद्विस्तारतस्त्रयस्त्रिंशत्कोटय इत्यपि

ध्वनितम् । एवञ्च चतुर्धा व्यूहीकृत्य देवानां सृष्टिरिति भावः । सृष्टावेवं विभागः— यत्र तु त्रयस्त्रिंशद्देवा इत्यादिश्रुतौ देवानां गणना क्रियते तत्र त्रयो ब्रह्मविष्णुमहेश्वराः, दश रुद्राः, एको गरुडः, एकादशादित्याः, अष्टौ वसवश्चेति त्रिंशत् । मिलित्वा त्रयस्त्रिंशद्देवा इति गणना ॥

पुत्रा विवस्वतः सर्वे इत्यत्र पितृसनामानः[1] पुत्रा इति ज्ञेयम् । मनुर्वैवस्वतमनुः । 'पुरा विवस्वतः सर्वे मह्यस्तेषां तथाऽवर' इति पाठे दिवस्पुत्रादयः सर्वे विवस्वत एकादशविग्रहाः पुरा पूर्वं जातास्तथा तेषामवरः अनुजो विष्णुनामा सूर्यः मह्यः गुणतो ज्येष्ठत्वात्पूजायोग्यः । 'मह पूजाया'मिति धातुः । तस्य विवस्वतः पुत्रो देवभ्राडित्यादियोजना ॥

सम्भूता बह्वो वंशा इत्यत्र सम्भूता इत्युपलक्षणम् । सम्भविष्यन्तीत्यपि ग्राह्यम् । रहसि वेदव्यासेन विचारे क्रियमाणे कुरुपाण्डववंशस्याजातत्वाद्देवादीनां वंशाः सम्भूताः, केचन सम्भविष्यन्तीत्यपि दृष्टवानित्युत्तरेण सम्बन्धः॥

वेदैरहस्यादेस्सम्भूतत्वात्[2]—

रहस्यं त्रिविधं च यदित्यादेर्दृष्टवानित्यनेनैव सम्बन्धः । वायोरेव ब्रह्मत्वं, रुद्रस्यैव शेषत्वं, देवानां तारतम्यं, देवत्वयोग्यजीवानामेव देवपदवीत्यादि देवरहस्यम् । 'यो देवानां नामधा एक एव' 'मां विधत्तेऽभिधत्ते मां' 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिभ्यो वेदस्थहिरण्यगर्भरुद्रेन्द्रादिपदानां परमसुख्यया वृत्त्या विष्ण्वेकवाचित्वं वेदरहस्यम् । 'यत्सतां हितमत्यन्तं तत्सत्यमिति गीयत' इत्यादिवचनात् सतां हिताय क्वचिदनृतमेव सत्यमित्यादि धर्मरहस्यमिति त्रिविधं रहस्यम् । यद्वा 'पञ्चानां सहिता कृष्णारूपा पार्वत्यनिन्दिते'ति वचनादेकस्य द्रौपदीदेहस्य पञ्चदेव्यधिष्ठितत्वमित्यादि देवरहस्यम् । कुन्त्यै दुर्वाससोक्ताथर्वणमन्त्रादयो वेदरहस्यम् । सन्तानार्थं पतिनियोगाद्देवर्ष्यादिपुरुषान्तरसमागमो धर्मरहस्यम् । अथवा 'वेदान्तं च रहस्यं च बुधैरुपनिषन्मत'मिति वचनाद्ब्रह्मदेवकर्ममीमांसानां मूलीभूताः परब्रह्मदेवकर्मोपनिषद एव त्रिविधं रहस्यम् ॥

---

[1] पितृसमाननामानः. [2] वेदरहस्यादेरसंभूतत्वात्.

नीतिर्भरतवंशस्येत्यत्र नीती राजनीतिः, भरतवंशस्य विस्तारश्चेति सम्बन्धः। पुराणादावुक्ता नीतिः। पुराणादावुक्तो भरतवंशस्य विस्तारः। सहव्याख्या य इतिहासाः पञ्चरात्रादावुक्ताः। विविधाः श्रुतयश्चेति यद्ग्रन्थस्य कारणं नूतनतया क्रियमाणग्रन्थस्य कारणमुक्तं पूर्वाचार्यैस्तत्सर्वं व्यासः इह स्वविचारसमये अनुक्रान्तमकरोदिति योग्यपदाध्याहारेण योजना ॥

ऋषिः संक्षेपमब्रवीदित्यत्र संक्षिप्यते सकलोपि शास्त्रार्थोऽत्रेति सर्वशास्त्रसंग्रहरूपं भारतं संक्षेप इत्युच्यते ॥

मन्वादि भारतमित्यत्र मनवो मन्त्राः सहस्रनामाद्या ये विष्णुमन्त्राः, अस्त्रशस्त्रादीनां च गायत्र्यादयो ये मन्त्रास्तेषामभिमानी भीमो मनुरित्युच्यते। तदादि तन्महिमप्रतिपादनमेवादिर्यस्य तन्मन्वादि। असाधारण्येन भीममहिमप्रतिपादकमेव भारतमिति केचिद्विप्रा अधीयिरे। आस्तिकादि अस्ति परदेवतेति ये विदुस्ते आस्तिकाः पञ्चपाण्डवद्रौपद्याद्यास्तेषां सर्वेषां महिमप्रतिपादकमिति केचिद्विप्रा अधीयिरे। तथा उपरिचरादि एतेषां सर्वेषामुपरि, एतदुत्तमतयेत्यर्थः। चरतीति सर्वान्तर्यामी नारायणः। तदादि तन्महिमप्रतिपादकमेवेति केचिद्विप्रा अधीयिरे। द्रौपद्या अर्जुनादीनां च चरित्रस्य तत्र तत्र कथ्यमानत्वात्ते सर्वे भारतप्रतिपाद्या इति यथाश्रुतार्थवेदिनो वदन्ति। तेष्वपि प्राणरूपेण भीमस्यैव प्रविष्टत्वाद्भीमस्यैव चरित्रप्रतिपादकं भारतमिति रहस्यविद ऋष्यादयो वदन्ति। भीमस्य तेषां चान्तर्यामी हरिरेवेति सकलभारतं हरिचरित्रप्रतिपादकमित्यैकान्तिनो ब्रह्माद्या वदन्ति। अतः पक्षत्रयमप्युचितमेवेति भावः ॥

विविधं संहिताज्ञानमित्यत्र विविधं, उक्तविधया त्रिविधं, दर्शनभाषादिना बहुविधं च। संहिताज्ञानं भारतसंहिताज्ञानम् ॥

व्याख्याने यतते केचिदित्यत्र यतते यतन्ते। बहुव्याख्यानान्यप्येकसम्प्रदायमूलत्वादेकस्य व्याख्यानमिव भवन्तीति सूचनाय यतत इत्येकवचनम् ॥

तेषु जातेष्वित्यत्र तेषु शन्तनुमारभ्य परीक्षिदन्तेषु राजसु परां गतिं गतेषु सत्सु अस्मिन्मानुषे लोके ऋषिर्भारतमब्रवीत् व्याख्याय प्रवर्तयामास ॥

तदेव विशदयति— जनमेजयेनेति । भारतग्रन्थं स्वावतारानन्तरमेव हिमवच्छिखरे कृतवान् । स्वशिष्येषु वैशम्पायनादिषु तदेव व्याख्यातवांश्च । मानुषलोके प्रचारस्तु जनमेजयकाल एवेति भावः ॥

साह्यं द्वैपायनोऽब्रवीदित्यत्र साह्यं सहनशीलतां, क्षमां चेत्यर्थः (सम्यग्द्वैपायनोऽब्रवीदिति पाठे स्पष्टोऽर्थः) ॥

इदं शतसहस्राणामित्यत्र शतसहस्राणां श्लोकानामिदमुत्तमं भारतं, पुण्यकर्मणां शकुन्तलानलादीनामुपाख्यानैरुपाख्यानश्लोकैः प्रसक्तानुप्रसक्त्यागतकथाकथकश्लोकैः सह ज्ञेयम् । श्राव्यं च श्रवणीयं च । रेतोधाः पुत्रं नयतीत्यादीनां तत्र तत्र स्थितानां केषाञ्चिच्छ्लोकानां वक्ष्यमाणभारतश्लोकगणनापर्यालोचनायां लक्षादप्यधिकत्वादुपाख्यानैः सहेत्युक्तम् । लक्षसंख्याका भारतश्लोकास्त्रिसहस्रादुपरि शतं चतुस्त्रिंशच्च श्लोकाः व्यासोक्तरीत्या पर्वपर्वश्लोकगणनायां लक्षादप्यधिका भवन्ति ॥

चतुर्विंशतिसाहस्रीमित्यत्र चतुर्विंशतिसाहस्री हरिवंशश्लोकानां संख्या। उपाख्यानश्लोकैर्विना चतुर्विंशतिसाहस्री । उपाख्यानश्लोकसहस्रेण पञ्चविंशतिसाहस्रीति विवेकः ॥

ततोऽध्यर्धशतं भूय इत्यत्र ततः भारतस्य समस्तश्लोकेभ्यः भूयः अधिकफलदायकत्वेन श्रेष्ठं सर्वपर्वणां वृत्तान्तं, संक्षेपं संक्षिप्यते सर्वाऽपि भारतकथाऽत्रेति संक्षेपरूपं, अनुक्रामणं क्रमेण सकलभारतकथाकथनादनुक्रामणसंज्ञं अध्यायं प्रथमाध्यायमध्य एव एतावन्तः श्लोका इति पुनः परिच्छेदकरणादध्यायसंज्ञं, अध्यर्धशतं अधिकमर्धं यस्य शतस्य तदध्यर्धशतं, सार्धशतमिति यावत् । श्लोकसन्दर्भं कृतवानिति योजना । अयं चानुक्रमणिकाध्यायः 'दुर्योधनो मन्युमयो महाद्रुम' इति श्लोकमारभ्य 'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीदि'ति श्लोकपर्यन्ताः श्लोका इति व्यासः स्वयमेव प्रदर्शितवान् । उपरितनश्लोकास्तु फलश्लोका एव; न तु पर्ववृत्तान्तश्लोकाः । तैः सह पाठेऽपि सार्धश्लोकद्वयस्य न्यूनत्वेन [1]अध्यर्धशतसंख्यापूर्त्यभावाच्च न तेषां फलश्लोकानां-

[1]अध्यर्धशतसंख्यापूरणाभावाच्च.

मध्याये प्रवेशः। अत्रोपनिषदं पुण्यामिति॰फलश्लोकान्विना ततः पूर्वमेवास्याध्यायस्य पुण्योपनिषत्त्वेन प्रथमग्रन्थ एव परिच्छेदाच्च। इमे च श्लोकाः यथास्थितगणनायां शतादुपरि सप्तविंशच्छ्लोका एव जायन्ते। अतः कथमस्याध्यायस्य प्राक्प्रतिज्ञातसार्धशतश्लोकत्वमिति चेदित्थं— एकादशाक्षरपादचतुष्टयोपेतेष्वेकषष्टितमस्थूलश्लोकेषु द्वात्रिंशदक्षरानुष्टुप्श्लोकसंख्यया तावदेकषष्टितमश्लोका भवन्ति। तेष्वेव श्लोकेषूर्वरितद्वादशद्वादशाक्षराणां मध्ये त्रित्रिद्वादशकस्यैकश्लोकादुपरि चत्वारश्चत्वारो वर्णा उर्वरिता जायन्ते। एवं च षष्टिद्वादशकानां विंशतिश्लोका जायन्ते। एकैकश्लोककरणसमये उर्वरितचतुश्चतुर्वर्णाश्च विंशतिवारं चत्वार इति हेतोरशीतिवर्णा भवन्ति। षष्टिश्लोकानामियं संख्या। उर्वरितैकश्लोकस्थद्वादशवर्णानां प्रागुर्वरितैरशीतिवर्णैः सह योगे द्विनवतितमा वर्णा भवन्ति। ते च—'न वा एकेनाक्षरेण च्छन्दांसि वियन्ती'ति वचनात्त्रयः श्लोका जाताः। तथा मिलित्वा युक्तिलब्धा एते त्रयोविंशतिश्लोकाः सम्पन्नाः। क्वचित्क्वचित्पादे एकैकाक्षराधिक्यं तु— 'न वा एकेनाक्षरेण च्छन्दांसि वियन्ती'ति वचनादेव एकादशाक्षरात्मकत्रिष्टुप्छन्दस्येवान्तर्भूतत्वान्न पृथग्गणनायोग्यम्। एतैश्च त्रयोविंशतिश्लोकैः प्राक् सम्पादितैकषष्टितमश्लोकानां योगे सति एकषष्टितमस्थूलवृत्तश्लोका एव चतुरशीतिश्लोका जाताः। प्राक्च पाण्डुर्जित्वा (बहून् देशान्) इत्यादयः सप्तत्रिंशदनुष्टुप्श्लोकाः गणनायां सन्ति। उपरि च तमसा त्वस्य विस्तीर्णमित्यारभ्य अत्रोपनिषदं पुण्यामिति श्लोकपर्यन्तं गणनायां एकोनत्रिंशच्छ्लोका भवन्ति। इमे प्राक्तनसप्तत्रिंशच्छ्लोकाश्च मिलित्वा षट्षष्टितमसंख्याकश्लोका जाताः। एवञ्च इमे षट्षष्टितमश्लोकाः प्रागुक्तचतुरशीतिश्लोकाश्च मिलित्वा सार्धशतश्लोकाः सुखेन सम्पन्नाः। एवञ्च—'अनुक्रामणमध्यायं वृत्तान्तं सर्वपर्वणामि'ति वचनात् अत्रोपनिषदं पुण्यामित्यारभ्योक्तफलश्लोकान्विना केवलं पर्वकथाकथनाय प्रवृत्तानामेतेषामेव श्लोकानां सार्धशतश्लोकात्मकानुक्रमणाध्यायत्वं सर्वज्ञचूडामणेर्व्यासस्य ह्यभिप्रेतमिति रहस्यमपि[1] प्रेक्षावद्भिरनुसन्धेयम्। तस्माद्यथास्थितसंख्यया

[1] रहस्यमिति.

शतादुपरि सप्तविंशच्छ्लोकानेव स्वरचनाचातुर्येण शतादुपरि पञ्चाशच्छ्लोकानपि घटयन् व्यासः साक्षादघटितघटकस्य हरेरेवावतारः। 'नारदोऽश्रावयद्देवानि'त्यतः पूर्वं 'षष्टिं शतसहस्राणा'मित्यादिश्लोकद्वयमौत्तराः स्वसम्पुटिकायां पठन्ति। तत्र च लक्षादुपरि षष्टिसहस्रश्लोकाः भारतस्येत्युच्यते। तच्च—'इदं शतसहस्राणां श्लोकानां पुण्यकर्मणा'मिति प्रागुक्तवचनविरोधात् शतसहस्रिकायां संहितायामित्यभियुक्तवचनविरोधाच्च स्वकपोलकल्पनारूपमित्युपेक्षणीयम् ॥

जन्मप्रभृति पार्थानामित्यत्र तत्र वने पार्थानां जन्मप्रभृति आचारविधिक्रमोऽस्ति स्वभावादेवास्ति। मातुः सकाशात् धर्मस्य वायोः शक्रस्य अश्विनोश्च सकाशाद्धर्मोपनिषदं प्रति अभ्युपपत्तिः शिक्षा चास्ति। पितृत्वाद्धर्मादयोप्युपदिशन्तीति भावः ॥

ऋषिभिश्च सहासीनानित्यत्र ऋषिभिः सहासीनान् सुखमासीनान् पार्थान् स्वयं त एव मुनय आगत्य धार्तराष्ट्रान् धृतराष्ट्रसम्बन्धिनः सर्वान् प्रति—'शिशवः अभिरूपाः जटिलाः ब्रह्मचारिणश्च इमे इदानीमत्रागताः कुमाराः वः युष्माकं केषाञ्चिद्धृतराष्ट्रविदुरादीनां पुत्राः, दुर्योधनादीनां भ्रातरः, भीष्मद्रोणादीनां शिष्याः, अन्येषां सुहृदश्च पाण्डवाः पाण्डुपुत्रा' इत्युक्त्वा ततस्तत्रैवान्तर्हिता इति श्लोकद्वयस्य योजना ॥

हर्षाच्चुक्रुशुरित्यत्र 'क्रुश आह्वाने रोदने च' ति धातोः अट्टहासादिना उच्चस्वरं कृतवन्तः ॥

आहुः केचिन्न कस्यैते कस्येत इति चापरे। यदा चिरं मृतः पाण्डुः कथं तस्येति चापर इत्यत्र केचित्सज्जीवाः, एते आगताः पाण्डवाः कस्य न, सर्वस्यापि मनःप्रिया इत्यब्रुवन्। यतो निरपेक्षा मुनयोपि तत्प्रेम्णा इहागत्य तद्गुणानूचुरिति तेषां भावः। केचिन्मध्यमजीवाः, एते पाण्डवाः कस्य पुत्राः? पाण्डोर्वा अन्यस्य वेत्यब्रुवन्। अपरे अधमजीवाः, यदा यस्मात्पाण्डुः चिरं मृतः तस्मात्ते तस्य कथं पुत्रा इत्यब्रुवन्निति योजना (न तस्यैत इति पाठे स्पष्टोऽर्थः)॥

उच्यतां स्वागतमितीत्यत्र स्वागतमुच्यतामिति वाचः अश्रूयन्तेति सम्बन्धः ॥

दुर्योधनमुपागच्छन्नर्हणानि ततस्तत इत्यत्र राजसूये दुर्योधनस्यागतधनं प्रति अध्यक्षीकृतत्वादिति भावः ॥

स भोगान्विविधान्भुञ्जन् रत्नानि विविधानि च । कथिते धृतराष्ट्रस्य विषण्णो मलिनः कृश इति श्लोके सभायां पाण्डवैर्योऽपहसितः स दुर्योधनो विविधान् भोगान् भुञ्जन्नपि विविधानि रत्नानि धारयन्नपि विषण्णः दुःखितः, मलिनः कृशश्च तिष्ठतीति धृतराष्ट्रस्य अन्तःपुरस्थैः कथिते सति ततोऽनन्तरं सुतप्रियो धृतराष्ट्रो द्यूतमन्वजानादित्युत्तरेणान्वयः ॥

द्यूतादीननयान् पोरानित्यत्र सुतप्रियो धृतराष्ट्रः उपैक्षतेति पूर्वपदावृत्त्या योजना । पाण्डोः सुतं अर्जुनं लोमशेन सहितं मध्येमार्गं सङ्गतम् । तस्मिन् देशे सौगन्धिकपुष्पप्रदेशे। प्रश्नानुक्त्वा धर्मसूनुं प्रति प्रश्नान् पृष्ट्वेति यावत् । तेन प्रत्युत्तरे दत्ते सति सम्यगिति विब्रुवन्तं विशेषेण ब्रुवन्तं च । विराटनगरे वसतः पाण्डुपुत्रान् वसतः सदा सहैव वसतो विराटस्याप्यदृश्यमानानित्यर्थः । विराटराज्ये वसतां महात्मनां मध्ये एकरथेन धनञ्जयेनेति सम्बन्धः । गां भूमिम् । ब्रह्मलोके सदा तौ कृष्णार्जुनौ दृष्ट्वा नरनारायणौ ऋषी इति वदतः नारदस्य वचनमहं यदा अश्रौषमिति सम्बन्धः । नारदेनेति पाठे नरनारायणावृषी तौ कृष्णार्जुनौ ब्रह्मलोके नारदं दृष्ट्वा नारदेन सह सदा वदतो व्यवहारं कुरुत इति यदा अहमश्रौषमिति सम्बन्धः । कर्णदुःशासनाभ्यां बुद्धिं कृत्वा केशवस्य निश्चले निश्चलत्वे, भावप्रधानो निर्देशः । बन्धन इत्यर्थः । यदा बुद्धिमश्रौषमिति बुद्धिपदस्यावृत्त्या योजना । बुद्धिं कृतां निग्रहे केशवस्येति पाठे स्पष्टोऽर्थः ॥

यदाऽश्रौषमित्यत्र अप्रयत्ना मम पुत्रा रथाङ्गहस्ते वासुदेवे विषये, 'प्रादुरास्तां ततो दोर्भ्यां सङ्कर्षणधनञ्जयौ । दक्षिणेनार्जुनो धन्वी हली रामश्च सव्यतः' इति वचनात्, अन्विते अनु सन्धानार्थं दुर्योधनसभाप्रवेशानन्तरं

[1]केशवे निग्रहस्य. [2]प्रयत्ताः सप्रयत्नाः. [3]हली.

विश्वरूपदर्शनसमये हरेर्दक्षिणभुजं इते प्राप्ते, सभायां विश्वरूपदर्शनसमये तन्निकटस्थे फल्गुनेऽपि विपये, अथवा अन्विते कृष्णस्य पृष्ठतः प्राप्ते फल्गुने परसैन्यं फल्गु तुच्छं नयतीति व्युत्पत्त्या, पुंव्यत्यासेन वा फल्गुनः सात्यकिः तस्मिंश्च विपये ग्रहीतुकामाः बलाद्ग्रहीतुं कामवन्तः सन्तः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरि'ति वचनात्, वजानन् अवजानन् अवज्ञां कृतवन्त इत्यर्थः । यद्वा मम पुत्रौ दुर्योधनदुःशासनौ अप्रयत्नास्तत्सेनांश्च ग्रहीतुकामास्सन्तः अजानन् तौ तुच्छावजानन्निति यदा अश्रौपमिति सम्बन्धः । सन्धानार्थे भगवद्याने फल्गुनस्याभावादेवमेव योजना। शान्तनवं भीष्मं । तथा भारद्वाजं द्रोणं च। मन्त्रिणं मन्त्रकुशलं वासुदेवं प्रति। आर्षतः ऋषिसम्बन्धित्वादार्षशब्दवाच्ये एकान्ते सप्तम्यर्थे तसिः। तेषां पाण्डवानां अनु अनुकूलतया ब्रुवाणं यदा अश्रौपमिति सम्बन्धः । आशिषोऽनुब्रुवाणमिति पाठे, तेषां पाण्डवानामाशिषोऽनुब्रुवाणमिति स्पष्टोऽर्थः । एषामस्मत्सैन्यानां मध्ये कश्चिदवध्यरूपो न विद्यते। सर्वेपि भीमसेनेन वध्या एवेत्यर्थः। यद्वा एषां पाण्डवानां मध्ये कश्चिदस्मद्भटानां वध्यरूपो नेति वा । मम पुत्रस्याकौशलं दृष्ट्वा पानीयार्थं चोदितमर्जुनं, अर्जुनेन तर्पितं भीष्मं च यदा अश्रौपमित्यन्वयः॥

(यदाऽश्रौषं शक्रसूर्यौ च युक्तावित्यत्र कौन्तेयानां शक्रसूर्यावनुकूलौ शुभफलराशिगत्वेन जयायानुकूलौ) अस्मान् प्रति श्वापदान् वृकान् व्याभपन्तौ अमङ्गलरवं कुर्वन्तौ पुञ्जीभूतेषु तेषु द्वन्द्वीभूय ध्वनिकरणात् द्विवचनं बहुवचनं च। व्याभपन्त इति पाठे विभक्तिव्यत्यासात् व्याभपतः श्वापदानिति सम्बन्धः। हिंस्रा वृकादयो वनमृगाः श्वापदाः ॥

यदा द्रोणश्चित्रयोधीत्यत्र (यदा द्रोणो विविधानस्त्रमार्गानित्यत्र यदा चित्रयोधी द्रोणः समरे विविधानस्त्रमार्गान्व्यदर्शयत्) तदापि द्रष्टारः पाण्डवानेव श्रेष्ठतमान्वदन्तीति यदा अश्रौपमिति सम्बन्धः ॥

अर्जुनस्यान्तकायेत्यत्र अन्तकायान्ताय, स्वार्थे कप्रत्ययः ॥

---

[1]भागुरिरल्लोपमवाप्योरुपसर्गयोरिति. [2]सप्रयत्नाः.

यदाऽभिमन्युं परिवार्य बालमित्यत्र बहुभिः शूरैः एकस्य बालस्य हिंसितत्वेनाधर्मयुद्धकरणात् अस्मदीयानां विजयाय नाशंस इति भावः ॥

यदाश्रौषमभिमन्युं निहत्येत्यत्र क्रोशतो धार्तराष्ट्रान्प्रति सैन्धवे च विषये अर्जुनेन युक्तं योजितं, अर्जुनेन तेषु कृतमिति यावत् । क्रोधं यदाऽश्रौषमिति सम्बन्धः । अधर्मेण स्वपुत्रवधे सति अर्जुने कोपः सूचित एवेति सूचनाय युक्तमित्युक्तम् । सैन्धवार्थे प्रतिज्ञा तदभीष्टदानाय नेति सूचनाय तद्वधाय प्रतिज्ञामित्युक्तम् ॥

पाययित्वोपवृत्तानित्यत्र उप रथसमीपं प्रति वृत्तान् निवृत्तानित्यर्थः । द्रोणं प्रयुध्य प्रतियुध्य, यत्र तौ कृष्णपार्थौ स्थितौ तत्र यान्तौ पार्थौ युधिष्ठिरभीमौ यदा अश्रौषमिति सम्बन्धः । अस्मद्युद्धरङ्गस्थलं तेषां विनोदस्थानमासीत् । अतः कथमस्माकं जय इति भावः ॥

यदाऽश्रौषं कर्णमासाद्येत्यत्र (कर्णमासाद्य स्थितं वीरं भीमं कर्णेन वचोभिर्हर्षयित्वा धनुष्कोट्याऽऽतुद्य वधान्मुक्तं यदाऽश्रौषं, तदा विजयाय नाशंसे, अतः परं विजयो नास्तीति विषण्णोऽस्मीत्यर्थः ।) गृहीतस्यापि भीमस्य वधे कर्णस्यासामर्थ्याद्विजयानाशंसनमिति भावः ॥

यदाऽश्रौषं द्रोणमाचार्यमेकमित्यत्र अतिप्रबलस्य द्रोणस्य दुर्बलेनैव घातितत्वात् जयाभावशङ्का । धर्मस्याप्यभिमन्युवधाधर्मेण कारणेन तुच्छीभूतत्वादिति भावः ॥

नारायणं दिव्यमस्त्रं विकुर्वन्नित्यत्र विकुर्वन् पाण्डवविरोधिभूतं कुर्वन्नित्यर्थः । (तस्मिन् भ्रातॄणां विग्रह इत्यत्र) देवमध्ये भ्रातॄणां कश्यपपुत्रत्वेन भ्रातॄणां देवदानवानां तस्मिन् कर्णार्जुनयोर्युद्धविषये कलहे सति कर्णस्य मृतत्वात्, देवानां पाण्डवपक्षपातित्वाच्च जयाभावशङ्केति भावः । (युधिष्ठिरं शून्यमित्यत्र भीमार्जुनादिभिः शून्यं । स्वकीयवीरभटानामपि दुर्बलान्वेषित्वात् तस्यापि वधेऽसमर्थत्वाच्च जयाभावशङ्केति भावः ।) अत एव शून्यं अमर्षयन्तमिति

[1]कोपसूचित. [2]प्रतिज्ञातामित्युक्तम्. [3]अधर्मस्यापि.

चोक्तम् । द्यूतमूलं निहतमित्युक्त्या. द्यूतस्यायुःक्षयकारित्वात्तन्मूलाः सर्वेपि स्वकीयाः नङ्क्ष्यन्तीति भावः ॥

यदाऽश्रौपं शान्तमेकं शयानमित्यत्र भग्नयज्ञं भग्नमृतसञ्जीवनमन्त्रजपयज्ञम् । सरसि कृतमहाप्रयत्नस्य विफलीकृतत्वाज्जीवन्नप्ययं [1]यत्नशतेनापि नोज्जीवयितुं शक्य इति विजयानाशंसनमिति भावः ॥

यदाऽश्रौपं पाण्डवांस्तिष्ठमानानित्यत्र धर्षितं कृष्णादिभिरनिन्दितं, तान् धर्षयन्तं निन्दयन्तं मे सुतं यदाऽश्रौपमिति योजना । अमर्षणं धर्षयतः सुतं म इति पाठे अमर्षणं कोपिष्ठं मे सुतं धर्षयतः धिक्कुर्वतः पाण्डवानिति सम्बन्धः । मरणकालेपि विष्णुवैष्णवद्रूपकत्वाज्जयानाशंसनमिति प्राथमिकपाठस्य भावः ॥

मिथ्याहतं वासुदेवस्य बुद्ध्येत्यत्र हतस्य पुनरैहिकजयाशंसनाप्रसक्त्या तन्निषेधस्य व्यर्थत्वात्, येन केनाप्युपायेनास्य खलस्य वध एव कार्य इति मन्वानो हरिर्नास्य परलोके जयं दास्यतीति भावः । मिथ्याहननं तु–'निकृत्या निकृतिं हन्यादि'ति वाक्याद्धर्म एवेति हृदयम् । इतः परं श्लोकेषु जयानाशंसनं परलोकजयविषयमेव । द्रौपदेयांश्च सुप्तानिति श्लोके सुप्तहननात् परलोकजयाभावः ॥

क्रुद्धेनैषीकं चावधीद्यच्च गर्भमित्यत्र क्रुद्धेन प्रयुक्तं ऐषीकं इषीकायां मन्त्रितं ब्रह्मास्त्रम् । अत्र तु भ्रूणहत्योद्योगकरणात्परलोकजयाभावः ॥

यदाऽश्रौपं ब्रह्मशिरोऽर्जुनेनेत्यत्र अश्वत्थाम्ना मुक्तं ब्रह्मशिरोसंज्ञं ब्रह्मास्त्रं, अर्जुनेन [2]स्वस्तीत्युक्त्वाऽस्त्रेण स्वास्त्रेण शान्तम् । अत्राप्यश्वत्थाम्नो ब्रह्मचर्याख्यमहाव्रतनाशकत्वेन स्वपुत्रस्य परलोकजयाभाव इति भावः ॥

यदाऽश्रौपं द्रोणपुत्रेणेत्यत्रापि कृष्णव्यासयोरप्रियकर्मकरणात्–'भृत्यापराधः स्वामिनो दण्ड' इति न्यायेन स्वपुत्रस्य [3]साक्षादन्धतमःप्राप्त्या सुतरां जयाभाव इति भावः ॥

---

[1]यदा तेनापि नोज्जीवयितुं शक्य इति. [2]स्वस्तीत्युक्त्वाऽस्त्रेण. [3]साक्षादन्धंतमःप्राप्त्या.

शोच्या गान्धारीत्यत्र वध्वा, जात्येकवचनम्, स्नुषाभिः सह गान्धारी शोच्या। 'वधूर्जाया स्नुषा स्त्री चे'त्यमरः ॥

तमसा त्वस्य विस्तीर्णमित्यत्र अस्य मम मनः, तमसाऽज्ञानेन विस्तीर्णमासीत्; मां मोह आविशते चेति योजना। यद्वा, अस्य सर्वस्य तमसाऽज्ञानेन पुत्रभार्यास्नुपादिविषयकाज्ञानेन विस्तीर्णे मां मोहश्च आविशत इति (सम्बन्धः।) पुरुषकारेण पौरुषेण ॥

कालः सृजति तत्सर्वमित्यादौ 'कल ज्ञान' इति धातोः कालपदेन कालनियामकः सर्वज्ञो विष्णुरुच्यते ॥

(अत्रोपनिषदं पुण्यामित्यत्र अत्र भारतकथासङ्ग्रहविषये, उपनिषदं अनुक्रमणिकाध्यायरूपोपनिषदम्)॥

असत्सत्सदसच्चैवेत्यत्र असत् कार्यं, सत् कारणम्। अनेन 'विपर्ययेण तु लय' इत्युक्तः कार्यमारभ्य जायमानः संहारो लक्ष्यते। सत् कारणं, असत् कार्यम्। अनेन कारणमारभ्य जायमाना सृष्टिर्लक्ष्यते। सृष्टिसंहारावित्यर्थः। तयोरुभयोः प्रतिलोमानुलोमक्रमौ दर्शयितुमेवं प्रयोगः ॥ (यद्वा, असत् दुर्जनात्मकं, सत् सज्जनात्मकं, सदसदुभयात्मकम्। यद्वा, असत् अनित्यं, सत् नित्यं, सदसत् नित्यानित्यात्मकं चैतज्जगद्यस्मात्प्रवर्तत इत्यर्थः)॥

अत्रोपनिषदं पुण्यामित्यत्र अत्र भारतकथासङ्ग्रहविषये, उपनिषदं अनुक्रमणिकाध्यायरूपोपनिषदम् ॥[1]

(अव्यक्तादि) परं तच्च स देवः परिगीयत इत्यत्र परं अव्यक्तादिजगतोत्यन्तविलक्षणं, यद्ब्रह्म स देवः, तज्जगच्च परितः श्रुतौ गीयत इत्यर्थः। अन्यथा चशब्दवैयर्थ्यम्। यत्स्वं यत्स्वरूपम् ॥

अनुक्रमणमध्यायमहोरात्र्या च सञ्चितमित्यत्र यथा सत्यं च अनृतं च अहोरात्र्या सञ्चितं सम्बद्धम्। रात्रौ चोरपिशाचादीनां सञ्चाराद्यथाऽनृतस्य रात्र्याश्च सम्बन्धः, दिवा देवर्षिमनुष्यादीनां सञ्चाराद्यथा सत्यस्य

[1] एतद्व्याख्या क्वचित्पूर्वत्र दृश्यते.

अहश्च सम्बन्धस्तथा भारतश्रावपुण्येन सकलभारतश्रवणजनितपुण्येनानुक्रामणमध्यायं सञ्चितं सम्बद्धं सन्तः प्राहुरिति योजना । नवनीतं यथा दध्न इत्युत्तरश्लोकात् यथातथापदयोरत्राप्यावृत्तिः । उत्तरश्लोकेपि नवनीतादिकं यथा दध्यादेः सारभूतं तथा सङ्ग्रहाध्यायोऽपि भारतस्य सारभूत इति दार्ष्टान्तिकमध्याहृत्य योजना कर्तव्या । सकलभारतश्रवणजनितपुण्यं अनुक्रमणिकाध्यायश्रवणमात्राद्भवतीति भावः । लोके गोब्राह्मणहननाद्यथा महापापं तथा गोब्राह्मणरक्षणात् महापुण्यमित्यादिव्यवहारदर्शनात्सम्बन्धमात्रघटनाय हीनोऽपि दृष्टान्त इति ज्ञेयम् ॥

मामयं प्रचलिष्यतीत्यत्र चलिष्यति स्वार्थाच्चालयिष्यतीत्यर्थः ॥

श्रावयित्वार्थमश्नुत इत्यत्र अर्थे पुरुषार्थम् ॥

आर्षं श्रद्धासमन्वित इत्यत्र आर्षं ऋषियोग्यम ॥

ध्रियमाणं ततोऽधिकमित्यत्र ततो वेदात्, महत्त्वे गुरुत्वे च विषयेऽधिकमुच्चं यथा भवति तथा ध्रियमाणमासीत् ॥

**तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः । प्रसह्यवित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्क** इत्यत्र स्वाभाविको वेदविधिरित्यत्रोक्तं स्वाभाविकपदं विशेष्यलिङ्गानुसारेण सर्वत्रान्वेतव्यम् । स्वाभाविकं श्रौतविधिस्वभावादेव प्राप्तं; न तु फलार्थितयेत्यर्थः । तपः यतिवानप्रस्थयोर्धर्मभूतं तपः कल्कः 'कल बन्धन' इति धातोः बन्धनं न; (किं नाम) निवृत्तधर्मरूपत्वान्मोक्षहेतुरेवेति भावः । एवं ब्रह्मचारिणां स्वाभाविकमध्ययनं, गृहस्थानां स्वाभाविको वेदविधिः वेदविहितं यज्ञादिकर्म, क्षत्रियाणां स्वाभाविकं प्रसह्यवित्ताहरणं प्रकर्षेण सहनयोग्यषष्ठांशरूपवित्ताहरणं, अपराधिनि प्रसह्य बलात्कारेण वित्ताहरणं च पूर्ववन्निवृत्तिकर्मरूपत्वात्कल्को न । तान्येव तपआदीन्येव भावेन मोक्षातिरिक्तफलकामनया उपहतानि विष्णोरप्रीतिजनकत्वेनान्तवत्फलत्वेन च नष्टप्रायाणीत्यर्थः । विष्णुलोकप्रापकमोक्षकामनाया अविघातकत्वात्तद्व्यवच्छेदाय भावोपहतानीत्युक्तम् । येन भावेन उपरि महाफलोप-

[1]निवृत्तिधर्मरूपत्वान्मोक्षहेतुरेवेति.

हतिर्भवति स एव भावो वर्ज्य इति भावः । कल्कः बन्धनं, पुनः पुनः संसारबन्धहेतुभूतमित्यर्थः ॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि कविकुलतिलकभानिसमीरश्रीवादिराजतीर्थपूज्यचरणविरचितायां लक्षालंकाराख्यटीकायां पदार्थानुक्रमणं नाम प्रथमोऽध्यायः ।

---

## ॥ द्वितीयोऽध्यायः ॥

### (अथ पर्वसङ्ग्रहपर्व २)

**अक्षौहिण्याः प्रसङ्ख्यानमित्यत्र** सहस्राण्येकविंशतिः एकविंशतिसहस्राणीत्यर्थः । उपरि एकविंशतिसहस्रादुपर्यष्टौ शतानि भूयः सप्ततिश्च । इयं रथानां संख्या । एवमेव गजानामपि संख्या ॥

**ज्ञेयं शतसहस्रमित्यत्र** नराणां शतसहस्रं लक्षमित्यर्थः[1] । तथा नव सहस्राणि त्रीणि शतानि च पञ्चाशच्च । इयं नराणां संख्येत्यर्थः ॥

**पञ्चषष्टिसहस्राणीत्यत्र** अश्वानां षष्टिसहस्राणि, तदुपरि पञ्चसहस्राणि । सहस्राणीति पदमुभयत्रापि सम्बध्यते । शतानि च दशोत्तराणि षट्, षट् शतानि तदुपरि दश चेत्यर्थः । अनीकिन्याः दशगुणतया गणने सति एवमस्माभिरुक्तप्रकारेण रथादीनां संख्या सम्पन्ना भवति । अस्याश्चतुरङ्गसेनासंख्याया मेलने सति या संख्या तामक्षौहिणीमाहुः । इयं च अक्षौहिणीसंख्या चतुरङ्गसेनागणनायामेव । न तु धनादिगणनायाम् । धनादिगणकास्तु क्षोणी महाक्षोणी इत्येव संख्यां वदन्ति । न त्वक्षौहिणीम् । अत एव 'अक्षौहिणी सेने'ति वैयाकरणा आहुः ॥

**पिण्डेनाष्टादशैवेत्यत्र** पिण्डेन अन्नानां[2] पिण्डीकरणमिव कुरुपाण्डवसेनानां यदन्योन्यमेलनं स पिण्ड इत्युच्यते । तृतीया सप्तम्यर्थे । पिण्डीकरणे सतीत्यर्थः ॥

---

[1] इत्येवं संख्या वदन्ति । [2] अन्नादिपिण्डीकरणमिव.

इतिहासोत्तमे ह्यस्मिन्नर्पिता बुद्धिरुत्तमेत्यत्र स्वरव्यञ्जनयोः स्वरे व्यञ्जने च, जात्येकवचनं, स्वरेषु व्यञ्जनेषु च । कृत्स्ना परिपूर्णा, परिपूर्णतया उच्चारितेति यावत् । लोकानित्यत्र पुनातीति योग्यक्रियाध्याहारः ॥

अस्य प्रज्ञाभिपन्नस्येत्यत्र प्रज्ञया सर्वज्ञव्यासप्रज्ञया अभिपन्नस्य प्राप्तस्य कृतस्येत्यर्थः ॥

पर्वानुक्रमणं पूर्वं द्वितीयं पर्वसङ्ग्रह इत्यत्र पौष्यादिभविष्यत्पर्वान्तशतपर्वणां अनुक्रमणं क्रमेण निरूपणं पूर्वंपूर्वं क्रियमाणम् । पर्वसङ्ग्रहः तत्तत्पर्वसु प्रतिपाद्यप्रमेयाणां सङ्ग्रहः सङ्क्षेपेण निरूपणं क्रियत इति यत् तत् द्वितीयं, पर्वानुक्रमणादुपरितनमित्यर्थः ॥

पौष्यं पौलोममास्तीकमित्यत्र पौलोमं पुलोमा नाम भृगुऋषेः पत्नी तत्सम्बन्धि पौलोमम् ॥

आदिवंशावतारणम् । ततः सम्भवपर्वोक्तमद्भुतं देवनिर्मितमित्यत्र ततः आस्तीकपर्वानन्तरं आदिवंशावतारणं आदिवंशश्च अवतारणं च आदिवंशावतारणे इति प्राग्द्वन्द्वसमासः । 'तदा निक्षत्रिये[1] लोके भार्गवेण कृते सति । ब्राह्मणान् क्षत्रिया राजन् गर्भार्थिन्योऽभिचक्रमुरि'त्यादिनोक्तो भार्गवरामात् सकलक्षत्रसंहारे जाते सति पुनः क्षत्रियस्त्रीषु ब्राह्मणेभ्यो जातो यः क्षत्रियवंशः स एक आदिवंशः । 'ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च । जज्ञिरे राजशार्दूल यथाकामं[2] दिवौकस' इत्यादिनोक्तं यद्देवानामंशावतरणमिदमेकमंशावतारणम् । हन्त ते कथयिष्यामीत्यारभ्य, अत्र वंशः समाप्यत इत्यत्र समापितो देवादीनां च दानवादीनां यो वंशः अयमपर आदिवंशः ॥

श्रोतुमिच्छामि तत्वेन मानुषेषु महात्मनाम् । जन्म कर्म च भूतानामेतेषामानुपूर्वश[3] इत्यत्र मानुषेषु भूतानां जातानामेतेषां पूर्वोक्तानां देवादीनामित्यारभ्योक्तं, 'इति देवासुराणां ते गन्धर्वाप्सरसां तथा । अंशावतरणं राजन्नि'त्यत्र समापितं तेषामेव दानवानां देवानां च एकैकांशेन यद्भूमाववतरणमिदमपरमंशावतरणम् । एवं द्विविधावादिवंशौ द्विविधे चावतारणे यत्र

[1]तदा निःक्षत्रिये. [2]तथा कामं. [3]आनुपूर्व्यशः. [4]देवदानवादीनां.

क्रमेणानुवर्ण्येत तदादिवंशावतारणमिति सम्भवपर्वणः विशेषणम् । न तु तदपि पर्वान्तरम् । देवनिर्मितं व्यासरूपिणा साक्षाद्देवेन नारायणेनैव निर्मितम् । अस्याः सम्भवपर्वकथायाः वध्यानां दैत्यानां घातकानां देवानां च कथारूपत्वेन अतिपुण्यकथात्वद्योतनाय विशेषणत्रयमिदम् ॥

पर्व चैत्ररथं तथेत्यत्र चित्ररथाख्यगन्धर्वकथाकथकं चैत्ररथं पर्व ॥

सुभद्राहरणादूर्ध्वं ज्ञेयं हरणहारितमित्यत्र हरेरिदं हारि तस्य भावः हारिता हरणस्य सुभद्राहरणस्य हारिता हरिसम्बन्धिता हर्यनुकूलतेति यावत्; हरणे सति हारितं पलायितं अन्वागतबलं वा, महायुद्धकरणेऽपि सकल्यादवानामङ्गेषु शरघाताकरणेन हरणस्य हारिता मनोहारिता वा, कन्यया सह, ह्रियत इति व्युत्पत्त्या हरणस्य कन्याधनस्य हारिता इन्द्रप्रस्थं प्रति नेतृता यत्र प्रतिपाद्यते तत्पर्व हरणहारितमित्युच्यते । हारिकमिति पाठे हरणस्य कन्याधनस्य हारः हरणं यत्र निरूप्यते तद्धरणहारिकमिति । तच्च सुभद्राहरणात् सुभद्राहरणाख्यपर्वणः ऊर्ध्वं ज्ञेयमित्यर्थः ॥

मन्त्रपर्व ततः परमित्यत्र मन्त्रपर्व राजसूयादेरालोचनपर्वेत्यर्थः ॥

ततोऽर्घ्याहरणं पर्वेत्यत्र अर्घ्याहरणं [1]अग्रपूजायां कृष्णस्यार्घ्याद्याहरणं पर्व ॥

अनुद्यूतमतः परमित्यत्र द्वितीयवारं कृतं द्यूतमनुद्यूतम् ॥

कुरुराजस्य धीमत इत्यत्र कुरुराजोऽर्जुनः ॥

यक्षयुद्धमतः परमित्यत्र यक्षयुद्धं भीमादीनां यक्षवाक्योल्लङ्घनेन जलपाने सति यक्षकोपेन भूमौ निपतनं, धर्मराजस्य वाग्युद्धं वा ॥

पर्व प्रायोपवेशनमित्यत्र लज्जया दुर्योधनप्रायोपवेशनम् ॥

व्रीहिद्रोणकमाख्यानमित्यत्र द्रोणकं प्रस्थविशेषः । व्रीहीणां द्रोणकं मुद्गलेन दुर्वाससे दीयमानं यत्र प्रतिपाद्यते तद्व्रीहिद्रोणकमित्यर्थः ॥

कुण्डलाहरणात्तत्रेत्यत्र इन्द्रेण कर्णस्य कुण्डलाहरणात् प्रतिपादितादेकं पर्वेत्यर्थः ॥

---

[1]अर्घ्यपूजायां.

आरणेयं तत इत्यत्र मृगरूपेण यमेन ब्राह्मणस्यारणीभाण्डहरणमारणेयम् ॥

कीचकानां वधं पर्वेत्यत्र 'षष्ठ्या आक्रोशे' इति वचनात् कीचकानां वधो यत्र प्रतिपाद्यते तत्कीचकानांवधमित्यलुक्समासः ॥

यानसन्धिरित्यत्र द्रुपदपुरोहितस्य सन्ध्यर्थे यानं यानसन्धिः ॥

कीर्त्यते चापत्रोपाख्यानमित्यत्र अपगतं त्रं रक्षकं यस्य तदपत्रं सेनानायकरहितं विप्रवैश्यशूद्राख्यवर्णत्रयसैन्यं, तस्य जयो नाभूदिति विप्रस्य सेनापत्येऽभिषेचनं च यत्र दुर्योधनेन कीर्त्यते तदपत्रोपाख्यानम् ॥

श्वेतस्य वासुदेवस्येत्यत्र श्वेतस्य राज्ञो बहुकथाश्रयं वासुदेवस्योपाख्यानमित्यर्थः ॥ (यद्वा श्वेतस्य बलरामस्य, वासुदेवस्य च बहुकथाश्रयमुपाख्यानमित्यर्थः ॥)

जम्बूपण्डविनिर्माणमित्यत्र जम्बूपण्डस्य जम्बूद्वीपस्य विनिर्माणं करणं यत्र सञ्जयेन धृतराष्ट्राय वर्ण्यते तज्जम्बूपण्डविनिर्माणम् ॥

भूमिपर्व तत इत्यत्र भूगोलं वर्णयत्पर्व भूमिपर्वेत्यर्थः ॥

सारस्वतं तत इत्यत्र सरः अगाधस्थलं केचित् क्वचिद्यस्यां सा सरस्वती, नाम्ना च प्रत्यक्सरस्वती तत्सम्बन्धिनी कथा यत्रोच्यते तत्सारस्वतम् । सरस्वत्याः सम्बन्धि सारस्वतम् ॥

कुरुराजस्य धीमत इत्यत्र कुरुराजस्य धर्मराजस्य ॥

पुत्रदर्शनमेव चेत्यत्र पुत्रदर्शनं धृतराष्ट्रस्य व्यासप्रसादान्मृतदुर्योधनादीनां दर्शनम् ॥

समासो भारतस्येत्यत्र समासः सङ्कोचेन कथनम् । पर्वणि पर्वणि विद्यमानकथायाः सङ्ग्रहो यत्र स पर्वसङ्ग्रह इति समासस्य विशेषणम् । पर्वपर्वस्थकथायाः सङ्कोचेन कथनमिति यावत् ॥

उदङ्कस्योपवर्णितमित्यत्र उदङ्कस्य उदङ्कनामकऋषेः ॥

---

[1]जम्बूखण्ड. [2]क्वचिद्यस्यां सा सरस्वती.

श्लोकाग्रं च सहस्रस्येत्यत्र श्लोकाग्रं श्लोकप्रमाणम् । 'अग्रं पुरःशिखा-मानश्रेष्ठाद्रिषु फलादिष्वि'त्यमरः ॥

प्रसूतिर्वरदानजेत्यत्र शूद्रयोनावपि व्यासस्य पुत्रो भवेति वरदाना-ज्जाता प्रसूतिः ॥

सुरङ्गोपक्रमक्रियेत्यत्र सुरङ्गो नाम लाक्षागृहे भूमिं खनित्वा अन्त-र्मार्गकरणम् ॥

अज्ञातचर्या पाण्डूनामित्यत्र एकचक्रानगरे ब्राह्मणवेषेण स्वस्वरूपगा-च्छाद्य सञ्चरणम् ॥

तापत्यमथ वासिष्ठमित्यत्र तापत्यं तपती नाम कुरुवंशमूलीभूतकुरो-र्माता तत्सम्बन्ध्युपाख्यानं तापत्यम् ॥

द्रौपद्या दैवविहितो विवाहश्चाप्यमानुष इत्यत्र अमानुषः मानुषागो-चरो दैवविहितो विवाहः प्रतिवासरं कन्यायाः, प्रतिदिनं यो विवाहः स इत्यर्थः । प्रसिद्धद्रौपदीविवाहस्य मनुष्यकृतत्वेन मनुष्यगोचरत्वेन चामानुषत्वदैवविहितत्व-योरयोगाद्दैनन्दिन एवायं विवाहः । यद्वा द्रौपद्या एकस्त्रीत्वदर्शनान्मानुषाणा-मयोग्यतया भातः देवैस्तस्या एव दिव्यदृष्ट्या पञ्चस्त्रीत्वदर्शनात् विहितश्च प्राथमिक एव विवाहः ॥

उलूप्या सह सङ्गम इत्यत्र उलूपी नाम नागकन्यका ॥

महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भव इत्यत्र शार्ङ्गा नाम काकाः कोकिला इतिवत् बहुसन्तानवन्तः पक्षिषु जातिविशेषाः । शार्ङ्गस्य पक्षिणः पत्नी शार्ङ्गी । पूर्वजन्मनि मन्दपालाख्यऋषिर्बहुसन्तानलाभाय स्वयमपि शार्ङ्गो भूत्वा जरितानाम्न्यां शार्ङ्गजातौ जातायां पक्षिण्यां पुत्रानजनयदिति कथां सङ्ग्रहीतुं शार्ङ्ग्यां तनयसम्भव इत्युक्तम् । स्वार्थे कप्रत्यय इति वचनात् शार्ङ्गका इति च तत्र कथिताः ॥

किङ्कराणां च दर्शनमित्यत्र सभास्थितधर्मराजकैङ्कर्यार्थं नानादेशा-

[1]दैवविहितो. [2]दैवः [3]इति यावत्. [4]जरितारिनाम्न्यां.

दागतानां ऋषीणां राज्ञां द्युलोकादागतानां गन्धर्वाणां किन्नराणां अप्सरसां च तस्यां सभायामेव परितो दर्शनं किङ्कराणां दर्शनम् । मूलरूपविवक्षया ऋषयोपि किङ्करा इति भावः ॥

मैत्रेयशापोत्सर्गश्च विदुरस्य प्रवासनमिति कथाद्वयं पाण्डववनगमनानन्तरं धृतराष्ट्रसभायामिति ज्ञेयम् ॥

तत्किर्मीरवधाख्यानमित्यत्र तस्मिन् काम्यकवने यः किर्मीरवधस्तत्किर्मीरवधाख्यानं, मूले, कृतमित्यर्थः ॥

स्वर्गे प्रवृत्तिरित्यत्र अर्जुनस्य स्वर्गे प्रवृत्तिरिति सम्बन्धः ॥

यत्र मन्दारपुष्पार्थ इत्यत्र मन्दान् आ समन्तात् रमयतीति मन्दारं सौगन्धिकम् ॥

लोपामुद्राभिगमनमित्यत्र लोपामुद्रा नामागस्त्यपत्नी 'अगस्त्यः कुम्भसम्भवः । मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी'त्यमरः ॥

इन्द्राग्नी यत्र धर्मश्चेत्यत्र शिविं नृपं जिज्ञासन्तौ श्येनकपोतरूपाविन्द्राग्नी यत्र प्रतिपादितौ, धर्मः शरणागतपरिपालनाख्यधर्मश्च प्रतिपादितः ॥

सौकन्यकमुपाख्यानमित्यत्र सुकन्या नाम शर्यातिनृपतेः[1] पुत्री, तत्सम्बन्धि सौकन्यकम् ॥

जन्तूपाख्यानमत्रैवेत्यत्र जन्तुर्नाम सोमकाख्यनृपतेः पुत्रः, तस्योपाख्यानं जन्तूपाख्यानम् । अत्र अरण्यपर्वणि । यत्र पुत्रेण प्राग्जातेन जन्तुनामकेनायजत् स सोमकस्तस्य पुत्रस्य वपामुद्धृत्य वपया होमे क्रियमाणे तद्धूमाघ्राणनमात्रेण शतपत्नीनां गर्भे सति मृतजन्तुज्येष्ठकं पुत्रशतं लेभ इति भावः ॥

अष्टावक्रीयमत्रैवेत्यत्र अष्टावक्राख्यऋषिः तत्सम्बन्ध्युपाख्यानमष्टावक्रीयम् । यत्र उपाख्याने वन्दिनः जनकराजस्य स्तुतिपाठकान्[2] विनिर्जित्य[3] सागरं प्राप्तं सागरे निपातितं पितरं कहोळनामानं ऋषिरष्टावक्रो लब्धवान् । वरुणसुतः कश्चिद्विद्वान् वन्दी जनकराजस्य द्वारि स्थित्वाऽऽगतान् ब्राह्मणान् प्रति धर्मे

---

[1]शर्य्यातिनृपतेः. [2]वन्दिनं जनकराजस्य स्तुतिपाठकं. [3]विजित्य.

पृच्छति । उत्तरंदानेऽसमर्थान् विप्रान् समुद्रजले निक्षिपति । एवमष्टावक्रपितुः कहोळस्यापि पराजये सति तं समुद्रजले निक्षिप्तवान् । ततोऽष्टावक्रः स्वयमागत्य प्रश्नानामुत्तरं दत्वा वन्दिनं पराभाव्य तेनोदके निपातितं, स्वपुत्रे तस्मिन्नेव वन्दिनि प्रीत्या वरुणेनाविहिंसितं च स्वपितरं कहोळं अन्यांश्च विप्रान तन्मुखेनैव लब्धवानिति वक्ष्यमाणकथायाः सङ्ग्रहोऽयम् ॥

(आरणेयमुपाख्यानमित्यत्र) यत्र धर्मानुशासनमिति पाठे स्पष्टोऽर्थः। यत्र धर्मोन्वगात्सुतमिति पाठे विभक्तिव्यत्यासेन सुतं धर्मसुतः युधिष्ठिरः, धर्मः धर्मं मृगरूपं स्वपितरं अन्वगात अरणीभाण्डलाभायान्वगमदिति योजना ॥ (यद्वा धर्मो यक्षरूपी मृगरूपी यमः सुतं स्वसुतं युधिष्ठिरं अन्वगात् वरान्प्रदातुमनुकूलरूपोऽगात ॥)

उपायपूर्वं शौण्डः स्यादित्यत्र सामाद्युपायपूर्वं सर्वोपि लोकः शौण्डः नीतिकुशलः स्यादिति लोकशिक्षार्थं कृष्णेन कर्णोऽनुमन्त्रित इति योजना । उपायपूर्वं शौण्डीयानिति पाठे अतिशयेन शौण्डः शौण्डीयानिति कृष्णस्यैव विशेषणम् ॥

श्वो भाविनि महायुद्धे दूतस्तु क्रूरवादिनेत्यत्र क्रूरं वदेति वादिना दुर्योधनेन ॥

आख्यानं यत्र पौराणामित्यत्र पौराणां त्रिपुरवासिनामित्यर्थः ॥

हंसकाकीयमाख्यानमित्यत्र हंसकाकाभ्यां दूरगमनविषये विवादे कृते सति किंञ्चित्कालं त्वरया गतः काकः पुनरशक्तः सन् वृक्षाग्रे निषसाद । हंसस्तु पूर्वमारभ्य शनैः शनैर्गच्छन् सुखेन मानससरोवरं प्रति जगाम । एवं गर्वी त्वं कर्ण ! आरब्धकार्यस्य नान्तं पश्यसि । अर्जुनस्तु नाहंवादी क्षमावानारब्धकार्यस्यान्तं सुखेन गमिष्यतीत्येकाक्षेपसंहितं हंसकाकयोः सम्बन्ध्याख्यानं हंसकाकीयम् । अत्रैव कर्णपर्वण्येव ॥

सरस्वत्याश्च तीर्थानामित्यत्र सरस्वत्याः प्रत्यक्सरस्वत्याः नद्याः,

[1]कंचित्कालं. [2]गमिष्यतीत्येवमाक्षेपसहितं.

तीर्थानां तन्निकटस्थानां उपदेवनदीनदत्रितकूपादितीर्थानां पुण्यता परिकीर्तितेति योजना ॥

अविमोक्ष्यामि दंसनमित्यत्र दंसनं कवचम् ॥

अपाण्डवाय च रुषेत्यत्र अपाण्डवाय अपाण्डवत्वाय ॥

मैवमित्यब्रवीत्कृष्ण इत्यत्र तद्वचः अश्वत्थाम्नः प्रतिज्ञारूपं वचनं शमयन् स्वसामर्थ्येन व्यर्थीकुर्वन् कृष्णः एवं मा न स्यादेव। सत्यसन्धस्य श्रीकृष्णस्य प्रतिज्ञाग्रे अश्वत्थाम्नः प्रतिज्ञा मिथ्यैवाभूदिति भावः ॥

कृष्णद्वैपायनादीनां शापाचान्योन्यकारितेत्यत्र शापात् 'पूयशोणितगन्धाङ्गो भवे' दित्यादिरूपेणाश्वत्थाम्नि कृष्णकृतशापान्निमित्तात्, अनन्तरं वा, ल्यब्लोपनिमित्ता पञ्चमीति वचनात् तं शापमनुसृत्य वा, कृष्णद्वैपायनादीनामन्योन्यकारिता अन्यस्य अन्येनापि करणं अन्योन्यकारिता नाम। एवञ्चान्यस्य कृष्णकृतशापस्यान्यैर्व्यासादिभिरपि कारिता अनुमत्या कर्तृता अन्योन्यकारितेत्युक्तं भवति। व्यासकृतानुमतौ नारदादीनामप्यन्तर्भावादादिपदं बहुवचनञ्च। लोके तु अन्यस्य घटस्य अन्यं पटं प्रति कारित्वं, पुनरन्यस्य तस्य पटस्य अन्यं घटं प्रति कारित्वं अन्योन्यकारित्वमित्यगत्या अन्योन्यपदयोरावृत्त्या योजना। इह तु लाघवात् अन्यस्यान्येनापि कारिता अन्योन्यकारिता। अतो नापूर्वमिदम् ॥

यद्यपि तोयकर्मणि सर्वेषामित्यादिकं स्त्रीपर्वान्तिमाध्यायप्रमेयम्। तथापि सर्वेषां राज्ञामेवोदकदानं कृतम्। कृष्णशापाभिभूतचित्तेन कल्याविष्टेन अत एव कृष्णावमन्त्रा अश्वत्थाम्ना मृतस्यापि स्वपितुर्ब्राह्मणस्य जलदानाद्यौर्ध्वदैहिकं कर्म न कृतमिति सूचनार्थं प्रसङ्गादिह कथितम्। अत एवोपरितनस्त्रीपर्वार्थसङ्ग्रहेऽस्याकथनम् ॥

सौप्तिकैषीकसम्बन्ध इत्यत्र सुप्तौ कृतं धृष्टद्युम्नादीनां हननं सौप्तिकं, ऐषीकं इषीकायां प्रयुक्तं ब्रह्मास्त्रमैषीकं तयोः सम्बन्धः प्रतिपादकत्वं यस्मिंस्तत्तथोक्तम् ॥

---

[1]दंशनं.

शस्त्रस्पर्शहता युधीत्यत्र शस्त्रसमानक्रूरैरकाख्यतृण (विशेष) स्पर्शहताः ॥

आपाने पानगलिता इत्यत्र आ सम्यक् मद्यपाने सति तेन पानेन गलिताः दुर्बुद्धौ पतिताः ॥

एरकारूपिभिः शस्त्रैरित्यत्र एरकाः लवणसमुद्रतीरस्थक्रूरतृणविशेषाः ॥

शरीरं वासुदेवस्येत्यत्र मोहार्थं कृष्णेन प्रदर्शितं प्राकृतशरीरम् । न तु विश्वम्भरस्वशरीरम् । तथा सति विश्वस्यापि दाहप्रसङ्गादिति भावः ॥

लोकाः संविधयस्त्रय इत्यत्र सम्यग्विधिः निर्माणनं विधिविहितकरणं वा येषु त इत्यर्थः ॥

संशयं चात्र जग्मिवानित्यत्र संशयं प्राणसंशयं, तथा मणिदर्शनं च उलूप्या[1] पातालादानीतमृतसञ्जीवनमणेर्दर्शनं च (जग्मिवानिति सम्बन्धः।) वैष्णवं धर्मं, अयुध्यतः पितामहस्य भीष्मस्य हननेन जातपापस्य प्रायश्चित्तार्थे स्वपुत्रेण बभ्रुवाहेनैव वधो[2] जात इति यत् इमं वैष्णवं विष्णुप्रीतिकरत्वात् वैष्णवं धर्मं चात्रैव उलूपी अर्जुनायाब्रवीत् ॥

मरुद्दर्शनमित्यत्र अत्र यज्ञे मरुतां देवानां दर्शनं मरुद्दर्शनम् । पुनरप्यापर्वान्तं वैष्णवं धर्ममेव व्यासोऽस्मिन् पर्वणि सविस्तरमाचख्यौ ॥

अस्याख्यानस्य विषय इत्यत्र पुराणं मध्ये मध्ये भारतप्रशंसाकर्तृपुराणम् ॥

अन्तरिक्षस्य[3] विषय इत्यत्र अन्तः द्यावापृथिव्योर्मध्ये ईक्ष्यत ईत्यन्तरिक्षः[4] सूर्यः । चतुर्विधाः ब्राह्मणक्षत्रियवैश्यशूद्राः ॥

क्रिया गुणानामित्यत्र क्रिया नानाविधग्रन्थक्रिया तत्रत्यगुणानाम् ॥

अभिजात इवेश्वर इत्यत्र अभितः जातः मत्स्यकूर्मादिरूपेणाविर्भूतः ईश्वरो नारायण इव ॥ श्रीः ॥

इति द्वितीयोऽध्यायः ।

---

[1] उलूपीवचनाज्जग्मिवानिति पूर्वक्रियया सम्बन्धः. [2] बन्धः. [3] अन्तरीक्षस्य. [4] इत्यंन्तरीक्षः.

## ॥ तृतीयोऽध्यायः ॥
(पौष्यपर्व ३)

तत्राभ्यागच्छत्सारमेय इत्यत्र सारमेयः श्वा । 'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । शुनको भषकः श्वा स्यादि'त्यमरः ॥

तस्य माता सरमेत्यत्र सरमा शुनी । 'सरमा शुनी'त्यमरः ॥

अन्तरेण महादेवकृत्यामित्यत्र महतो देवस्य नारायणस्य द्रोहरूपकृत्यामन्तरेण विनेत्यर्थः ॥

तं यदेनं तस्मात्सहसीत्यत्र यत् यदि तं द्विजाभीष्टदातारं एनं मम पुत्रं तस्माद्द्विजाभीष्टदानात्सहसि सोढासि कस्माद्दत्तमिति न पृच्छसि ततस्तर्हि नयस्वेति योजना । यद्येतत्सम्पादयसीति पाठे स्पष्टोऽर्थः ॥

तं च तं देशमित्यत्र तं तक्ष(क)स्थानभूताश्मानं, सोऽश्मा यत्र तिष्ठति तं देशं कुरुक्षेत्रप्रदेशं चेत्यर्थः ॥

धौम्यो नामायोद इत्यत्र आयोदो धौम्यः आयोदधौम्य इत्यर्थः ॥

केदारखण्डं बधानेत्यत्र केदारखण्डं केदारस्य सस्योत्पत्तिक्षेत्रस्य खण्डं जलवारणाय परितः कृतसूक्ष्मसेतौ कचित्कदाचिज्जलप्रस्रवणाय कृतखण्डं बधान (बध्नीहीत्यर्थः) ॥

भवत्वेवं करिष्यामीत्यत्र भवतु स्वदेहदण्डनेनापि गुरुसेवा भवतु । अत एवं करिष्यामीत्यपश्यत् ॥

तस्माद्भवानुद्दालक एव नाम्ना भवत्वित्यत्र उद्दल्य केदारखण्डं दा(र)ल्यति विदारयतीत्युद्दालको नाम्ना भवत्वित्यर्थः । इतः परं त्वं गुरुसेवाङ्कितनाम्नैव कथ्यस इति भावः ॥

पीवानमेव दृष्ट्वेत्यत्र पीवा पुष्टः तेन त्वया ॥

एवं वर्तमानो लुब्धोसीत्यत्र द्विवारमन्नयाचनादत्ते लुब्धः ॥

प्रपूर्वगौ पूर्वजौ चित्रभानू इत्याद्यश्विस्तोत्रस्येत्थं योजना— प्रेक्षुप-सर्गस्य प्रशंसामीति सम्बन्धः । पूर्वगौ—सर्वेषामग्रेसरौ पूर्वजौ—जगति पूर्वं जातौ

चित्रभानू—विचित्रप्रकाशवन्तौ तापनौ—द्विष्तां सन्तापकारिणौ अनन्तौ—अमृतपायित्वान्नाशरहितौ दिव्यौ—देवतावर्गगतौ सुपर्णौ—शोभनरथवन्तौ, 'पत्रं पर्णं च वाहन'मिति वागुरिः। अरजौ—रजोगुणरहितौ विमानौ—विगताभिमानौ विश्वा—विश्वानि भुवनानि अधिक्षिपन्तौ—स्वमहिम्ना धिक्कुर्वन्तौ हे अश्विनौ दस्रौ! गिरा—स्तुतिरूपगिरा प्रशंसामीति प्रथमश्लोकस्यार्थः॥

हिरण्मयौ शकुनी इत्यत्र हिरण्मयौ—सुवर्णालङ्कृतौ शकुनी—आरोग्यकरणेन शकुं शक्तिं नयतः प्रापयत इति शकुनी साम्परायौ—साम्परायो मोक्षः तद्वन्तौ 'अर्श आदिभ्योऽजि'ति वचनात्। साम्परायां आपदि अयः प्राप्तिर्ययोस्ताविति वा, 'अय पय गतावि'ति धातुः। भक्तानामापदि तद्रक्षणायागच्छन्तौ। सुनसौ—शोभननासावन्तौ वैजयन्तौ—वै सम्यक् जयन्तौ शुक्रं—शुक् शोकस्तया रं रहितं परमात्मानं वयन्तौ-जानन्तौ, 'वय गतावि'ति धातुः। गत्यर्थानां ज्ञानार्थत्वात्। अन्तर्यामिविषये तु शुक्रं-शोकरहितं मोक्षं वयन्तौ-प्रापयन्तौ, देवभिषक्त्वात् शुक्रं—छिन्नाङ्गसन्धिं वयन्तौ—बध्नन्तौ वा, 'वय बन्धन' इति धातुः। तरसा-स्वकीयवेगेन सुवेपौ-असुरेषु सुष्ठु वेपः कम्पो (याभ्यां) ययोः तौ, 'वेपृ कम्पन' इति धातुः। असितं-'शुक्लं कृष्णं कनीनिके'ति वचनात् मध्ये कृष्णं विवस्वत्-विशेषेण वसवो रश्मयो यस्य तत्सूर्यमण्डलं अभि-आभिमुख्येन वि विशेषेण अयन्तौ-पितृसेवार्थं गच्छन्तौ। अधिश्रयन्ताविति पाठे अधि-आधिक्येन श्रयन्तौ-स्वपितृसन्निधानस्थानत्वादाश्रयन्तौ नासत्यदस्रौ-नासत्यौ असत्यरहितौ नासापुटजातौ वा दस्रौ भक्ताभीष्टदानशीलत्वाद्दस्रपदवाच्यावश्विनौ प्रशंसामीति पूर्वेण सम्बन्धः। अनाहूतयोरश्विनोरागमनायोगान्नासत्यदस्राविति मूले स्पष्टमुक्तत्वाच्च अश्विनोरेवेयं स्तुतिः; न तु सूर्याचन्द्रमसोः। इति द्वितीयश्लोकस्यार्थः॥

ग्रस्तां सुपर्णस्य बलेन वर्तिकामित्यत्र या—ये 'सुपां सुलुगि'ति सूत्रात् बहुवचनस्य डादेशः। सत्तमाः—अत्युत्तमाः ऋषयः, अरुणाः—अप्रतिरुद्धा गाः—वेदवाचः उदावहन्—उत्कृष्टतयाऽध्ययनादिना धृतवन्तः; तेषां सौभगाय अनमत्तमार्यं—लोके कं प्रत्यपि नमन्तो न भवन्तीत्यनमन्तो ब्रह्माद्याः, अतिशयेना-

नमन् अनमत्तमो नारायणः तदर्थं च सुवृत्तौ—शोभनवृत्तवन्तौ यौ हे अश्विनौ भवन्तौ सुपर्णस्य—सुपूर्णस्य परमात्मनः बलेन—सङ्कल्पबलेन ग्रस्तां—याज्ञिकैर्ग्रासीकृतां वर्तिकां—वृत्तिरेव वर्तिका, दातुः स्वर्गादिफलं वर्तयतीति वा वर्तिका तां यज्ञेषु विद्यमानामभ्याहुत्याख्यवृत्तिं तावत्—च्यवनऋषिणा दापनपर्यन्तं अमुञ्चतां तदुपरि मा मुञ्चतां च । तौ प्रशंसामीति पूर्वेणान्वयः । अथवा सत्तमाः—अत्युत्तमाः ऋषयः, अरुणा—अप्रतिरुद्धाः या गाः वेदवाचः उदावहन् । सुपर्णस्य—जीवस्य बलेन—अज्ञानबलेन ग्रस्तां—ग्रासीकृतां अनमत्तमाय—सर्वोत्तमाय नारायणाय तादर्थ्ये चतुर्थी, तन्महिमप्रतिपादनार्थं विद्यमानां वर्तिकां ज्ञानाख्यदीपं पुनः पुनर्वर्तयतीति वर्तिका हरिसर्वोत्तमत्वविषयकज्ञानाख्यदीपस्य वर्तिकास्थानीयेत्यर्थः । पूर्वं बहुवचनेन प्रस्ताव्य पुनरेकवचनेन परामर्शः सर्वेषां वेदानामेकवाक्यत्वप्रदर्शनार्थम् । तां वेदवाचं तावत् मोक्षपर्यन्तं मा मुञ्चताम्, 'तदुपर्यपि बादरायणः सम्भवादि'ति सूत्रात् विधिबद्धतयैव मा मुञ्चताम् । 'ऋचां त्वः पोषमास्ते पुपुष्वानि'त्यादिश्रुतेः मोक्षानन्तरं भक्त्युद्रेकादेव मा मुञ्चतामिति योजना । इति तृतीयश्लोकस्यार्थः ॥

षष्टिश्च गाव इत्यत्र एकदोहनाः—'तद्दिनं दुर्दिनं मन्ये मेघच्छन्नं न दुर्दिनम् । यद्दिनं हरिसल्लापकथापीयूषवर्जितमि'ति वचनादेकस्य भगवद्विषयकज्ञानाख्यक्षीरस्यैव दोहनं याभ्यस्ताः विहिताः—तदर्थमेव भगवता विहिताः नानागोष्ठाः—मानुषदिनस्य षष्टिघटिकाश्रितत्वात् पितॄणां दिनस्य अष्टादशशतघटिकास्वाश्रितत्वात् देवतादिनस्य एकविंशत्सहस्रादुपरि षट्शतघटिकास्वाश्रितत्वात् [1]स्वस्वरूपस्थौल्यानुसारेण नानाविधानि गोष्ठानि यासां ताः धेनवः—'धिनु पुष्टावि'ति धातोः दिनेदिने देहपुष्टिहेतुत्वात् धेनुशब्दवाच्याः षष्टिः त्रिशतं—षष्ट्युत्तरत्रिशतसंख्याका गावः—दिनाख्या गावः (मिलित्वा) मिलित्वा एकं वत्सं—(सं)वत्सराख्यं वत्सं सुवते—उत्पादयन्ति । बहुभ्यो गोभ्यः एकवत्सप्रसव अपूर्व इति सूचयितुमेकमित्युक्तम् । वत्सस्य दोहादर्शनात् तं वत्सं दुहन्तीति यथास्थितयोजना न व्यासस्याभिमता । तस्मात्त्रिविधजीवेष्वधमा दैत्यादयस्तं

[1]स्वस्वरूपयोग्यतानुसारेण.

तमोगुणोद्रेकादनादिकालमारभ्य स्वमनसि परिवर्तमानं दुर्विषयभोगमेव सवत्साभ्यस्ताभ्यो गोभ्यः क्षीरमिव दुहन्ति । स्वायुःपरिमाणरूपशतवत्सरपर्यन्तं दिने दिने भोगानेव भुञ्जत इति भावः । मध्यमास्तु रजोगुणोद्रेकात् यौ ऐहिकस्त्रीणां स्वर्गस्त्रीणां च भोगौ स्वमनसि वर्तेते तौ बहुस्त्रीविवाहेन यज्ञकरणेन च क्षीरमिव दुहन्ति । उत्तमास्तु देवर्ष्यादयः सत्वगुणोद्रेकात् याभ्यामश्विभ्यां सह 'घर्मा समन्तात्त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगामे'ति श्रुतेः 'त्वमुक्थमसि त्वमुक्थमसी'ति श्रुतेश्च उक्थ्यम् । 'यदीमनु प्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा मथायती'ति श्रुतेः भगवत्सेवकाधिकारिसर्वोत्तमवायुसम्बन्धिवायूपदेशादेव लभ्यं; न तु यादृशतादृशाचार्योपदेशाल्लभ्यमित्यर्थः । घर्म्यं 'घृ क्षरणदीप्त्योरि'ति धातोः सकलदोषक्षरणसमर्थत्वात् अनन्तसूर्यप्रकाशत्वात् दुर्जेनानामुष्णत्वाच्च घर्मपदवाच्यस्य हरेः सम्बन्धि, निर्दोषसगुणभगवद्विषयमित्यर्थः । एतादृशं ज्ञानं दुहते । अत एव पूर्वोक्तदुग्धयोरात्मघातकत्वेनात्मगामिफलाभावात् दुहन्तीति परस्मैपदप्रयोगः । इह तु आत्मगामिमोक्षादिफलसद्भावात् दुहते इत्यात्मनेपदप्रयोगः । तावश्विनौ प्रशंसामीति पूर्वेणान्वयः । इति चतुर्थश्लोकस्यार्थः ॥

**एकं नाभिमित्यत्र** एकं नाभिं—कालाख्यचक्रस्य संवत्सराख्यं स्थूलमेकं नाभिं सप्तशता अराः—त्रिशतदिनानां षष्ट्यन्तर्गतपञ्चाशद्दिनानां च अहोरात्रविभागे क्रियमाणे सप्तशता अराः कीलकस्थानीयाः श्रिताः—आश्रिताः । अस्यां नाभौ प्रधिषु प्रंथाख्यविस्तारवत्सु प्रदेशेषु पुनरुर्वरितदशदिनानामहोरात्रविभागे क्रियमाणे ग्रीष्मर्तौ वृद्धिमन्ति विस्तृतदशाहानि विस्तृतदशाराः हेमन्तर्तौ च विस्तृतदशरात्रयोर्विस्तृतदशाराः एवं विंशत्यरा अर्पिताः । यद्यप्यल्पा (तु) वृद्धिः प्राक्क्रमेण वृद्धिकाले, उत्तरत्र क्रमेण ह्रासकाले च दिनान्तरेष्वप्यस्ति । तथापि सम्पूर्णवृद्धिर्मध्ये एकत्र दशाहस्सु अपरत्र दशरात्रिष्वेव, अतः सुष्ठूक्तं— प्रधिषु विंशतिरिति । अजरं—नाशरहितं सुनेमि—शोभनधारायुक्तं इदं चक्रं परिवर्तते एकस्यानन्तरमेकस्यारम्भात्पुनः पुनरावर्तते । हे अश्विनौ चर्षणी-जगत्सञ्चार-

[1]प्रंथ्याख्य.

यन्तौ 'चर गतिभक्षणयोरि'ति धातुः। वां समवर्ती-यमः 'समवर्ती परेतराडि'त्यमरः। यया धारया मा-मा स्पृशति। मनुष्याणां घातिकाऽपि सा कालचक्रधारा देवभिषजोर्युवयोर्घातिका न भवतीति भावः। तावश्विनौ प्रशंसामीति पूर्वेणान्वयः। इति पञ्चमश्लोकस्यार्थः॥

एकं चक्रं वर्तते द्वादशारमित्यत्र यदिदमेकं चक्रं द्वादशारं कयाचन विवक्षया द्वादशमासाख्यातिस्थूलारयुक्तं षण्णाभं षड्ऋत्वाख्यनाभिषट्कयुक्तं एकाक्षं एकपरमात्माख्याक्षयुक्तं ऋतस्य-सत्यभूतजगतः धारं-धारकं वर्तते प्रवर्तते। यस्मिन् विश्वे—समस्ताः सूर्यचन्द्रादिदेवाः अधि—आधिक्येन मनुष्यदृग्गोचरतयेत्यर्थः। विपक्ताः—सम्बद्धाः। हे अश्विनौ तं चक्रं मयि यूयं मा मुञ्चथः। वि—विशेषेण सीदथ—प्रसीदथ। द्वयोरपि तयोर्गौरवात् यूयं प्रसीदयेति बहुवचनम्। चक्रे महापुरुषस्य भगवतः सन्निधानात् तमिति पुँल्लिङ्गप्रयोगः। इति षष्ठश्लोकस्यार्थः॥

अश्विनाविन्द्रममृतमित्यत्र हे अश्विनौ अश्विनोरन्तर्यामिणौ भगवन्तौ याभ्यो गोभ्यः वेदविद्याभ्यः इन्द्रं—इदं जगद्रमयतीति इन्द्रपदवाच्यं मोक्षदानसमर्थं वा अमृतं—ज्ञानामृतं इन्द्रं—परमैश्वर्यवन्तं नारायणमुद्दिश्य प्रवृत्तमासीत्। तथा हे अश्विनौ याश्च गाः दासपत्नीः—'शूद्रश्च द्विजसेवये'ति वचनात त्रिवर्णदासान् शूद्रान् मनुष्यपत्नीश्च प्रति तिरोधत्तां तिरोहिता अकुरुताम्। हे अश्विनौ युवयोर्मत्स्य-हयग्रीव-व्यासादिरूपाणि याश्च गाः गिरीन्—'गॄ निगरण' इति धातोः वेदोपरि द्वेषात् स्वमुखादुद्गिरतः बहिष्कुर्वतः अपठत इति यावत्, मधुकैटभादिदैत्यान् गिरिवदन्यैरभेद्यान्वा भित्वा—संहृत्य याः गाः उपाचरन् उप समीपे रक्षणाय अचरन् लोके उप—उपदेशेन अचारयंश्च। हे अश्विनौ अदृष्टं—ब्रह्मणो रात्रिरूपमहाप्रलये कैरप्यदृष्टं तं वेदराशिं अह्ना—अह्नि सृष्टिकाले युवयोः मूलरूपी नारायणः अबलस्य—अस्वतन्त्रस्य ब्रह्मादेः स्वशिष्यस्य प्रथिता—प्रथयिता। तादृशवेदप्रवर्तकभगवत्सन्निधानपा(त्र)त्रीभूतौ वां प्रशंसामीति पूर्वेणान्वयः। इति सप्तमश्लोकस्यार्थः॥

युवां दिश इत्यत्र हे अश्विनौ अभ्यन्तर्गतभगवन्तौ युवां अग्रे—सृष्टि-

काले दश दिशः जनयथः । तासां दिशां समानमूर्ध्नि 'रथ गतावि'ति धातोः रथता—परितो गच्छता ज्योतिश्चक्रेण वियन्ति—वि विशिष्टाः सूर्यचन्द्रादिदेवाः यन्ति प्राप्नुवन्ति । दशदिक्ष्वपि [1]एकच्छाययैव तन्मूर्ध्नि ज्योतिश्चक्रस्य सञ्चारात्समानमूर्ध्नीत्युक्तम् । अथ यथा वियन्तीति पाठे अथ—दिक्सृष्टयनन्तरं यथा—यथायोग्यं वि—विशिष्टाः सूर्यचन्द्रादिदेवाः यन्ति—ज्योतिश्चक्रेण गच्छन्ति । तस्मिन् ज्योतिश्चक्रे याति सति तासां—दिशां यानं—यान्त्यनेन देवा इति यानं ज्योतिश्चक्रं ये देवाः ये च मनुष्याः ते सर्वे अनु—स्वयोग्यतामनुसृत्य क्षितिं—स्वनिवासस्थानं आ—समन्ताच्चरन्ति—कुर्वन्ति । स्वपुण्यफलभोगपर्यन्तं मनुष्याः तदनुस्यूतविमानेषु निवसन्ति, देवास्तु सर्वदेति प्रदर्शनाय अन्वित्युक्तम् । इत्यष्टमश्लोकस्यार्थः । इदं श्लोकद्वयं केवलमन्तर्यामिविषय(क)म् । 'गुहाशयायैव न देहमानिन' इति स्मृतेः सर्वाऽपि स्तुतिरन्तर्यामिविषया किम्वघटितेति स्तोतुरुपमन्योर्हृदयम् ॥

युवां पर्णा वीरुधो विश्वरूपा इत्यत्र हे अश्विनौ युवां विश्वा भुवनानि उद्दिश्य विक्षिपन्तौ—भिषक्त्वात् विशेषेण रोगादिनिरसनं कुर्वन्तौ स्थः। युवयोराश्रमे ये पर्णाः—वृक्षगलितपर्णाः विश्वरूपाः—नानावर्णवत्यः याः वीरुधः—लताश्च सन्ति ते सर्वेऽपि भवन्मन्त्रौषधवाताभिसम्बन्धात् [2]विक्षिपन्तः—व्याध्यादिनिरसनं कुर्वन्तः सूर्यस्य ते—उष्णतया प्रसिद्धाः भानवश्च अनुसृताः—वामनुसृताः सन्तश्चरन्ति । भवदाश्रमस्थवृक्षलतादीन् न शोषयन्तीति भावः । देवा मनुष्याश्च भवदाश्रमे क्षितिं—स्थानमाचरन्ति । इति नवमश्लोकस्यार्थः ॥

सन्तौ नासत्यावश्विनावित्यत्र हे अश्विनौ सन्तौ—उत्तमौ नासत्यौ-असतां योग्यौ असत्यौ असत्यौ न भवत इति नासत्यौ । सत्यौ नासत्याविति पाठे सत्यौ सतां योग्यौ, ऋते—सत्यभूते सूते—मम नष्टयोश्चक्षुषोः पुनः प्रसवे विषये, चक्षुःप्राप्त्यर्थमित्यर्थः । 'विष्णुर्योनिं कल्पयत्वि'ति सूक्ते ये विष्ण्वाद्या देवाः ततः—तैः सह यौ—युवां पुष्करस्यारविन्दस्य स्रजं बिभृथः ।

[1]एकच्छाययैतन्मूर्ध्नि [2]निक्षिपन्तः

'गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजे'ति श्रुतेः स्पर्शमात्रेण गर्भरक्षणसमर्थया ततः—तया स्रजा च सह अमृतौ—अमृतपानान्मृतिरहितौ ऋतावृधौ—ऋतेन सत्येन आवृधौ अभिवृद्धौ अश्विनौ वां तत्पदेन—तेषां देवानां, तस्याः मालायाः, तयोर्युवयोश्च प्रकृष्टानि पदानि यस्मिन् सूक्ते तत्प्रपदं 'विष्णुर्योनिं कल्पयत्वि'ति प्रागुक्तं सूक्तं तेन आह्वये। इति दशमश्लोकस्यार्थः ॥

मुखेन गर्भं लभतां युवानावित्यत्र युवानौ—स्त्रीपुरुषौ युवयोः कृपया गर्भं लभतां—लभेताम्। लभतामिति लोटि परस्मैपदे द्विवचनम्। गतासुरिक्तं—मृतव्यतिरिक्तं तं गर्भं माता मुखेन अग्रतो निस्सृतेन, प्रपदेन (प)पादाग्रेण वा अग्रतो निस्सृतेन सूते। इत्थम्भूतलक्षणे चेयं तृतीया। क्वचित् अजातः—मुखेन अप्रसूतः स गर्भः सद्यः मातरमत्ति। उपलक्षणं चैतत्। स्वयं च मृतो भवति। अतः कारणात् हे अश्विनौ तौ—मातृगर्भौ प्रति बीजसेकं—सुखप्रसवेन उभयोर्मातृगर्भयोः जीवनहेतुभूतामृतसेकं मुञ्चथः तदुपरि वर्षथः। पयो वर्षत्सु मेघेषु पयोमुच इत्यपि प्रयोगदर्शनान्मुञ्चथ इत्युक्तम्। एवंविधौ वां नष्टयोर्मम नेत्रयोरमृतसेकेन पुनः प्रसवार्थं आह्वय इति पूर्वेणान्वयः। इत्येकादशश्लोकस्यार्थः ॥

एतेन प्रीत्याऽनुनयेनेत्यत्र एतेन गुरुणा प्रीत्या मयि प्रीत्या अनुनयेन अश्विनौ स्तुहीति गुरुशिक्षया च हे अश्विनौ भवन्तौ मया अभिष्टुतौ; न तु स्वशक्त्या। उपाध्यायेन तु स्वशक्त्यैव भवन्तावभिष्टुतौ। अतो नोत्सह इत्युत्तरेण सम्बन्धः ॥

एवमप्याहेत्यत्र एवमपि एवमुक्तोपि गुरुराह— अधर्मेण यत् कश्चित्पृच्छति, अधर्मेण यत् कश्चिद्विब्रूते प्रतिब्रूते तयोरन्यतरः प्रेषी वा प्रेषको गुरुर्वा वाशब्देन प्रेष्यः शिष्यो वा [1]विद्वेषं निगच्छति। गच्छेत्याज्ञानन्तरं तव प्रश्नोप्ययमधर्मः। एवञ्चाधर्ममूलप्रश्नप्रतिवचनाभ्यां तव कार्यालाभे उक्तकार्यं न कृतवानिति प्रेषकस्य गुरोः कोपः, असाध्यकार्यमुक्तवानिति प्रेष्यस्य वा कोपः स्यादिति भावः ॥

[1]अतिद्वेषं.

गुर्वर्थमुपहर्तुमित्यत्र इच्छामीति योग्यपदाध्याहारः ॥

[1]तदेव हि गच्छतोपस्पृष्टमित्यत्र यद्गच्छता त्वया उपस्पृष्टं भक्षितं पुनर्गण्डूषाद्यकरणादेतदेवाशौचमित्यर्थः ॥

तदेवं गत इत्यत्र तत्तस्मात् एवं गते एवं स्थिते सतीत्यर्थः ॥

साधयामस्तावदित्यत्र स्वगुरुकार्यमिति योग्यपदाध्याहारः ॥

ऐरावतोद्भवा इत्यत्र ऐरावताख्यनागकुलोद्भवा इत्यर्थः ॥

सर्पाणां प्रग्रहा यान्तीत्यत्र सर्पाणां प्रग्रहाः परिग्रहाः धृतराष्ट्रो नागराजो जयेदिति वदन्तो यान्तीति योजना ॥

ये(वे)चेदमुपशृण्वन्तीत्यत्र इदं मम वचनम् । ऐरावतज्येष्ठभ्रातृभ्य· ऐरावत एव ज्येष्ठो येषां [2]भ्रातृणां. तेभ्य इत्यर्थः ॥

चतुर्विंशतिपर्वयोग इत्यत्र द्वादशामावास्याः द्वादशपौर्णमास्यश्चेति चतुर्विंशतिपर्वणां योगो यस्मिन् संवत्सराख्यकालचक्रे ॥

इदं वयन्त्यावित्यत्र इदं तन्तुवृन्दं वयन्त्यौ क्रमेण प्रापयन्त्यौ पुनस्तत्र कालचक्रे भुवनानि लोकान् भूतानि प्राणिनश्च आ मर्यादया एकस्मिन् काले एकं ब्रह्माण्डं तद्गतप्राणिनः पुनरन्यस्मिन् काले अन्यद्ब्रह्माण्डं तद्गतप्राणिनश्चेति क्रमेण अजस्रं अनाद्यनन्तकालेषु वयन्त्यौ प्रापयन्त्यावित्यर्थः ॥

अपाने धमेत्यत्र धम मुखस्थवायुना फूत्कारं कुरु ॥

सर्वस्रोतोभ्य इत्यत्र स्रोतोभ्यः वायुस्रवणहेतुभ्यो नवद्वारेभ्यः अग्नेः सधूमार्चिषो निष्पेतुरिति सम्बन्धः ॥

तस्मिंश्च तन्त्रे इत्यत्र तन्त्रपदेन तन्तुसङ्ग्राहकदारुमयचक्रं कथ्यते ॥

भवतोपदिष्टं तदित्यत्र तत् तस्मात्कारणात् यन्मया पथि मार्गे दृष्टं तत्सर्वं [3]किमिति त्वया उपदिष्टं सत् वेदितुमिच्छामि । त्वदुपदेशेन वेदितुमिच्छामीति भावः ॥

---

[1]तदेव हि गच्छता नोपस्पृष्टमित्यत्र यद्गच्छता त्वया नोपस्पृष्टं भक्षिते पुनर्गण्डूषाचमनाद्यकरणं तदेवाशौचमित्यर्थः. [2]तद्भ्रातॄणां. [3]किमु? त्वयोपदिष्टं तद्वेदितुमिच्छामि·

अन्यस्मिन् करणीये त इत्यत्र ते करणीये अवश्यकर्तव्ये कार्ये सति तद्विहाय बाल्यादिव अन्यदेव कार्यं कुरुष इति योजना ॥

अपचितिमित्यत्र अपचितिं उपकारं पूजां वा । काश्यपं त्वस्तितुरुज्जीवनाया (गम्यमानं) गच्छन्तं काश्यपऋषिम् ॥

यदैवं पितरं वृत्तमित्यत्र एवं वृत्तमिति सम्बन्धः । एतादृशवर्तनवन्तमित्यर्थः ॥

इति तृतीयोऽध्यायः ।

## ॥ चतुर्थोऽध्यायः ॥

### (पौलोमपर्व ४)

जनमेजयसर्पसत्रान्तरमित्यत्र जनमेजयेन करिष्यमाणसर्पसत्रस्य अन्तरमवकाशो यस्मिन् प्रमेये तदिदं उदङ्कस्य मुखात् जनमेजयस्य तक्षककृतस्वपितृमारणश्रवणरूपं[1] प्रमेयमप्युक्तम् ॥

परं रोमहर्षण इत्यत्र परं पश्चात् वयं प्रवक्ष्यामः प्रश्नं करिष्यामः । त्वं च नः वक्ष्यसि उत्तरं वदिष्यसीत्यर्थः ॥

इति चतुर्थोऽध्यायः ।

## ॥ पञ्चमोऽध्यायः ॥

कल्पाः[2] स्मः श्रवणे तवेत्यत्र कल्पाः समर्थाः ॥

अथाग्निशरणेऽपश्यदित्यत्र अग्निशरणे अग्न्यागारे[3] । 'शरणं गृहरक्षित्रोरि'त्यमरः ॥

अग्ने पृच्छ ऋतेन वै इत्यत्र पृच्छे इति पदच्छेदः ॥

भीतोऽनृताच्च शापाच्चेत्यत्र रक्षोभयात् राक्षसभार्येति कथिते सति यदनृतं तन्निमित्ताच्छापादित्यर्थः ॥

इति भृगुपत्न्यपहारे पुलोमाख्यरक्षोऽग्निसंवादो नाम पंचमोऽध्यायः ।

---

[1] मरणश्रवणरूपं [2] कल्या [3] अग्न्यगारे

## ॥ षष्ठोऽध्यायः ॥

अग्नेरथ वचः श्रुत्वेत्यत्र श्रुत्वा, अतिक्रम्य चेति योग्यपदाध्याहारः ॥

सा तमादाय सुश्रोणीत्यत्र भृगुं नन्दयतीति भृगुनन्दनं, भृगोरानन्दकरमित्यर्थः। भार्गवं भृगुपुत्रं तं च्यवनमादाय ससार स्वाश्रमं प्रति अगमदिति योग्यपदाध्याहारेण योजना ॥

तस्या मार्गं द्रुतवर्तीं दृष्ट्वा तु सरितं तदेत्यत्र च्यवनस्याश्रमं प्रति तस्या मार्गं द्रुतवर्तीं सरितं दृष्ट्वेति सम्बन्धः ॥

केनासि रक्षसे तस्मै कथितेत्यत्र भृगुपत्नीति केन कथिता असि ॥

इति षष्ठोऽध्यायः।

---

## ॥ सप्तमोऽध्यायः ॥

आयुर्देवगणा इत्यत्र दर्शश्च पौर्णमासश्च पितृभिः सह देवानां पूजायोग्ये तिथी इति योग्यपदाध्याहारेण योजना । 'आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च' ति स्मृतेः पौर्णमास्यां इष्टिं कृत्वा अर्चेतां स्वर्गे बहुकालं आयुर्दातारो देवगणा आयुर्देवगणाः। अमावास्यायामग्नावर्चेतां स्वर्गे बहुकालमायुर्दातारः पितृगणा आयुःपितृगणा इति विवेकः ॥

देवताः पितरस्तस्मादित्यत्र 'सोमः पितृमान् यमोऽङ्गिरस्वान् अग्निः कव्यवाहनादयो ये पितर' इति वचनात् देवा एव पितरः पितरश्चापि देवता[1] इति एकीभूताश्च दृश्यन्ते (पितर इति)। पर्वसु संवत्सरान्तर्गतद्वादशामावास्यासु द्वादशपौर्णमासीषु च त एव पृथक्त्वेन दर्शेषु पितृत्वेन पौर्णमासीषु देवत्वेन च दृश्यन्त इति पूर्वेणान्वयः ॥

जुह्वते मयि सर्वदेत्यत्र देवताः पितरश्च लोके उक्तविधया पूज्यन्ते। स्वयं च तासु तासु तिथिषु स्वानेवोद्दिश्य जुह्वते । रूपद्वयविवक्षया दातृत्वं प्रतिग्रहीतृत्वं च तेषामेवेति विवेकः ॥

---

[1] पितृदेवताः.

चक्रे संहारमात्मन इत्यत्र आत्मनः संहारं कुण्डादिष्वदर्शनम् ॥

न त्वं सर्वशरीरेणेत्यत्र सर्वशरीरेण सर्वप्राणिनामुदरस्थितवैश्वानरशरीरेण, समुद्रान्तस्थितवडवानलाख्यशरीरेण, पातालादिलोकेषु तत्र-तत्र स्थितनानाशरीरेण चेत्यर्थः । ते स्थूलतेजोरूपस्य तव उपादानभूताः आतानवितानात्मकस्थूलपटस्य उपादानभूतसूक्ष्मतन्तुवत् उपादानभूताः याः सूक्ष्मार्चिषः[1] ता एव सर्वं भक्षयन्ति । स्थूलतेजोरूपस्य तव न कोपि दोष इति भावः । तव स्पर्शे सति जलस्पर्शेन अशुचेरेव शुचित्ववत् त्वया भक्ष्यमाणाशुचीनामेव शुचित्वं च स्यादित्युपायान्तरमप्याह— यथा सूर्यांशुभिरिति ॥

इति अग्निप्रसादो नाम सप्तमोऽध्यायः ।

## ॥ अष्टमोऽध्यायः ॥

गन्धर्वराजो विप्रर्षे इत्यत्र विश्वावसुरिति यः श्रुतः तस्माद्गन्धर्वराजः 'राजा राट् पार्थिवो नृप' इत्यभिधानात् गन्धर्वाणां राजः श्रेष्ठात् मेनकायां गर्भः प्रजज्ञिवानिति सम्बन्धः । यद्वा गन्धर्वराजः प्रजज्ञिवान् जनयामासेति ॥

भूयोऽमनोहरतमेत्यत्र अमनोहरतमेति पदच्छेदः ॥

इति रुरु प्रमद्वराख्यानेऽष्टमोऽध्यायः ।

## ॥ नवमोऽध्यायः ॥

तमुद्दिष्टेऽहनीत्यत्र उद्दिष्टे प्राक् सङ्कल्पिते अहनि तं प्राक् सङ्कल्पितं विवाहमिति सम्बन्धः ॥

डुण्डुभं वयसाऽन्वितमित्यत्र वयसाऽन्वितं वृद्धमित्यर्थः । डुण्डुभो नाम विषफणाभ्यां रहितो दीर्घकायो राजिलापरपर्यायः सर्पविशेषः । 'अलगर्दो जलव्यालः समौ राजिलडुण्डुभावि'त्यमरः ॥

अत्यन्तं रुषितो विप्र इत्यत्र रुषित आसीदिति योग्यपदाध्याहारः ॥

इति रुरु-डुण्डुभसंवादो नाम नवमोऽध्यायः ।

[1] सूक्ष्मसूक्ष्मार्चिषः.

## ॥ दशमोऽध्यायः ॥

डुण्डुभा न हीत्यत्र दशन्तीति पूर्वक्रियानुवृत्तिः । शब्देन सर्पशब्द-मात्रेण ॥

एकार्थान् पृथगर्थानित्यत्र एकार्थान् एकस्य सर्पाख्यसामान्यशब्दस्याप्यर्थभूतान् पृथगर्थान् डुण्डुभाख्यपृथक्शब्दस्य च अर्थभूतान् । वै इत्यनेन अर्थभेदस्य प्रसिद्धतामाचष्टे । एकदुःखान् दंशनजन्यदुःखमात्रदानेन एकं एकप्रकारं दुःखं येभ्यस्तान्, पृथक्सुखान् विपसर्पतः पृथक् पृथग्भूतेन मरणाप्रदातृत्वस्वभावेन सुखं मरणाभावाख्यसुखं येभ्यस्तान् डुण्डुभानिति सम्बन्धः । मनुष्यशब्दवाच्यत्वमात्रेण हिंसकतुरुष्ककृतहिंसाख्यापराधेन, गालीप्रदानादिना तद्वत् सर्वसाधारणेषु दुःखदान् अहिंसकब्राह्मणान् यथा न घ्नन्ति तथेति भावः॥

इति रुरु-डुण्डुभसंवादे दशमोऽध्यायः ।

---

## ॥ एकादशोऽध्यायः ॥

सर्पाणां हिंसनं पुरा। परित्राणं च भीतानामित्यत्र पुरा पुरतः । उपरि परित्राणमित्यस्य भविष्यतीति योग्यक्रियया सम्बन्धः । पुरा पूर्वकल्पे अभूदिति वा ॥

इति एकादशोऽध्यायः ।

---

## (आस्तीकपर्व ५)

## ॥ प्रथमोऽध्यायः ॥

यायावराणां विप्राणामित्यत्र गृहे गृहे यात्वा यात्वा वरयन्ति तद्दिनमात्रोचिततण्डुलानिति यायावराः विरक्तब्राह्मणाः तेषां धर्मज्ञः ॥

वीरणस्तम्बके लग्ना इत्यत्र वीरणस्तम्बं औशीरकतृणानां गुल्मं, लावछेत्यपभ्रंशभाषा ॥

---

[1]सर्वसाधारणेषदुःखदान्.

ततो निवेशाय तदेत्यत्र निवेशः गृहप्रवेशो विवाह इत्यर्थः ॥

मात्रा हि भुजगाः शप्ता इत्यत्र मात्रा सर्पाणां मात्रा कद्र्वा स्ववचनाकरणाच्छप्ताः ॥

इत्यास्तीके प्रथमोऽध्यायः ।

## ॥ द्वितीयोऽध्यायः ॥

प्रजापतिसुते शुभे इत्यत्र प्रजापतिर्दक्षः; नवप्रजापतिषु तस्यापि गणनात् ॥

वरातिसर्गमित्यत्र वरातिसर्गं वराय अतिसर्गः [1]आदेशः आज्ञेत्यर्थः ॥

सोपस्वेदेषु कुण्डेष्वित्यत्र अन्तस्थितघृततैलादिद्रव्येण बहिस्स्रवद्भिन्दव उपस्वेदाः तैः सहितेषु सोपस्वेदेषु कुण्डेषु घटेषु ॥

पञ्चवर्षशतान्यद्येत्यत्र अद्य अद्यारभ्य पञ्चवर्षशतानि पुनः पञ्चवर्षशतानि वर्धते ॥

आदास्यन्नात्मनो भोज्यमित्यत्र विधात्रा ब्रह्मणा अस्य गरुडाख्यपक्षिविशेषस्य यद्विहितं भोज्यं तदन्नं आदास्यन्निति सम्बन्धः ॥

इत्यास्तीके सौपर्णारुणोत्पत्तिर्नाम द्वितीयोऽध्यायः ।

## ॥ तृतीयोऽध्यायः ॥

अनन्तकल्पमद्वन्द्वमित्यत्र 'अनन्तं सुरवर्त्म खमि'त्यनुशासनात् अनन्तकल्पं अन्तरिक्षपरिमितम् ॥

मथ्यतां कलशोदधिरित्यत्र कलशोदधिः अमृतकलशोत्पादकः क्षीरसमुद्रः ॥

इत्यास्तीके अमृतमथने तृतीयोऽध्यायः ।

[1]अतिदेशः.

## ॥ चतुर्थोऽध्यायः ॥

अचोदयदमेयात्मा फणीन्द्रं पद्मलोचन इत्यत्र 'ईकारोऽब्जदले लक्ष्म्यां वाण्यां' कमलकेसर' इत्यभिधानात् फणिनां ई ऐश्वर्यं द्रावयतीति व्युत्पत्त्या पुंव्यत्यासेन वा फणीन्द्रो गरुडः। तस्यैव न विद्यते ईर्यांविशवशाद्बल-स्यान्तो यस्येति व्युत्पत्त्या अनन्त इत्यपि नाम। मिलितैर्देवासुरैरनुद्वाह्यगिर्युद्वहने शक्तिसूचनाय फणीन्द्र इति अनन्त इति चापूर्वं नामैवोक्तम्। अन्यथा 'गिरि-मारोप्य गरुडे हस्तेनैकेन लीलये'ति भागवतोक्तिविरोधात्। (ननु) 'विवशा विजहुः पथी'ति भागवत एवोक्तेः मार्गे एव गरुडोपर्यारोपणं, न तूद्धरणकाल इति चेत्, सत्यम्। 'समुद्धर्तुमशक्ता वै सर्वे देवगणास्तदा। विष्णुमासीन-मभ्येत्य ब्रह्माणं चेदमब्रुवन्नि'ति भारत एव स्पष्टं देवानां गिर्युद्धरणाशक्तेरप्यु-क्तत्वात्, 'एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापी'ति न्यायेन अत्रापि हरिहस्तेनैवो-द्धरणं गरुडोपर्यारोपणं च वक्तव्यम्। भूमौ पतितमात्रस्य गिरेरुद्धरणे हरिहस्त-मपेक्षमाणो गरुडः एकादशसहस्रयोजनपर्यन्तं कीलतया गिरिसन्धौ खचितं पर्वतमुद्धर्तुं कथं न तमपेक्षते। अत एव 'अनन्तो भगवान् देवो यतो नारा-यणः स्थित'इति उपर्यनन्तपदेन भगवतोप्याहृतत्वात् अत्रापि 'ततोऽनन्तः समुत्थाये'ति वचनात् अनन्ताख्यो भगवानपि अग्रतो गरुडमाज्ञाप्य स्वयमपि गरुडमारुह्य तत्रागतः। एतदर्थमप्यनन्तपदप्रयोग इति चानुसन्धेयम्। 'ततस्ते मन्दरगिरिमोजसोत्पाट्य दुर्मदा' इति भागवतोक्तेः का गतिरिति चेत्, सत्यम्। भारते उद्धरणाशक्तेः स्पष्टमुक्तत्वात् ओजसोत्पाट्येत्यत्रापि ओजसा भगवदोजसा इत्येव वक्तव्यत्वात्। अत एव ओजसेति सामान्यत एवोक्तं, न तु स्वौजसेति। कथं तर्हि मध्येमार्गं गिरेर्निपतनमिति चेत्, गरुडोपरि स्पर्धया वयमेव (भारं) वहाम इति देवैरुक्ते मार्गेऽपि किञ्चित्कालमुद्वहनसम्भवात्। एतत्सर्वमनुसन्धाय 'तदा त्वया 'नित्यबलत्वहेतुनो योऽनन्तनामा गरुडस्तदंसके। उत्पाट्य चैकेन करेण मन्दरो निधापितस्तं सह स त्वयाऽवहदि'ति 'पुनः परीक्षद्भिरथो गिरिः सुरैस्सहासुरैरुन्नमितस्तदंसत' इति च प्राहुः पूर्वाचार्याः॥

[1]ईर्यांविशवलात्. [2]तमपेक्षेत. [3]दुर्दमाः. [4]मध्येमार्गं.

ऊचुश्च कूर्मराजानमित्यत्र. 'अकूपाराय महते नमो मन्दरधारिण' इति वचनात् कूर्मोप्यकूपारः। सङ्क्षेपरूपत्वात् समुद्रप्रार्थनाऽप्रसङ्गाच्च काल-व्यत्यासेन च कूर्मप्रार्थनाख्यभाविकथायाश्च प्राक्कथनम् ॥

वज्रेणेन्द्रो ह्यपीडयदित्यत्र अपीडयत् रज्जोरनुद्गमनाय सूक्ष्माग्रं ईष-द्विस्तृतं चकार। योक्त्रं रज्जुम् ॥

अनन्तो भगवान् देवो यतो नारायणः स्थित इत्यत्र यतो यत्र अनन्ताख्यो भगवान्नारायणः स्थितः तत्र पुच्छे ॥

इत्यास्तीके चतुर्थोऽध्यायः।

---

## ॥ पञ्चमोऽध्यायः ॥

विविधानि महीधरादित्यत्र महीधरात् भ्राम्यमाणमहीधरवेगान्निमि-त्तात् ॥

काञ्चनस्य च निस्स्रवादित्यत्र मन्दरस्य कनकाचलत्वात् जले पेषण-भरेण जातात् काञ्चनस्य च निस्स्रवात् सुवर्णभस्मसेवनादिव अमृतत्वं गता इति सम्बन्धः। अनेन तृषापरिहाराय क्षणे क्षणे देवाः समुद्रपयः पिबन्ति। दैत्या-स्तु 'वासुकेर्मथ्यमानस्य निःसृतेन विषेण च। अभवन्मिश्रितं तोयमि'ति वच-नात् पयो न पिबन्ति। तेनामृतत्वं च देवानामिव न तेषामभूदिति सूचितम् ॥

ऋते नारायणं देवमित्यत्र देवं क्रीडादिगुणविशिष्टं नारायणं ऋते दैत्याः नागोत्तमः वयं सर्वे च श्रान्ताः स्मः इति योजना। अनेन नारायणस्य निर्दुःखानन्दरूपता देवैः स्पष्टीकृता ॥

क्षोभ्यतां कलशः सर्वैरित्यत्र कलशः दधिकलशस्थानीयः क्षीरसमुद्रः ॥

समान इव सागरादित्यत्र चन्द्रस्य श्वेतिम्ना क्षीरसमुद्रसदृशत्वात् समान इवेत्युक्तम् ॥

यतो देवास्ततो जग्मुरित्यत्र देवानां मन्दरस्योच्चैरभागे स्थितत्वात् सूर्यस्योत्तरायणगतत्वाच्च आदित्यपथमाश्रिता देवाः यतः यस्मिन् पुच्छभागे

---

[1]अप्रसंगरूपाच. [2]सेचनादिव. [3]देवानामेवं. [4]उत्तरदिग्भागे.

स्थिताः तत्र उक्ताः ज्येष्ठासोमाद्याः सर्वे जग्मुरिति योजना । फणाभागस्य विषज्वालाभरितत्वादिति भावः ॥

इत्यास्तीके पंचमोऽध्यायः ।

---

## ॥ षष्ठोऽध्यायः ॥

जगाम दानवेन्द्रेभ्यो नरेण सहितः प्रभुरित्यत्र स्वस्य नारायणीरूपतया स्त्रीरूपत्वाद्दैत्यभीषणाय तदैव गृहीतेन नरेण पुंरूपेण सहित इत्यर्थः । 'एवं सुतुमुले युद्धे वर्तमाने भयङ्करे। नरनारायणौ देवौ समाजग्मतुराहवमि' ति उपर्येव वक्ष्यमाणत्वादत्रोक्त एवार्थः ॥

ततो भगवता तस्येत्यत्र भगवता तत्कालधृतपुंरूपेण भगवता ॥

ततो वैरविनिर्बन्ध इत्यत्र चन्द्रसूर्याभ्यां सह यतो वैरविनिर्बन्धः कृतः ततो राहुः मुखेन तौ ग्रसति ॥

इत्यास्तीके अमृतमथने देवासुरविजयो नाम षष्ठोऽध्यायः ।

---

## ॥ अष्टमोऽध्यायः ॥

गां विन्दता भगवतेत्यत्र गां भूमिं विन्दता आनेत्रा वराहरूपेणेति गोविन्दनाम्नो व्युत्पत्त्यन्तरमिदम् ॥

अनासादितपर्यन्तमित्यत्र अनासादितः अप्राप्तः पर्यन्तः अधःप्रदेशावसानं अपरपारावसानं वा यस्य स तथोक्तः । घनोदकसमुद्रस्यापि समुद्रान्तःपातित्वादेवमुक्तम् । पातालतलं पाताले तलमधोभागो यस्य सः ॥

अध्यात्मयोगनिद्राञ्चेत्यत्र अध्यात्मं आत्मानमधिकृत्य योगेन उपायेन पक्ष्मद्वययोगेन वा कृतां निद्रां सेवतोऽङ्गीकुर्वतः पद्मनाभस्य युगान्तकालशयनं युगान्तकाले प्रलयकाले शेते अस्मिन्निति शयनमित्यर्थः ॥

इत्यास्तीके अष्टमोऽध्यायः ।

---

## ॥ नवमोऽध्यायः ॥

प्रजाः सर्वा विभावसुमित्यत्र विभावसुं कोणाधिपतिं अग्निम् ॥

त्वं विष्णुः सुरसत्तम इत्याद्यैक्यव्यपदेशस्तु विष्ण्वादीनां गरुडे सन्निहितत्वात्, अयोऽग्निरितिवत् । अन्यथा 'नास्ति नारायणसमं न भूतं न भविष्यती' त्युपक्रमविरोधः । विष्णुवाहनस्यैव विष्णुत्वासम्भवाद्युक्तिविरोधश्च । एवमन्यत्राप्यूह्यम् ॥

वितिमिरदभ्रगोचरमित्यत्र वितिमिरं स्वतेजसि दभ्रगोचरं अल्पं विपर्यीक्रियमाणं, तेजसामन्तः स्पष्टतया अदृश्यमित्यर्थः ॥

गरुडमुपेत्य गोचरमित्यत्र गोचरं दिक्षु चरन्तमित्यर्थः । 'दिङ्नेत्रघृणिभूजले' इत्यमरः ॥

इत्यास्तीके गरुडोत्पत्तिर्नाम नवमोऽध्यायः ।

---

## ॥ एकादशोऽध्यायः ॥

निगीर्णं बडिशं यथेत्यत्र निर्गीर्णं आस्यान्तर्निक्षिप्तं बडिशं मत्स्यवेधनम् । 'बडिशं मत्स्यवेधनमि' त्यमरः ॥

अरिष्टं व्रज पन्थानमित्यत्र अरिष्टं क्षेमम् । 'अरिष्टं क्षेममाख्यातमि'-त्युत्पलमाला ॥

इत्यास्तीके एकादशोऽध्यायः ।

---

## ॥ त्रयोदशोऽध्यायः ॥

स नेच्छति धनं भ्रात्रेत्यत्र एकस्थं एकाकारतया स्थितं, अविभक्तमिति यावत् ॥

गुरुशास्त्रेण बद्धानामित्यत्र गुरुशास्त्रेण बहुशास्त्रेण बद्धानां सम्बद्धानां, शास्त्रकोविदानामित्यर्थः । अन्योन्यमवशङ्किनां अन्योन्यमवमानकरणे शङ्कावतां साधूनां त्वं नियन्तुं न शक्यो हीति योजना ॥

रोपरोपानुपङ्गेणेत्यत्र एकस्य रोपं प्रत्यन्यस्य रोपो रोपरोपानुषङ्गः"। रोपद्रोपानुषङ्गे(णे)नेति पाठे स्पष्टोऽर्थः ॥

प्रमाणबलदर्पितावित्यत्र प्रमाणं देहस्य प्रकृष्टं मानं देहस्थौल्यमित्यर्थः। तच्च बलञ्च ताभ्यां दर्पितौ ॥

कूर्मस्त्रियोजनोत्सेध इत्यत्र उत्सेधः कायस्यौन्नत्यम् । 'उत्सेधः काय उन्नतिरि'त्यमरः ॥

उपयुज्य एतौ गजकच्छपौ भक्षयित्वा कर्म साधय । न[1] नोऽभाङ्क्षीदित्यत्र अयं गरुत्मान् नः अस्मान् न अभाङ्क्षीत् भग्नान्नाकार्षीदिति समकम्पन्तेति योजना । 'भञ्जो आमर्दन' इति धातोः लुङि अभाङ्क्षीदिति रूपं निष्पन्नम् ॥

तत्र रोहिणपादप इत्यत्र रोहिणो वटः । 'रोहिणस्तु वटः स्मृत' इति वागुरिः ॥

पुत्र मा साहसं कार्षीरित्यत्र सहसा कर्तुं योग्यं साहसं सहसा शाखोत्सर्जनमिति यावत् ॥

प्रजाहितार्थमारम्भ इत्यत्र मातृदास्येन गरुडस्यापि सर्पदास्ये जगदुपद्रवकारिणां सर्पाणां शि[2]क्षकाभावेन स्वदास्यपरिहारोपि प्रजाहितार्थमेवेति भावः ॥

न तां [3]वार्धः [4]पैरीणाहेच्छतचर्मा महानणुरित्यत्र शतचर्मा महिषाणां शतस्य चर्मभिर्निर्मितः महान् आयामेन महान् अतिदीर्घः बहुयोजनपर्यन्तमायत इत्यर्थः । अणुः विस्तारेणाणुः । सूक्ष्माङ्गुलिवत् सूक्ष्मतया रचितः (इत्यर्थः)। वार्धः वारु इत्यपभ्रंशभाषया कथ्यमानश्चर्मकृतरज्जुविशेषः । तां या गरुडधृता शाखा तां न [5]पैरीणाहेत् परितो न वेष्टयेत । 'नह बन्धन' इति धातुः। अनेन शाखाया अतिस्थूलत्वं वर्तुलाकारत्वं गरुडस्य बलाधिक्यं चोक्तं भवति ॥

तवापराधाद्देवेशेत्यत्र प्रमादात् वालखिल्यानां तपसः अनवधानात् अत एव जातादपराधात् तदपहासोल्लङ्घनरूपात् ॥

---

[1]मा नो भांक्षीदित्यत्र अयं गरुत्मान् नः अस्मान मा भांक्षीत् भग्नान्मा कार्षीत् मा भंज्यादित्यर्थः । इति समकम्पन्तेति योजना । 'भंजो आमर्दन' इति धातोः लुङि अभांक्षीदिति रूपं निष्पन्नम् । 'न माङ्योग' इत्यडभावः ॥

[2]शिक्षाभावेन. [3]वार्ध्रः (वाध्रः). [4-5]परिणहेत.

स्वदेहरूपाण्यादायेत्यत्र स्वदेहं रूपयन्ति प्रकाशयन्तीति कृत्वा स्वदेहरूपाणि शस्त्राणीत्यर्थः ॥

इत्यास्तीके त्रयोदशोऽध्यायः ।

## ॥ चतुर्दशोऽध्यायः ॥

पलाशवृन्तिकामेकामित्यत्र पलाशवृक्षस्य वृन्तिका पुष्पाधारभूता समित् 'वृन्तं प्रसवबन्धनमि'त्यमरः ॥

एवमस्त्विति तं चापीत्यत्र एवं त्वत्प्रश्नानुसारेण अस्तु, अस्मन्मुखादुत्तरमस्तु; तथास्त्वित्यङ्गीकृत्य वालखिल्या उत्तरमूचुरित्यर्थः ॥

इत्यास्तीके चतुर्दशोऽध्यायः ।

## ॥ पञ्चदशोऽध्यायः ॥

भौवनः सुमहावीर्य इत्यत्र भौवनः विश्वकर्मा ॥

कृत्वा विनिहतो युधीत्यत्र विनिहतः विशेषेण ताडितः ॥

देवान् स विरराद हेत्यत्र 'रद विलेखन' इति धातोः विरराद विदारयामासेत्यर्थः । विददारेति पाठे स्पष्टोऽर्थः ॥

अश्वक्रन्देन वीरेणेत्यत्र अश्वक्रन्दादयः प्रलिहान्ताः पक्षिणः देवानामभृतरक्षिणः ॥

ततो नवत्या नवतिं मुखानामित्यत्र मुखानां नवतिं कृत्वा तया नवत्या नदीः समापीयेति सम्बन्धः ॥

इत्यास्तीके पंचदशोऽध्यायः ।

## ॥ षोडशोऽध्यायः ॥

स चक्रं क्षुरपर्यन्तमित्यत्र क्षुरवत्क्रूरः पर्यन्तोऽन्तिमधारा यस्य तत् ॥

स वव्रे तव तिष्ठेयमित्यत्र विष्णुरथध्वजोपरि स्थितस्य स्वस्य विष्णोरु-

पर्यवस्थानस्यापि सत्त्वात्तवोपरीत्युक्तम् ॥.

व्रियमाणस्यैव वरत्वात् त्वया मत्तो व्रियमाणा सेवाऽपि वर एवेति भावेनोक्तं—भवतोऽपि वरं दद्मीति । अत एव भगवान् वृणीतामित्युक्तम् ॥

ध्वजं च चक्रे भगवानुपरि स्थास्यसीत्यत्र ध्वजं उपरि उपर्युपरि ध्वजसमीप इत्यर्थः । अत एव द्वितीया । स्थास्यसीत्युक्त्वा तं—तवोपरि तिष्ठेयमिति प्राक् गरुडेन स्वीकृतं वरं चक्रे अङ्गीचकार ॥

खगो महदिदं भूतमित्यत्र अयं खगः इदं उत्तमत्वेन प्रसिद्धं यद्विष्ण्वादिकं महद्भूतं तेष्वेकं इति मत्वेति सम्बन्धः ॥

इत्यास्तीके षोडशोऽध्यायः ।

( सप्तदशः, समाप्तं सौपर्णम् । )

## ॥ अष्टादशोऽध्यायः ॥

भुजङ्गमानां शापस्येत्यत्र मात्रा कद्वैव भुजङ्गमानां शापस्य सुतेन अरुणेन च विनताया एव विनताख्यमातुरेव शापस्य च कारणमुक्तमिति सम्बन्धः ॥

इत्यास्तीके अष्टादशोऽध्यायः ।

## ॥ एकोनविंशोऽध्यायः ॥

अनन्त भोगं परिगृह्य सर्वमित्यत्र हे अनन्त! यथाऽहं सर्वं भोगं सर्वैर्जनैर्भुज्यमानं भोगं परिगृह्य सर्वभोगाधिपतित्वात्[1] सर्वैर्जनैर्भुज्यमानभोगादेकांशं संगृह्य लोकान् धारयामि; यथा वा बलभित् तथा भवान् सर्वं भोगं परिगृह्य धारयितेति पूर्वक्रियावृत्त्या योजना ॥

अभ्यगच्छत नागैस्तु देवैरिव च वासव इत्यत्र देवैः सह वासव इव नागैः सह वासुकिः अभ्यगच्छत मन्त्रणाय[2] एकान्तस्थलं जगाम ॥

इत्यास्तीके एकोनविंशोऽध्यायः ।

[1]सद्भोगाधिपतित्वात्. [2]आमन्त्रणाय.

## ॥ विंशोऽध्यायः ॥

अव्ययस्याप्रमेयस्येत्यत्र अव्ययस्य अप्रमेयस्य सत्यस्य 'सत्यः को हंस-वाहन' इति वचनात् ब्रह्मणः अग्रतः अग्रे इत्यर्थः । अनेन कद्र्वा शापदान-समये ब्रह्माऽपि दैववशात्तत्रागत इति सूचितम् ॥

अपि मन्त्रयमाणा हीत्यत्र पुरा भृगुऋषिशापाद्गूढं अत एव नष्टं अदृष्टं गुहागतं गिरिगुहान्तर्गतं अग्निं यथा देवः ब्रह्मा स्पर्शादेव पवित्रीकरणसमर्थस्य तव सर्वभक्षणेऽप्यपवित्रभक्षणं कदाऽपि न स्यादित्युपायेन शापान्मोचयित्वा पुन-रुज्जीवयामास तथा मन्त्रयमाणा वयमपि मोक्षणे शापमोक्षणे अस्मदुज्जीवने च हेतुं हेतुभूतं कञ्चन देवं वा ब्राह्मणं वा पश्याम इति योजना ॥

विनाशकरणं हितमित्यत्र सर्पाणां विनाशकरणं जनमेजयस्य हितं कर्म पराभवेत् मध्ये केनचिदन्तरायेण[1] पराभवेत्तथा कार्यमिति योजना ॥

स नो बहुमतानित्यत्र वृद्धौ बहुमतान्नः यज्ञार्थं पृच्छतीति सम्बन्धः ॥

हेतुभिः कारणैश्चैवेत्यत्र हेतुभिः हिंसात्वादधर्मसाधनमित्याद्यनुमानैः कारणैः कृतेऽपि यज्ञे मृतस्य तव पितुः पुनरागमनं न भवतीत्यादिकारणैः ॥

सम्पत्सुधर्ममूलेत्यत्र सम्पत् सुधर्ममूला शोभनध(र्मा)र्म एव मूलं यस्याः सा तथोक्ता ॥

इत्यास्तीके विंशोऽध्यायः ।

---

## ॥ एकविंशोऽध्यायः ॥

न स यज्ञो न भवितेत्यत्र स यज्ञः भवदुक्तविधया न भवितेति न, स राजाऽपि न भवितेति न इति नञावृत्त्या योजनीयम् । भवद्भिर्यज्ञविघ्नोऽपि कर्तुं न शक्यते, राजवधोऽपि कर्तुं न शक्यत इति भावः ॥

तदिदं दैवमस्माकं भयमित्यत्र दैवं देवाज्जातम् ॥

देवानां पन्नगश्रेष्ठा इत्यत्र पितामहं मम मातुरग्रे आगत्य स्थितं पिता-महं उपागम्य सहायेनोपागम्य इयं कद्रुः तीक्ष्णा तीक्ष्णा इति वदतां दुःखा-

---

[1] केनापि तदन्तरायेण.

र्तानां महात्मनां देवानां वचः भयात् अदृष्टपूर्वब्रह्मादिभयङ्करपुरुषदर्शनोत्थभयात् मातुरुत्सङ्गमारूढः स(मा)मश्रौपमिति पूर्वेण सम्बन्धः ॥

कारणं-यन्न वारितेत्यत्र यद्यस्मात्कारणात् समीपस्थोपि त्वं वारिता शापस्य निवारयिता न, यद्वा शापकर्त्री सा त्वया न वारिता न निवारिता एतत्कारणं विज्ञातुमिच्छाम इति सम्वन्धः । यन्न वारितमिति पाठे स्पष्टोऽर्थः। मातुरुत्सङ्गमारूढः देवानां वचः स(मा)मश्रौपमिति वचनात् तवाग्रत इति वचनात् यन्न वारितेति वचनात् सत्यस्य च तथाग्रत) इति प्रागुक्तवासुकिवचनाच्च देवैः सह ब्रह्मा शापदानसमये अधार्मिकसर्पनाशाय शापमनुमन्तुं धार्मिकसर्परक्षणाय शापपरिहारं च सूचयितुं कद्रुगृहं प्रत्यागत इति कथा कथितप्रायेति ज्ञेयम् ॥

प्रतिपेत्स्यति तं तदेत्यत्र प्रतिपेत्स्यति प्रतिपेधं करिष्यति ॥

इत्यास्तीके एकविंशोऽध्यायः ।

---

## ॥ द्वाविंशोऽध्यायः ॥

मयैव तद्वितीर्णं वै इत्यत्र तत् भयं वितीर्णं विशेषेण तारितं अत्र सर्पभयमोचने पुरा एलापत्रेण वासुकेः पुरस्तात् यद्वचनमभिहितं तन्मम वचनं काले जरत्कारोर्भार्यापेक्षाकाले प्राप्ते तदा तदैव तद्वचः करोतु इति सम्वन्धः । तदा ये पापाः ते विनशिष्यन्ति ये धर्मचारिणः ते न विनशिष्यन्तीत्युत्तरत्र वा सम्बन्धः ॥

नित्ययुक्तः समादधादित्यत्र जरत्कारोरर्थे समादधात् तत्र तत्र सम्यगादधात् तं मुनिं दृष्ट्वा वक्तुं स्थापितवानित्यर्थः ॥

इत्यास्तीके द्वाविंशोऽध्यायः ।

---

## ॥ त्रयोविंशोऽध्यायः ॥

शरीरं कारु तस्यासीदित्यत्र तस्य ऋषेः क्षुत्पिपासाद्यायासदातृत्वात् शरीरमेव कारागृहवत् कारु दारुणमासीदिति सम्वन्धः ॥

उग्रश्रवसमामन्त्र्येत्यत्र उग्रश्रवसं सूतम् ॥

सख्योक्तः क्रीडमानेनेत्यत्र क्रीडमानेन सख्या कृशेन कृशनामकेन ऋषिपुत्रेण सह चर्मार्थे कृष्णाजिनार्थे संरब्धः कुपितः चर्म देहीत्युक्ते न दिशतीति कुपित इति यावत् । अतीव कोपनः शृङ्गी हसता तेन उक्तः वक्ष्यमाणप्रकारेणोक्तः इति योजना ॥

विद्धोऽयान्नष्टवान् मृग इत्यत्र विद्धः मृगः नष्टवान् 'नश अदर्शने' इति धातोः नष्टमदर्शनं तद्वान् सन् अयात् गतवानिति योजना ॥

इत्यास्तीके त्रयोविंशोऽध्यायः ।

---

## ॥ चतुर्विंशोऽध्यायः ॥

हतो हन्ति न संशय इत्यत्र हतः पुरुषः हन्तारं हन्ति देहनाशेन वा तपोनाशेन वा हन्ति ॥

तेषां नाशोऽस्ति धर्मत इत्यत्र तेषां राज्ञां कदाचित् धर्मतः धर्मस्य, सार्वविभक्तिकस्तसिः । नाशोऽस्ति बहुप्रजानां रक्षणे शिक्षणे च क्रियमाणे राज्ञां क्वचिद्धर्मनाशोपि भवति । धावतः स्खलनमिव [1]क्वचित्कधर्मनाशस्तेषां दोषो न भवतीति भावः ॥

व्रतमिदमित्यत्र इदं मौनव्रतमजानता तेन राज्ञा एतत् शवारोपणं कृतमिति सम्बन्धः ॥

इत्यास्तीके चतुर्विंशोऽध्यायः ।

---

## ॥ पञ्चविंशोऽध्यायः ॥

पितुरज्ञातमद्य वै इत्यत्र अज्ञातं यथा भवति तथा ॥

इत्यास्तीके पंचविंशोऽध्यायः ।

---

[1] क्वचिद्धर्मनाशः.

## ॥ सप्तविंशोऽध्यायः ॥

दश नागेन्द्रेत्यत्र वृक्षं दश दंशनं कुर्वित्यर्थः ॥

फलपत्रोदकं गृह्येत्यत्र फ(लं)ले स्वयं सूक्ष्मजन्तुरूपेण अन्तः प्रविश्य तदेव फलं पत्रं उदकं च मुनिरूपान् तान् भुजङ्गमान् गृह्य ग्राहयित्वा प्राहिणोदिति शेषं पूरयित्वा योजनीयम् । अन्यथा फलान्तस्तक्षकप्रवेशस्य अनुक्त्या[1] उपरितन-कथा निर्मूला स्यात् ॥

तथा परिहृतं भवेदित्यत्र तथा तेन प्रकारेण ऋषिवाक्यमिति शेषः । परिहृतं भवतु अस्यैव जन्तोस्तक्षकनाम्नि दत्ते अनेन दंशने च कृते तक्षको दश-त्विति वाक्यस्यैवमपि परिहारः स्यात् । एवञ्च ऋषिवाक्यमपि सत्यं भवेत्, मम मरणं च न स्यादिति भावः ॥

इत्यास्तीके सप्तविंशोऽध्यायः ।

---

## ॥ त्रिंशोऽध्यायः ॥

यत्रसायंगृहो मुनिरित्यत्र यत्र स्थले सायं सायङ्कालो भवति तदेव गृहं यस्य स यत्रसायंगृहः ॥

वीरणस्तम्बमाश्रितानित्यत्र वीरणस्तम्बं कटतृणगुल्मं औशीरं वा ॥

त्यजेयमप्रिये हित्वा कृते वासं च ते गृह इत्यत्र अप्रिये कृते सति ते गृहे वासं हित्वा त्यजेयमिति सम्बन्धः ॥

दुःखशीलमुपाचरदित्यत्र दुःखकरं शीलं यस्येति मध्यमपदलोपी समासः ॥

उपायैः श्वेतकाकीयैरित्यत्र श्वेतकाकीयैः अनुकूलैरुपायैः भाषितचेष्टि-ताद्युपायैः । तथाऽऽह वागुरिः— 'वदन्ति काकतालीयं दैवात्संप्राप्तमेव यत् । तथा च श्वेतकाकीयं अनुकूलार्थवाचकमि'ति ॥

मुहूर्तो रम्यदारुण इत्यत्र अग्निहोत्रकरणे रम्यः अकरणे दारुण इति रम्यदारुणः ॥

---

[1] अनुक्तत्वात्.

न चाह्वयमतस्त्वेहेत्यत्र अहेरियमाही तस्याः सम्बुद्धिः हे आहि ॥

यद्युक्तमनुरूपश्चेत्यत्र यद्वाक्यं युक्तं तस्याः प्रकृतोपयुक्तं, अनुरूपं स्वस्य गमनानुकूलं च तदब्रवीदिति सम्बन्धः ॥

इत्यास्तीके जरत्कारुगमनं नाम त्रिंशोऽध्यायः ।

---

## ॥ एकत्रिंशोऽध्यायः ॥

पुत्रः स्यात्ते ततो यदीत्यत्र ततः त्वद्भर्तुः ॥

दुर्वासतां विदित्वा चेत्यत्र दुःखेन एकत्र वासो यस्य सः दुर्वासः तस्य भावः दुर्वासता ताम् ॥

स्वैरेष्वपि ततो नाहमित्यत्र स्वैरेषु स्वेच्छानुसारेण मया सह विलासेष्वपि ततः तेन मुनीश्वरेण उक्तपूर्वं मन्मनोरञ्जनाय पूर्वमुक्तं वितथं अनृतं वाक्यं न स्मरामि। साम्पराये मम मोक्षणकाले वितथं वाक्यं कुतो वा वक्ष्यति। गमनकाले मयि प्रेमाभावः[1], मत्प्रियायोक्तत्वादपीदं वाक्यमनृतं नेति भावः ॥

सान्त्वमानार्थदानैश्चेत्यत्र सान्त्वं सामवचनं, मानः संन्मानः[3] ॥

इत्यास्तीके आस्तीकोत्पत्तिर्नाम एकत्रिंशोऽध्यायः ।

---

## ॥ द्वात्रिंशोऽध्यायः ॥

आसीद्यथा च निधनं गत इत्यत्र यथा निधनं गत आसीदिति सम्बन्धः ॥

तेन राज्ञा स्वनुष्ठिता इत्यत्र तेन राज्ञा(क)कारणेन सु शोभने कर्मण्येव अनु अनुकूलतया स्थिताः स्थापिताः सन्तः स्वकर्मसु स्थिता इति पूर्वेणान्वयः ॥

ततो दिष्टान्तमापन्न (इति पाठे) इत्यत्र दिष्टान्तं नाशम्। 'दिष्टान्तः प्रलयो(प्य)त्यय' इत्यमरः ॥

सर्पेणानतिवर्तिनेत्यत्र अनतिवर्तिना शृङ्गिऋषेर्वचनमतिवर्तितुमुल्लङ्घयितुमशक्तेन ॥

---

[1]मयि प्रेमाभावाभिप्रायेणोक्तत्वादपीदं. [2]प्रेमाभावात्. [3]संमानः. [4]दिष्टान्तमापेदे.

इदं वर्पसहस्रायेत्यत्र पाण्डवेभ्यः .[1]उपरि क्षेमकपर्यन्तं वर्पसहस्राय वर्प-सहस्रपर्यन्तं (वा) कुलधरागतं कुलधरेभ्यः तव प्रपितामहेभ्यः आगतं इदं राज्यं प्रति त्वं बाल एवाभिजातोऽसीति सम्बन्धः ॥

स मुनिः पृच्छतोऽपि सन्नित्यत्र पृच्छतोऽपि राज्ञः सन्नुत्तमः स मुनिः किञ्चिन्नोवाच ॥

इत्यास्तीके मन्त्रिवाक्यं नाम द्वात्रिंशोऽध्यायः ।

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

स्वेष्वङ्गेषु [2]युतं तथेत्यत्र स्वेष्वङ्गेषु शिक्षाकल्पादिषडङ्गेषु ॥

तक्षकश्छद्मनाऽऽकृत इत्यत्र छद्मना आकृतः आकारवान् जन्त्वन्त-राकारवानित्यर्थः ॥

पर्यपिक्षत्करे करमित्यत्र करे करं निधाय पर्यपिक्षत् पेपणं कृतवान्। 'पिष पेषण' इति धातोर्लुङि रूपम् ॥

ननु जीवेत्पिता ममेत्यत्र जीवेत् काश्यपप्रभावेन जीवेत् इति योजना ॥

काश्यपस्य प्रयोगेणेत्यत्र सुनयेन मम पितुः शोभनविनयेन विनय-दर्शनेनेति यावत् । मन्त्रिणः मन्त्रशक्तिमतः काश्यपस्य प्रयोगेण मन्त्रप्रयोगेण यदि जीवेदिति सम्बन्धः ॥

अपचितिं पितुरित्यत्र अपचितिः पूजा । 'पूजा नमस्याऽपचितिरि-' त्यमरः ॥

इत्यास्तीके त्रयस्त्रिंशोऽध्यायः ।

## ॥ चतुस्त्रिंशोऽध्यायः ॥

इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यतीत्यत्र सर्पसत्रे उपरि भविष्यति सति पूर्वं यज्ञशालाकरणसमये इदं स्थपतिना वक्ष्यमाणं यज्ञविघ्नकरं यज्ञविघ्न-सूचकं निमित्तमुत्पन्नमासीदिति योजना ॥

---

[1]परं यावत् क्षेमकपर्यन्तं. [2]यतं.

इत्यब्रवीत्सूत्रधार इत्यत्र सूत्रधारः रथरश्मिरूपसूत्रधारः नौकासूत्रधारो वा । पौराणिको वृद्धः सूतः लोहिताक्षनामको जनमेजयसारथिः राजानं प्रति स्थपतिः कारुः, 'स्थपतिः कारुभेदे चे'त्यमरः । यज्ञायतने क्रियमाणे वचोऽब्रवीदित्यब्रवीत् । अनिष्टवार्ता स्वयमेव वक्तुमशक्तः स्थपतिः वृद्धसारथिमुखेन [1]याचितवानिति भावः ॥

प्राग्दीक्षाकालमित्यत्र समुद्रस्य मध्ये मध्येसमुद्रमितिवत् दीक्षाकालात्प्राक् प्राग्दीक्षाकालम् । 'क्षत्ता स्यात्सारथौ द्वास्थ' इत्यभिधानात् क्षत्तारं द्वारपालम् ॥

पुच्छैः शिरोभिरित्यत्र पुच्छैः शिरोभिश्च वेष्टयन्तः इतस्ततः कम्पनं कुर्वन्त इत्यर्थः । सङ्कटे प्राप्ते शिरःकम्पनं वालचालनं च सर्पाणां जातिरिति भावः ॥

गोकर्णस्य प्रमाणत इत्यत्र 'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते' इत्यभिधानात् विस्तृताङ्गुष्ठाग्रादारभ्य अनामिकाग्रपर्यन्तं यत्प्रमाणं तद्गोकर्णस्य प्रमाणम् । अतिसूक्ष्माश्च पतन्तीत्यर्थः । अश्नौ—अश्नात्यनेनाग्निरित्यश्निः स्रुक्, तस्यां प्रथमं प्रपतन्ति; अतः अग्निम् । (अ)परे अन्येप्येवमेव पतन्तीति योजना ॥

उंन्दुरा इव तत्रान्य इत्यत्र उं[2]न्दुराः मूषिकाः 'आखुर्वृषो मूषिकः स्यादुंन्दुरः कनकाह्वय' इति हलः ॥

इत्यास्तीके चतुस्त्रिंशोऽध्यायः ।

---

## ॥ पञ्चत्रिंशोऽध्यायः ॥

दिशो न प्रतिभान्ति मामित्यत्र मां प्रति दिशो न प्रतिभान्ति ॥

तदास्तीकमित्यत्र स चासावास्तीकस्तदास्तीकस्तम् । तमास्तीकमिति पाठे स्पष्टोऽर्थः ॥

इत्यास्तीके पंचत्रिंशोऽध्यायः ।

---

[1] सूचितवान्. [2] इन्दुराः.

## ॥ षट्त्रिंशोऽध्यायः ॥

उच्चैश्श्रवसोऽश्वराज्ञो यन्मिथ्या कुरुतेह मेत्यत्र यद्यस्मात्कारणात् इह उच्चैश्श्रवसः पुच्छे मिथ्या मिथ्याभूतं नीलिमानं मा कुरुत न कृतवन्त इति योजना ॥

प्रागेवानागते काल इत्यत्र तत्र तस्मिन् काले सर्पयागकाले अनागते सति प्रागेव त्वमजायथाः ॥

अमोघं नः कृतं न स्यादित्यत्र यदि त्वमिदं न करोषि तर्हि नः कृतं अमोघं न स्यात्, किन्तु मोघमेव स्यादित्यर्थः ॥

न ते मयि मनो जातु मिथ्या भवितुमर्हतीत्यत्र मयि इयं शक्तिर्मिथ्येति ते मनो भवितुं नार्हतीति योजना ॥

ब्रह्मदण्डेन पीडित इत्यत्र ब्रह्मभिः चण्डभार्गवादिब्राह्मणैः क्रियमाणदण्डेन दण्डनेन शिक्षयेति यावत् ॥

मान्यस्त्वं भयं कार्षीरित्यत्र त्वं मम अन्यो मा; किन्तु मातुलः। अत एव मान्यः। तस्मात्कदाचन भयं मा कार्षीरिति योजना ॥

आधाय चात्मनोऽङ्गेष्वित्यत्र आत्मनः अज्वरं भाविकार्यशङ्काज्वररहितं मनः अङ्गेषु षडङ्गेषु आधाय अग्न्यादींस्तोतुं शिक्षाकल्पव्याकरणादीन् स्मरन्नेव भृशं त्वरितः जगामेति मनोज्वरपदस्यावृत्त्या उत्तरार्धस्य योजना। यद्वा स्तोत्राङ्गभूतवाक्कौशलेषु सर्पयागस्तुत्यङ्गभूतेषु पुण्यश्लोकचक्रवर्तियज्ञेषु आत्मनः परमात्मनः अङ्गेषु करचरणाद्यङ्गेषु वा अज्वरं मनः आधायेति योजना ॥

इत्यास्तीके षट्त्रिंशोऽध्यायः।

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

स्वयं स्वकर्म प्रचचार यत्रेत्यत्र यत्र यज्ञे स्वकर्म स्वपूजात्मकं यज्ञकर्म स्वयमेव प्र प्रचयाय चचार कृतवान्। अनेन लोकशिक्षार्थं यज्ञकरणात् यज्ञभोक्तृत्वाच्च व्यासो न ऋषिमात्रं, किन्तु साक्षान्नारायण इति सूचितम् ॥

नैषां यज्ञो[1] विद्यत इत्यत्र एषां[2] यो यज्ञो विद्यते, सोऽपि अन्तरायादिना न प्रणश्येत् । एभ्यः[3] ज्ञानमत्यादानं अपरोक्षपरोक्षज्ञानयोरादानं च न प्रणश्येदिति योजना ॥

और्वाग्निजाभ्यामसि तुल्यतेजा दुष्प्रेक्षणीयोऽसि[4] भगीरथेनेत्यत्र भगीरथेन तुल्यतेजास्त्वं, भगी भाग्यवान्, 'रथ गतावि'ति धातोः दूरादागतेन मया दुष्प्रेक्षणीयोऽसीति[5] योजना ॥

इत्यास्तीके सप्तत्रिंशोऽध्यायः ।

---

## ॥ अष्टत्रिंशोऽध्यायः ॥

सर्वान् कामांस्त्वत्त एवार्हतेऽद्येत्यत्र तक्षकः यथा शीघ्रं एति आयाति तथा सर्वान् कामान् अर्हते । तक्षकानागमनमपि अस्मै वरं न देहीति भावः । अथवा तक्षकः यथा एति गच्छति तथा सर्वान् कामानर्हते तुष्टेन राज्ञा विप्राय किं न देयम् । अतस्तक्षकमोक्षणमपि दिशसि चेद्दिशेति भावः ॥

पुराणमागम्य ततो ब्रवीम्यहमित्यत्र पुराणि नानापत्तनानि अणति तत्रत्यवार्ता वेत्तुं[6] गच्छतीति पुराणः अमरावतीवार्ता ज्ञात्वा आगतश्चारस्तमागम्य प्राप्य ततस्तन्मुखात् पुराणं पूर्वेद्युर्जातं प्रमेयं आगम्य अवगम्य अहं ब्रवीमीत्यर्थः । अत एव प्राचीनवार्तायाः पुराणमिति लो(क)के प्रवादः । महापुराणमपि प्राचीनवार्तारूपत्वादेव हि पुराणम् ॥

हूयमाने तथा चैवेत्यत्र हूयमाने आजुहावेति प्रागुक्तत्वादाहूयमाने इत्यर्थः ॥

तं यज्ञं दृष्ट्वा तु भयमाविशदित्यत्र भयमाविशदित्यस्य भयाभावो मम इति भावः ॥

इत्यास्तीके अष्टत्रिंशोऽध्यायः ।

---

## ॥ चत्वारिंशोऽध्यायः ॥

सायं प्रातः पन्नगेन्द्रा इत्यत्र पन्नगेन्द्रा इति सम्बोधनम् ॥

---

[1]योगक्षो. [2]योगक्षो. [3]येभ्यः. [4]उत्प्रेक्षणीयोऽसि. [5]उत्प्रेक्षणीयः. [6]धातुं.

इतिस्मरं महानागा इत्यत्र इति स्मरः स्मरणं यस्य सः तं इतिस्मरम् ॥

तमप्याकाशगोचरे इत्यत्र आकाशे गवि भूमौ च चरे भवतां सञ्चारे सति हिंसितुं नार्हथेति पूर्वेणान्वयः ॥

दिष्टान्तं पुत्रपौत्रवानित्यत्र दिष्टान्तो नाशः । 'दिष्टान्तः प्रलयोऽत्यय' इत्यमरः ॥

श्रुत्वा धर्मिष्ठमाख्यानमित्यत्र श्रुत्वा पुण्यवर्धनं पुण्यस्याभिवर्धनं भवतीति योग्यक्रियाध्याहारेण योजना ॥

इति श्रीमन्महाभारते आदिपर्वण्यास्तीके श्रीवादिराजपूज्यचरणविरचित-
लक्षालंकाराख्यटीकायां चत्वारिंशोऽध्यायः ।
आस्तीकपर्व समाप्तम् ।

---

(सम्भवपर्व ६)

## ॥ प्रथमोऽध्यायः ॥

यन्नाति तपसा कश्चिन्न वेदाध्ययनेन चेत्यत्र अति अत्येति । 'उपसर्गाश्च क्रियासन्निधाने सति तद्विशेषका भवन्ति, असन्निधाने तु ससाधनां क्रियामाहुरि'ति वचनात् अतीत्युपसर्गोऽयं तिङ्साधनसहितां क्रियां वक्ति । तपसा आलोचनेन दुर्वादिनां मनस्सन्तापकरणेन वा । वेदाध्ययनेन वेदानां अधि अधिकतया, 'अय पय गता'विति धातोः अयनेन ज्ञानेन ब्रह्मणः सकलवेदार्थवेदित्वेऽपि व्यासज्ञानवत् स्पष्ट(त्वा)ताभावान्न साम्यम् । 'वेदो वेदविद्व्यञ्ज' इति वचनात् वेदनामकभगवज्ज्ञानेन वा । यद्वा वेदानां आधिः मनोव्यथास्थानीया उत्सन्नता अप्रमाणता अनित्यता पौरुषेयता चेत्यादिः, तैस्याय[2]नेनत्याजनेन, वेदानां सकलविद्याभ्यः अधि आधिक्यस्य अयनेन प्रापणेन वा । व्रतैः कल्पे कल्पे भारतपुराणब्रह्मसूत्रादिग्रन्थकरणव्रतैः । उपवासैः सकलचेतनाचेतनात्मकजगतः उप समीपे वासैः, ब्रह्मणः शतवर्षपर्यन्तं प्रलये अन्नाद्यनपेक्षणेन स्थितावपि देहपुष्टेरन्यूनत्वादुपवासैर्वा । प्रशान्त्या भृगुणा स्व(पा)पदेनैवं वक्षस्ताडने सति सोढ्वैव स्थितत्वात् प्रकृष्टया शान्त्या क्षमया । मन्युना

---

[1]धर्मसमाख्यानं. [2]तस्याः.

मननानुकूलचेतोव्यापारेण, अनाद्यनन्तकालेऽपि अयोग्येष्वेव नियमेन क्रियमाणेन योग्येष्वपि सत्यपराधे सानुग्रहं क्रियमाणेन च कोपेन वा ॥

राज्यं गां च विधानत इत्यत्र गां प्रियवाक्यं बहुक्षीरवतीं धेनुं वा ॥

सदस्यानभ्यपूजयदित्यत्र अभि स्वाभिमुख्येन अपूजयत्, तां पूजामपि अन्तर्यामिणः स्वस्यैवाकरोदिति यावत् । 'महसि महीयसे चे'ति श्रुतिः ॥

कथान्ते जनमेजय इत्यत्र कथान्ते कथामध्ये ॥

इति सम्भवे प्रथमोऽध्यायः ।

---

## ॥ द्वितीयोऽध्यायः ॥

वैशम्पायनमन्तिकादिति पाठे स्पष्टोऽर्थः । वैशम्पायनमुक्तवानिति पाठे उक्तवान् उक्तं—वचनं, तद्वान् प्रशस्तवचनवानित्यर्थः ॥

प्राप्येमां भारतीं शुभामित्यत्र गुरोर्व्यासात् शुभामिमां भारतीं जनमेजयाय कथां वदेत्याज्ञारूपवचनं प्राप्य मुदा सन्तोषेण जातः परिस्पन्दः दक्षभुजादिषु चलनं, परितः रोम्णां स्पन्दः चलनं रोमाञ्चो वा । मे इति पाठे मे परिस्पन्द इति सम्बन्धः । वक्तुं उपरितनकथां वक्तुं मां प्रोत्साहतीव अन्तर्णीतणिजर्थत्वात् प्रोत्साहयतीव प्रकर्षेणोत्साहवन्तं करोतीव । सच्छिष्यलाभात् शकुनाच्च वदानीत्युल्लासो जायत इति भावः ॥

प्रक्षिप्य पुनराव्रजन्नित्यत्र आव्रजन् स्वपुरं प्रत्यागताः ॥

तदा संच्छिद्य बन्धनानित्यत्र बध्नन्तीति बन्धनाः पाशाः तान् ॥

स तेषां विप्रकारेष्वित्यत्र तेषु तेषु विप्रकारेषु विषदानादिरूपेषु विरुद्धप्रकारेषु कृतेषु सत्सु महान् कविः सः विदुरः प्रतिघाते, विषदाने सर्पदंशने च इच्छाव्यक्त्या[1] स्वमूलरूपात् विषनिर्हरणशक्त्याकर्षणेन विषा(घ)द्यपकारस्यैव नाशने, भीमस्य ततः मोक्षणे च; प्रमाणकोटौ श्वासनिरोधशक्तेः पाशच्छेदनशक्तेश्चाकर्षणेन जलाद्यपकारस्यैव नाशने, भीमस्य सुखेनैव परावृत्त्यागं-

---

[1] इच्छाशक्त्या.

मनाख्यमोक्षणे च; लाक्षागृहे अग्निना लाक्षागृहाद्यपकारस्यैव नाशने, गुहाद्वारा मात्रा सह पञ्चानामपि सुखेन मोक्षणे च प्रहितः प्रकर्षेण पाण्डवानां हितः अभवदिति सम्बन्धः ॥

संवृतैर्विवृतैरित्यत्र संवृतैराच्छन्नैः विपदानादिभिः; विवृतैः स्पष्टैः अन्योन्यमुष्टिघातादिभिः ॥

स[1] दाहयच्च विस्रब्धानित्यत्र यैः 'मोक्षणे प्रतिघाते च विदुरः प्रहितोऽभवदि' त्यत्रोक्तः सः विदुरः विस्रब्धान् पुरोचनादीन् पावकेन भीमदत्तपावकेनैव तदा लाक्षागृहात् खनिर्गमनसमये दाहयत् अदाहयत् । विदुरस्यैव वचनात् खनित्री खनित्राणां उद्दालकादीनां[3] सम्बन्धिनी या गुहा विहिता, 'खनित्रमवदारणमि' त्यमरः । यां च गुहां अस्यैव वचनात् पाण्डवाश्च विदुः ततः तया योगेन उपायेन स विदुर एव मोक्षयामासेति योजना । यद्वा स भीमः विदुरस्यैव वचनात् दाहयत्[4] । विदुरस्यैव वचनात् या खनित्री कृता ततः तया योगेन उपायेन मात्रादीनूढ्वा स भीमः स्वयमेव मोक्षयामास । एवञ्च विदुरस्यैव वचनादिति मध्यस्थितं वाक्यं देहलीदीपन्यायेन पूर्वत्र उत्तरत्र च सम्बध्यत इति ज्ञेयम् ॥

अथ सन्धाय ते वीरा इत्यत्र सन्धाय क्षत्रवेपमाच्छादयाम इत्यनुसन्धाय ॥

वासाय[5] खाण्डवप्रस्थ इत्यत्र खाण्डववनसमीपस्थत्वादिन्द्रप्रस्थं खाण्डव-, प्रस्थमित्युच्यते ॥

केशवेनाभवत्सह । व्यवसायद्वितीयेनेत्यत्र व्यवसायः कर्तव्यार्थनिश्चय एव द्वितीयः सहायो यस्य तेन केशवेन सह स्थितस्य पार्थस्य, विष्णोः तस्य कृष्णस्य शत्रुवधेषु कंसादिशत्रुवधेष्विव अतिभारो नाभूदिति योजना । व्यवसायद्वितीयस्येति पाठे विष्णोरितिपदस्य विशेषणम् ॥

---

[1] सोदाहयत्. [2] सः. [3] (सु)कुद्दालादीनां. [4] अदाहयत्.
[5] वासाय खाण्डवप्रस्थमित्यत्र 'खाण्डवो बलसूदन' इत्यभिधानात् खाण्डवशब्दस्येन्द्रशब्दपर्यायत्वात् खाण्डववनसमीपस्थत्वाचेन्द्रप्रस्थं खाण्डवप्रस्थमित्युच्यते ।

महाप्रस्थानिकान् कृत्वेत्यत्र महच्च तत्प्रस्थानं च महाप्रस्थानं तत्सम्बन्धिनो व्यापाराः प्रदक्षिणहर्यर्चनशरीरविनिपातनाद्याः ॥

एवमेतत्पुरावृत्तमित्यत्र अक्लिष्टकर्मणां तेषां पाण्डवानां भेदः दुर्योधनादिभिः सह विरोधः, राज्यविनाशः दुर्द्यूतकरणेन राज्यनाशः, अन्ते जयश्चेत्येतत्पुरावृत्तं पूर्वं जातं चरित्रम् ॥

इति सम्भवे कथासंक्षेपो नाम द्वितीयोऽध्यायः ।

## ॥ तृतीयोऽध्यायः ॥

प्रशस्यन्तश्च मानवैरित्यत्र 'व्यत्ययो बहुलमि' ति वचनात् प्रशस्यन्तः प्रशस्यमानाः ॥

कार्ष्णं वेदमित्यत्र कार्ष्णं कृष्णस्य वेदव्यासस्य सम्बन्धी कार्ष्णः तम् ॥

इदं पुंसवनं चैवेत्यत्र पुंसां पुंमपत्यानां[1] सवनं प्रसूतिर्यस्य श्रवणात् तत्पुंसवनमित्यर्थः ॥

महर्षियुवराजाभ्यामित्यत्र युवा चासौ राजा च युवराजः । अनेन यौवनवयस्येव भारतश्रवणं कर्तव्यं; न तु वार्धके बधिरान्धतादशायामिति सूचयति । ज्ञानिनां मोक्षाय राज्यार्थिनां राज्याय च श्राव्यमिति सूचयति । राज्यस्थेन जनमेजयेन श्रुतत्वात् यस्तु राजा श्रुणोतीदमिति वक्ष्यमाणवचनविरोधाच्च श्वस्तनो राजा युवराज इति नात्र ग्राह्यम् । तदा यौवनवयस्येव ॥

पुत्राः शुश्रूषव इत्यत्र भारतानां महज्जन्म अनसूयया शृण्वतः पुरुषस्य पुत्राश्च सन्ति शिष्याश्च सन्तीत्यर्थः ॥

अनेकजन्मन इत्यत्र गौरीवह्निगङ्गाशरादिषु जन्म यस्य सोऽनेकजन्मा तस्य ॥

ब्रह्मणो भार्गवानामित्यत्र ब्रह्मणः ब्राह्मणकुलस्य वेदस्य ·वा ॥

इह नैकाश्रयं जन्मेत्यत्र नैकाश्रयं अनेकप्रकाराश्रयं ननाविधं जन्मेत्यर्थः ॥

---

[1] पुंमत्यानां.

वि ज्ञेयः सर्ववेदानामित्यत्र सर्ववेदानां पारणे पारायणे क्रियमाणे सति भारतं च वदन् विशिष्टज्ञेय इति सम्बन्धः ॥

इह तत्तत्समासाद्येत्यत्र गत्यर्थानां ज्ञानार्थकत्वात् समासाद्य ज्ञात्वा ॥

दर्शनं चैव कीर्तितमित्यत्र दर्शनं कर्तव्यमिति कीर्तितमिति योग्यपदाध्याहारः ॥

महाभारतमुच्यत इत्यत्र महाभारतमपि सूक्तिरत्नाकर इत्युच्यत इत्यर्थः ॥

अक्षय्यं स्वर्गगामीयमित्यत्र स्वर्गगामिनामपेक्षितं स्वर्गगामीयं अक्षय्यं स्थानं सुखं वा तस्य पितॄनुपतिष्ठति । अन्नपानं तदिति पाठे स्पष्टोऽर्थः ॥

प्रातर्यदेनः कुरुत इत्यत्र महाभारतमाख्याय पश्चात्सन्ध्यां पश्चिमसन्ध्यां चरन् प्रातः यदेनः कुरुते तस्मादेनसः प्रमुच्यत इति योजना । एवमुत्तर(त्र) श्लोकेऽपि ॥

भारतानां महज्जन्मेत्यत्र यत्रोच्यते तन्महाभारतमुच्यत इत्युत्तरपदाकर्षणेन योजना ॥

त्रिभिर्वर्षैर्महाराजेत्यत्र अब्रवीत् स्वावतारानन्तरं त्रिभिर्वर्षैरतीतैः सद्भिः उत्पत्त्यनन्तरं वर्षत्रये जाते सतीत्यर्थः । अब्रवीत् कृतवान् । 'जातमात्रः स ववृधे सप्तवर्षोऽभवत्तदे' ति वक्ष्यमाणत्वादुत्पत्तिदिन एवोपनीतो भूत्वा वर्षत्रयात्प्रागेव वेदादिकं कृत्वा वर्षत्रये जाते सत्येव भारतं कृतवानिति भावः । अनेन पाण्डवानां वनवासादिनानाचरित्रस्य विचित्रयुद्धकौशलस्य च पाण्डवोत्पत्तेः प्रागेव वर्णनात् व्यासस्य महासार्वज्ञं सूच्यते । अत एव 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेदि' त्युक्तम् ॥

इति सम्भवे तृतीयोऽध्यायः ।

---

## ॥ चतुर्थोऽध्यायः ॥

पूरोर्वंशं महाधन्यमित्यत्र पूरोर्वंशं प्रवक्ष्यामि । तेषां तद्वंशोद्भवानां ते पितॄणां नामानि मे मत्तः शृण्विति सम्बन्धः ॥

---

[1]वि विशिष्टो ज्ञेयः. [2]उपतिष्ठते. [3]प्रच्युतः. [4]विभज्य. [5]पूरोर्वंशमहं धन्यं.

अव्यक्तप्रभवो ब्रह्मेत्यत्र अव्यक्तो नारायणः तस्मात्प्रभवो यस्य स तथोक्तः। शाश्वतत्वं नित्यत्वं अव्ययत्वं न विष्णुवत्सर्वदेति सूचनाय विसन्धिकरणम् ॥

तत्रानुवंशो भवतीत्यत्र अनुवंशो नाम वंशवर्णनानुकूलश्लोकः[1] ॥

मागधीं मगधवंशजाम् ॥

यः प्राचीं दिशं जिगायेत्यत्र (मागधीं मगधवंशजां) यावत्प्राचीं दिशं 'यावती प्राची दिक् तां सर्वां सूर्योदयात् सूर्योदयकालमात्रात् जिगायेति सम्बन्धः॥

आश्मकीं अश्मकपुत्रीम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥

तमुदवसान इत्यत्र उत् उत्सवस्यावसाने उदवसाने ॥

माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ॥ भरस्व पुत्रं दुष्यन्त[2]! सत्यमाह शकुन्तलेत्यत्र स्वोदरे वायुं परिपूर्य काले काले मुञ्चन्ती चर्मनयी कारूणामुपकारिणी काचन सामग्री भस्त्रा। तद्वन्माता। पुत्रस्तु पितुरेव। यस्मात् सः पितैव मातुरुदरे स्वरेतोरूपेण जातः। शुक्रान्तस्स्थितजीवस्य मातुरुदरप्रवेशानन्तरं जीवावरकं तदेव शुक्रं मातृभुक्तान्नरसादिना देहाकारेण परिणतं भवति। शोणितं तु बिसजस्य पङ्क इव आधारमात्रमिति भावेन स एवेत्युक्तम्। यथा कारुकरपूरितभस्त्रानिस्सृतो वायुः कारोरेवोपकारकस्तथेति भावः ॥

हे नरदेव दुष्यन्त! यं यः, पुत्रं पुत्रः, रेतोधाः रेतोधातारं पितरमिति पदत्रयस्य 'व्यत्यासः प्रातिलोम्यं चे'ति वचनात् विभक्तिव्यत्यासेन योजना। अक्षयं लोकं नयति; 'नापुत्रस्य लोकोऽस्ती'ति श्रुतेः। तस्यास्य गर्भस्य सर्वदमनाख्यस्य शकुन्तलागर्भस्य धाता रेतोधाता च त्वम्। अतः कारणात् तव पुत्रं त्वमेव भरस्वेति पूर्वेणान्वयः ॥

यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते। पुनर्युवाऽऽस्यां भवति तस्मात्तं शन्तनुं विदुरित्यत्र सः शन्तनुः यं यं जीर्णं वार्धकवशाज्जी(र्णे)र्णसर्वावयवसंधिं कराभ्यां स्पृशति, स सुखं घुरुघुरायमाणकण्ठादिषु यद्दुःखं तदपोह्य सुख-

---

[1] वंशानुवर्णनश्लोकः. [2] दौष्यन्तिं.

मश्नुते । पुनराभ्यां कराभ्यां तमेव यदा स्पृशति, तदा सः युवा सर्वाङ्गकार्श्यं परित्यज्य यौवनवयस्थवपुष्टाङ्गो भवति । तस्मात्तं शन्तनुं सुखदायकत्वात् शं, 'तनु विस्तार' इति धातोर्देहपुष्टिहेतुत्वात् तनुः । शं चासौ तनुश्चेति शन्तनुः। शान्तो भवेत्युक्ते तनुत्वमल्पत्वं गत इति व्युत्पत्तिः समुद्राख्यमूलरूपगुणादागता । इयं तु व्युत्पत्तिः कार्यरूपावतारगुणादेवेति विवेकः । पुनर्युवा चेति क्वचित्पाठः । तत्राप्येवमेव योजना ॥

**त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यतीत्यत्र** एतादृशः (यादृशो मम, एतादृशः) एतत्सदृशः भावः अवस्था, स्त्रीसङ्गे सति मरणमित्यर्थः । त्वामपि क्षिप्रं गमिष्यतीति योजना ॥

**जात एवायमजायतेत्यत्र** जात एवायं कुमारः अजायत अजवत् अजातवदाचरमाणो बभूव, श्वासोच्छ्वासादिकं नासीदिति भावः । अभिमन्योः सत्येन इयं पृथिवी अनेन कुमारेण धारिता पालिता आसीत् । (अभिमन्योर्जात एवायं कुमारः, सत्येन सत्यकामेन परमात्मना, तदाज्ञयेत्यर्थः, इयं पृथिवी धारयत्विति च अजायतेति योजना ॥)

इति सम्भवे चतुर्थोऽध्यायः ।

---

## ॥ पञ्चमो(षष्ठो)ऽध्यायः ॥

**देवराड्यज्ञसहित इत्यत्र** यज्ञो यज्ञाभिमानी देवः ॥

**इन्द्रोऽहमिति धैर्येणेत्यत्र** सः वसुः धैर्येण, तपसा स्वकीयोग्रतपसा इति पूर्वोक्तप्रकारेण च इन्द्रादीनामुपास्त्या च अहमेवेन्द्र इत्यमन्यतेति योजना। अन्यथा इतिशब्दद्वयस्य वैयर्थ्यं स्यात् ॥

**न सङ्कीर्येत धर्मोऽयमित्यत्र** अयं यस्य यस्य हरिणा या या पदवी दत्ता, ब्रह्मणो ब्रह्मता इन्द्रस्येन्द्रता चक्रवर्तिनश्चक्रवर्तितेत्यादिरूपेण प्रतीयमानो धर्मः न सङ्कीर्येत; इन्द्रस्यैव ब्रह्मत्वं चक्रवर्तिन एवेन्द्रत्वमित्यादिरूपेण सङ्करवान्न भवत्वित्यर्थः । त्वं च चक्रवर्त्येव भव, मदिन्द्रत्वं त्वयि न मन्यस्वेति भावः ॥

---

[1]यौवनवयस्स्थवत्. [2]पूर्वार्धोक्तप्रकारेण.

ऊधः पृथिव्या यो देश इत्यत्र गोरूपाया उत्तराभिमु(ख्याः)खायाः परशुरामभूमेः गोकर्णाख्यप्रदेशः कर्णस्थानीयः वसुपुराख्यनगरीं परितो विद्यमानो यो देशः स ऊधस्स्थानीयः क्षीरस्थानीयैः बहुसस्यफलादिभिः परिपूर्ण इति भावः। वसुचक्रवर्तिना रक्षितत्वाद्धि वसुपुरम्। वसुरूरु इत्यपभ्रंशभाषा। तदेव स्पष्टयति— पशव्यश्चेत्यादिना॥

अत्यन्यानेष देशो हीत्यत्र एष देशः अन्यान् देशान् अति अत्येतीत्यर्थः॥

वस वेदिषु चेदिपेत्यत्र वेदिषु समुद्रसह्याचलयोर्मध्ये दीर्घाकारेण तिर्यग्वर्तमानत्वात् वेदिस्थानीयेषु, बहुयज्ञवेदिभरितत्वाद्वा वेदिषु देशेषु। वेदिष्विस्युक्त्या यज्ञवेदिसम्पन्नान् ब्राह्मणान् अहिच्छत्रादानीय तत्र स्थापयेति (च) सूचयति॥

युञ्जन्ति धुरि नागाश्चेत्यत्र नागाः सर्पाः कृशान् दरिद्रान् धुरि ऐश्वर्ये युञ्जन्ति, अनिष्टं कु(ष्ठा)ष्टादिकं सन्धुक्षयन्ति नाशयन्तीत्यर्थः। युञ्जन्ति धुरि नो गाश्चेति पाठे गाः वृषभान् धुरि भारोद्वहने न युञ्जन्ति। घट्टोपरिस्था एव गोषु भारोद्वहनं कुर्वन्ति। तौलवदेशस्थास्तु कर्षणमात्रे युञ्जन्ति, न तु भारोद्वहने। कृशान् व्याधिग्रस्तान् सन्धुक्षयन्ति 'धिङ् पोषण' इति धातोः पोषयन्ति। उकारस्ताच्छील्यार्थकः। संपुष्णयन्तीति पाठे सम्यक् पुष्टान् कुर्वन्ति। यद्वा कृशान् दरिद्रान् धुरि बलान्नो युञ्जन्ति; वेतनदानेन सन्धुक्षयन्ति तद्दारिद्र्यं नाशयन्ति च। 'धूञ् कम्पन' इति धातुः। अतोऽसौ देशो धर्मिष्ठ इति भावः॥

आकाशं स्फाटिकं महदित्यत्र आ समन्तात्काशत इत्याकाशं विमानम्। 'काशृ दीप्तावि'ति धातुः॥

एवं तु सान्त्वादित्यत्र सान्त्वात्सामवचनात्॥

वैणवीं यष्टिमित्यत्र यष्टिं इन्द्रध्वजरूपाम्॥

---

[1]धिक्ष. [2]यष्टिं च वैणवीमित्यत्र.

इष्टप्रदानमुद्दिश्येत्यत्र इष्टप्रदानाख्यं फलमुद्दिश्य इयं यष्टिः तवेष्टप्रदानं करिष्यतीत्युक्त्वेत्यर्थः ॥

प्रवेशं कारयामासेत्यत्र प्रविशन्त्यत्र नाना(जा)जनपदा इति प्रवेश उत्सवः ॥

अपरेद्युस्ततस्तस्या इत्यत्र अपरेद्युः तस्माद्दिनादपरदिन इत्यर्थः । योग्यतया पूर्वदिनं लभ्यते ॥

अलङ्कृतायाः पुलकैरित्यत्र पुलकैः वनमार्जारवीर्यरूपपरिमलद्रव्यैः ॥

महारजनवासांसीत्यत्र महारजनवासांसि रक्तकौसुम्भरसरञ्जितवासांसीत्यर्थः ॥

महारथो मगधराडित्यत्र महारथः महान्रथो यस्य सः मगधराट् मगधविषयाधिपतिः बृहद्रथ इति विश्रुतो यः जरासन्धपिता स एकः, अपराजितः राजा यदुश्च यदुनामक एकः पुत्रः ॥

इन्द्रप्रासादादित्यत्र प्रसाद एव प्रासादः । यद्वा इन्द्रदत्तस्वप्रासादात्, ल्यब्लोपनिमित्ता पञ्चमी, प्रासादमारुह्येत्यर्थः । आकाशस्फाटिके आकाशस्थस्फटिकमयविमाने ॥

राजोपरिचरेत्यत्र राज्ञामुपरि चरतीति राजोपरिचर ॥

पुरोपवाहिनीं तस्येत्यत्र तस्य वसोः पुरं वसुपुरं, तत्समीपवाहिनीं नदीं चेतनायुक्तः चेतनायोग्यदेहयुक्तः, कामात् मय्येवेयं नदी स्यातव्येति कामात् कोलाहलः कोलाहलनामको गिरिः ॥

तस्या ह्यार्तवमद्य वै इत्यत्र आर्तवं ऋतुकालसम्बन्धि दिनम् ॥

काये मत्स्या इत्यत्र मत्स्यस्य स्त्री मत्सी तस्याः काय इत्यर्थः ॥

सा कन्या दुहिता मत्स्या इत्यत्र यस्मात्कारणात्सा कन्या मत्स्या मत्स्यस्त्रियाः दुहिता तस्मात्सा च मत्स्यगन्धिनीति योजना ॥

संभवं चिन्तयित्वा तामित्यत्र संभवं श्येनकराज्जले पतितवसुरेतसः

[1] इन्द्रदत्तः यः प्रासादस्तस्मात्प्रासादात्.

सकाशादुत्पत्तिं चिन्तयित्वा ज्ञात्वा च तां वासवीं कन्यां विद्वान् कार्यवान् व्यासावताराख्यकार्यवान् शक्तिजः मुनिपुङ्गवः तां (प्रो)प्रत्युवाचेति योजना ॥

कलशं भविता भद्रे सहस्रार्धेन सम्मितमित्यत्र कलशं मम कमण्डलुः सहस्रार्धेन पञ्चशतजनेन, तावद्भारेणेति यावत्। सम्मितं भविता। शेषः उर्वरितः सहस्रार्धेन सम्मितः अहं भविष्यामि। एवं सहस्रजनभारो भविष्यतीति सहस्रजनसम्पन्ना नौर्मया वाह्यत इति तत्कौशलोक्तेः प्रत्युक्तिरियम्। वस्तुगत्या सहस्रजनेषु मिलितेष्वेव तारयामीत्यस्यासम्भावितत्वाद्विनोद एवायम्। यद्वा सहस्रार्द्धेन सहस्रसंख्यया आ समन्तात् ऋद्धेन मुनिजनेन सम्यक् मितं दृष्टं, सूत्रबन्धादिना निर्मितं वा कलशं कस्मिंश्चिन्मङ्गलकार्ये पूज्यमानं कलशं भविता अपरपारे भविता। अहं तत्रावश्यापेक्षितः शिष्यत इति शेषः अवशिष्टः भविष्यामि। यद्वा सहस्रार्द्धेन सहस्रेण शीर्षपादादिना सहस्रमहिमभिः सहस्रमूर्तिभिर्वा आ समन्तात् ऋद्धेन नारायणेन सम्मितं सदृशं कलशं 'कल ज्ञान' इति धातोः ज्ञानसुखात्मकमपत्यं हे भद्रे भविता त्वयि भविष्यति। अहं शेषः, मातापित्रोर्मध्ये त्वयि मातरि जातायां शेषः उर्वरितः पिता अहं भविष्यामि। अतस्तव च मम च हिताय [1]अचिरेण नौर्नीयतामिति गूढाभिसन्धेरुत्तरमिदम् ॥

दृष्टमात्रेण ते वपुरित्यत्र दृष्टाः मात्राः रूपरसादितन्मात्रात्मकसकलपदार्था येन तद्दृष्टमात्रं तेन दिव्यज्ञानेन दृष्टं ते वपुः प्रणयग्रहणार्थाय त्वयि स्नेहग्रहणार्थं वक्ष्ये इति सम्बन्धः ॥

हररूपेणेत्यत्र स्वयमेव गृहीतेन भूमेः स्वयमेवोद्भूतेन हररूपेण [2]अप(हा) हरलिङ्गरूपेणेत्यर्थः ॥

अङ्गैरङ्गेष्विवाहितानित्यत्र अङ्गेषु भुजाद्यङ्गेषु अङ्गैः प्रकोष्ठाद्यङ्गैः आहितान् प्रविष्टानिव स्थितान्। अतिसूक्ष्मत्वादेकाङ्गे अपराङ्गं प्रविष्टमिव तिष्ठतीति भावः ॥

---

[1]अचिरेणैव. [2]अपहरलिंगरूपेण.

यैरारभन्ते कर्माणीत्यत्र देवानां कल्पान्तजीवित्वेन देहान्तरासम्भवात् तेनैव देहेन पापफलभोगः । यथा रुद्रस्य कपालधारिता, इन्द्रस्य सहस्राक्षता । शापात्क्वचिद्देहान्तरसद्भावोऽस्ति, न केवलं पापादिति भावः । मनुष्याणां क्वचिदत्युत्कटपापफलस्य तेनैव देहेनानुभवेऽपि प्रायः पापानुभवो नरके जन्मान्तरे वेति भावः ॥

पितृहीना तु कन्या–त्वमित्यत्र त्वं पितृहीना पितृविवेकहीना । अग्न्याहितादिवत् असत्त्वोपि हीनपित्रङ्गीकारवती वा । वक्तृणां स्वेपामेव पितृत्वेन साक्षात्पितृहीनत्वस्यायोगादेवं योजना । कन्यात्वं कन्याभावं वसोः कन्यात्वं यतः समुपागता अतो राज्ञः सुता मत्स्ययोनौ भविष्यसि । तत्रापि स्वपितृमातृविवेकशून्या हीनस्य दाशस्य कन्येत्येव मतिं करिष्यसीति भावः ॥

शङ्करं सुतमित्यत्र शङ्करं सुखकरम् ॥

किङ्कृते च कृतं भवेदित्यत्र कृतं सुकृतम् ॥

श्रुतिस्मृतिविदो विप्रा इत्यत्र श्रुतिस्मृतिविदः विप्रा इत्युच्यन्ते । ज्ञानात् धर्मिष्ठ इत्युच्यत इति योजना । विवाहश्चाष्टमोऽधम इत्युक्त्या सप्तमो राक्षस इत्यूह्यम् ॥

वृद्धां पतिव्रतां वन्ध्यामित्यत्र वृद्धां स्वस्माद्वयोवृद्धां, पतिव्रतां पत्या पतित्वयोग्येन सह वाङ्निश्चयरूपव्रतवर्तीं, वन्ध्यां सामुद्रिकोक्तवन्ध्यालक्षणेन वन्ध्याम् ॥

अस्मच्छासनवाससीमित्यत्र अस्मच्छासनमेव वासः वस्त्रस्थानीयं यस्याः सा तथोक्ता । वस्त्रं यथा न मुञ्चति तथाऽस्मदाज्ञामपि नोल्लङ्घयतीति भावः ॥

यदीच्छेच्छसीत्यत्र वरो न्यसिष्णुश्चेत् पित्रादीनामिच्छा व्यर्था । अतः इच्छा वरस्येच्छा यदीत्युक्तम् । अकुलीना रूपवती वरस्येच्छामात्रेण न स्यात् । अतस्त्वं चेच्छसीत्युक्तम् ॥

अदृश्यन्त्या सहैव सेत्यत्र अदृश्यन्त्या अदृश्यन्तीनाम्न्या पराशरमात्रा स्वस्नुषया ॥

---

[1]अत्रापि. [2]यदीच्छसीत्यत्र.

इन्द्राणीं समकारयदित्यत्र इन्द्राणीं शचीसन्निधानवतीम् ॥

ब्रस्यां मुनिवरमित्यत्र ब्रस्यां ऋषीणामासने 'ब्रतिनामासनं ब्रसी'-त्यमरः ॥

सर्वतोदोवधूगृह इत्यत्र अदोवधूगृहे अमुष्मिन्वधूगृहे । यद्वा सर्वतः दाः शोभनं शोभनमित्यक्षतदातारो यस्य स तथोक्तः । सर्वतः सर्वाणि विवाहोचितकण्ठसूत्रकर्णपत्रहरिद्रादिमङ्गलद्रव्याणि दाः दातारो यस्य निकटे स तथोक्तः। यद्वा सर्वतः सर्वान् विघ्नकारिणो राक्षसादीन् स्वतपस्सामर्थ्येन तुदति व्यथयतीति सर्वतोदः । 'तुद व्यथन' इति धातुः । अपदातिस्तदा गत्वेत्यनेन शिबिकया ब्रह्मरथेनैवागत इति सूच्यते[1] ॥

इषुहस्तां समीक्ष्य चेत्यत्र क्षत्रियस्य वसोः पुत्रीत्वादिषुहस्तां शरहस्तामित्युक्तम् ॥

स्वैर्दास्यमानसुकृतकरणदुष्कृताकरणरूपदक्षिणायाः स्वर्ग एव फलमिति वक्तुमारभन्ते— कर्मभूमिर्हि मानुष्यमिति ॥

दक्षिणाबन्ध इत्युक्ते इत्यत्र इमे स्वर्गनरकसाधनीभूते सुकृतदुष्कृते सुकृतमेव कुरु दुष्कृतं कदाऽपि मा कुरु इति भावमुखेन अभावमुखेन च वराय दत्ते सुकृतदुष्कृते दक्षिणाबन्ध इत्युक्ते । ऐहिकभोगमात्रानुकूलधनदानादपि कन्यादातृभिर्विशिष्टैः आशीर्वादरूपेण वरस्य हृदयान्तस्स्थिरीकृता धर्मशीलता अधर्मदूरता च मुख्या दक्षिणेति पितॄणां हृदयम् । दक्षिणाबन्ध इत्येकवचनं तु साक्षादधर्मस्य विवाहकाले सर्वथा हेयस्य दक्षिणात्वायोगात् तमपि स्वाभावमुखेन धर्मानुस्यूतमेव स्वीकुर्विति सूचनार्थम् । योगिनः सकाशात् ईदृशदक्षिणाबन्धसंयुक्ता विवाहक्रिया प्रतिवर्तत इति योजना ॥

प्रतीच्छयैनामित्यत्र एनां कन्यां पाणिना पाणिं 'कामेन त्वा प्रतिगृह्णामी'ति वचनात् इच्छया कामेन प्रतिगृह्णीष्वेति योजना ॥

सप्तपर्णोऽभवत्तदेत्यत्र सप्तवर्णः सप्तवर्णबालोपमः ॥

---

[1] ब्रह्मरथेन वा गतः.

एतावन्मात्रयेत्यत्र एतावन्मात्रया उपचारक्रिययेति योग्यपदाध्याहारः ॥

दृश्यन्त्याश्च पराशर इत्यत्र सत्यवत्याः दृश्यन्त्याः पश्यन्त्याः सत्या इत्यर्थः ॥

पादापसारिणं धर्ममित्यत्र धर्मं मर्त्यानामायुः शक्तिं युगाद्युगं च पादापसारिणं एकैकपादस्यापसारः अपसरणं गमनं न्यूनता यस्य तम् । लिङ्गानुसारेण सम्बन्धो द्रष्टव्यः ॥

अधुना सत्यवतीकथाशेषं वक्तुमारभते— ततः सत्यवतीति । ततः व्यासेन सह पराशरस्य स्वाश्रमगमन(स्य)दर्शनानन्तरम् ॥

मम दृष्ट्वा सुशिक्षितमित्यत्र सुशिक्षितं नौकाप्रापणकौशलम् ॥

इति सम्भवे व्यासावतारानुवर्णनं नाम पंचमो (षष्ठो )ऽध्यायः ।

---

## ॥ सप्तमोऽध्यायः ॥

वसुवीर्यात्समभवदित्यत्र ल्यब्लोपनिमित्ता पञ्चमी । अष्टवसूनां शौर्यं स्वात्मनि सन्निधाप्य समभवदित्यर्थः । यदाहुः— 'तथा बलं नोऽखिलानामुपैत्वि'ति ॥

स धर्ममाहूय पुरेत्यत्र महर्षिः आणिमाण्डव्यः पुरा पूर्वं मक्षिकावधाच्छूलं प्राप्तोऽसीति स्वात्मानं प्रत्युक्तवन्तं धर्मं पुनराहूय आमन्त्र्य इदमब्रवीदिति सम्बन्धः । सहस्रसमितं मे तपः तपआख्यं कर्तृ तत् मक्षिकावधोत्थक्षुद्रपापं इह कस्मान्नाजयत् अजयदेव । तथापि तदेव पापं पर्वतीकृत्य मक्षीवधाच्छूलं प्राप्तोऽसीत्युक्त्वा मां मत्तपश्चाल्पीकुर्वंस्त्वमेव ब्राह्मणं मामवधीरिति अर्थात्प्राप्तवाक्यशेषः । यतः ब्रह्मवधः सर्वभूतवधाद्गरीयान्, तस्मात् कारणात् किल्बिषात् मद्वधरूपकिल्बिषात् त्वं शूद्रयोनौ जनिष्यसीति योजना ॥

प्रकृतेः प्रभवं परमित्यत्र प्रभवत्यस्मादिति व्युत्पत्त्या प्रभवं उत्पत्तिकारणम् । प्रकृतिं परमिति पाठे प्रकर्षेण करोतीति प्रकृतिः ॥

अनन्तमचलं मेरुमित्यत्र 'ईर प्रेरणे' इति धातोः मायाः लक्ष्म्याः ईरुं प्रेरणशीलं महामेर्वन्तर्गतं च ॥

युयुत्सुः करुणस्तथेत्यत्र करुणयति यस्मिन् पिता स करुणः कृपाविषय एव; न तु राज्यार्ह इति भावः । कारणादिति पाठे कस्माच्चित्कारणादित्यर्थः ॥

तेषामपरिमेयानि नामधेयानि सर्वशः । न शक्यं परिसङ्ख्यातुं वर्षाणामर्बुदैरपीत्यनेन अनादिकालमारभ्यानन्तकालपर्यन्तं प्रतिकल्पं भूत्वा भूत्वा मुक्तिं गताः सज्जीवास्तमोगता दुर्जीवाश्चानन्तानन्ताः सन्तीति तत्वमभिप्रैति ॥

इति सम्भवे सप्तमोऽध्यायः ।

---

## ॥ अष्टमोऽध्यायः ॥

ब्राह्मणान् क्षत्रिया राजन्नित्यत्र क्षत्रियाः क्षत्रियस्त्रियः ॥

नाकामात्मानृतौ तथेत्यत्र अनृतौ ऋतुरहितकाले ॥

न च स्त्रियं प्रजानातीत्यत्र सम्भोगयोग्या नारी स्त्रीत्युच्यते ॥

फेनपांश्च तदा वत्सान्न दुहन्ति स्म मानवा इत्यत्र फेनपान् वत्सान् मानवा न दुहन्ति 'दुह प्रपूरणे' इति धातोः अन्नरसादिना न पूरयन्ति । क्षीरं सर्वं स्वयमेव गृहीत्वा फेनमात्रपायिनो वत्सान् कृत्वा पुनस्तदुदरपूर्त्यर्थं मानवा न प्रयतन्ते । किन्तु गाव एव स्वक्षीरेण तान् पूरयन्ति । वत्सोदरपूर्त्यनन्तरमुर्वरितं क्षीरमेव मानवा गृह्णन्तीति भावः । यद्वा वत्सान् फेनपान् कृत्वा क्षीरं स्वयमेव न दुहन्तीत्यर्थः ॥

न कूटमानैर्वणिज इत्यत्र कूटमानैः कपटेन कृतमानैः । मानपदं प्रस्थादीनामप्युपलक्षणम् ॥

फलन्त्यृतुषु वृक्षाश्चेत्यत्र 'फल निष्पत्तावि'ति धातोः फलन्ति निष्पादयन्ति ॥

इह देवत्वमिच्छन्तो मानुषेषु प्रजज्ञिर इत्यत्र मनुष्येषु उत्पद्य तपः कृत्वा देवत्वं प्राप्स्याम इतीच्छन्त इत्यर्थः ॥

न शशांकात्मनाऽऽत्मानमित्यत्र आत्मना प्रयत्नेन ॥

नानावीर्यधरां महीमित्यत्र नानावीर्यान् गजतुरगादीन् धारयन्तीति ते तथोक्ताः । अतो न पौनरुक्त्यम् । नानारूपेति पाठे स्पष्टोऽर्थः ॥

बलमदेन सेनामदेन ॥

इमां महीं तदा राजन्नित्यत्र नागाः शेषाद्याः, भूगर्तेषु तत्र तत्रोद्धृतफणा नागाश्च भुवं धारयन्तीत्यतो बहुवचनम् । नगाः भूधारिणः पर्वताः । गजाः दिग्गजाः । तत्तस्मात् अधर्मोपचयात् ॥

तत्प्रधानात्मन इत्यत्र प्रधानात्मनः सकलजीवेषु श्रेष्ठस्वरूपस्य । तत् कृत्यम् ॥

इति सम्भवे अष्टमोऽध्यायः ।

## ॥ नवमोऽध्यायः ॥

क्षयान्नारायणस्य हेत्यत्र क्षयात् मन्दिरात् । 'निवेशः शरणं क्षय' इत्यमरः ॥

असुराणामुपाध्याय इत्यत्र शुक्र इति ख्यातः कवेः कविनामकभृगुपुत्रस्य पुत्रः असुराणामुपाध्याय इति योजना । कविपुत्रत्वादेव हि शुक्रः काव्य इत्युच्यते ॥

त्वष्टाऽवर इत्यत्र त्वष्टा अवरः अनुजः, तथा अत्रिश्चेति द्वौ; अन्यौ भद्रकर्मिणौ पुत्रौ ॥

मौनेयाः परिकीर्तिता इत्यत्र मौनेयाः मुनिनामककश्यपपत्नीपुत्राः ॥

इमं त्वप्सरसामित्यत्र इमं वक्ष्यमाणम् ॥

सुप्रिया च सुबाहुश्चेत्यत्र सुप्रियेत्यस्य पूर्वेणान्वयः ॥

इति सम्भवे नवमोऽध्यायः ।

## ॥ दशमोऽध्यायः ॥

स्थाणोश्चैव हि मानसा इत्यत्र स्थिरत्वात् स्थाणुर्ब्रह्मा ॥

पतङ्गसहचारिणि इत्यत्र पतङ्गः सूर्यः । 'पतङ्गौ पक्षिसूर्यौ चे'त्यमरः ॥

पितामहो मुनिर्देव इत्यत्र देवः पितामहः मुनिः आदिमुनिः, तस्य पुत्रः परम्परया पुत्रः प्रजापतिः कश्यपः ॥

उर्वरितपञ्चशतकन्यानां पुत्रानाह— धूम्राया इत्यादिना ॥

ब्रह्मणः पुरुषोत्तम इत्यत्र पुरुषः उत्तमो भवति यस्माद्धर्मात् स पुरुषोत्तमः ॥

नन्दी तु भार्या हर्षस्येत्यत्र नन्दयतीति नन्दी ॥

वडवारूपधारिणीत्यत्र वडवा अश्वा । 'वाम्यश्वा वडवे'त्यमरः । असूयत असूत ॥ (स्वार्थिको णिच् ।)

पक्षैश्च कुलतो गणैरित्यत्र पक्षैः तत्पक्षस्थैः[1] सह ॥

रुद्राणामपरं पक्षमित्यत्र रुद्राणामपरं पक्षं अपरपक्षाभिमानिदेवतागणं रुद्राणां पक्षं विद्यादित्यावृत्त्या योजना । साध्यानां मरुतां तथा वसूनां च भार्गवं पक्षं विद्यात्[2] ॥

अश्विभ्यां गुह्यकान्विद्धीत्यत्र सर्वौषध्यः सर्वौषधीः पशून् गुह्यकांश्च अश्विभ्यां विद्यादिति पक्षैरित्यत्रोक्तपक्षभूतदेवानां निर्णयः ॥

वर्षावर्षे नयानये । स्वयम्भुवा नियुक्त इत्यत्र वर्षे च अवर्षे च वर्षावर्षे, नयश्च अनयश्च नयानयमिति द्वन्द्वैकवद्भावेन सप्तमी । तत्र शुक्रः स्वयम्भुवा नियुक्तः सन् परिधावति ज्योतिश्चक्रे स्थित्वा भुवनं परितो धावति । स्वानुकूलगत्या वर्षं स्वानुकूलस्थित्या नयं विपरीते विपर्ययं च दर्शयतीति भावः ॥

तस्मिन्नियुक्ते गुरुणेत्यत्र गुरुणा ब्रह्मणा । विधिनेति पाठे स्पष्टोऽर्थः ॥

धर्मात्मानमतीन्द्रियमित्यत्र इन्द्रियाण्यतिक्रम्य वर्तमानः अतीन्द्रियः जितेन्द्रिय इत्यर्थः । तम् ॥

ऊरुं भित्वा विनिर्गत इत्यत्र ऊरुं मातुरूरुम् ॥

तयोस्तु भगिनी ज्येष्ठा लक्ष्मीः पद्मगृहेत्यत्र तयोः धातृविधात्रोः ॥

---

[1] तत्तत्पक्षस्थैः. [2] विन्द्यात्.

सुरां च सुरनन्दिनीमित्यत्र सुरां वारुणीम् ॥

अधर्मस्तत्र सञ्जात इत्यत्र तत्र सुरायाम् ॥

चक्रवाकांश्च भद्रं त इत्यत्र भद्रं त इति मध्ये मध्ये राज्ञ आशीर्दानम् ॥

ततः क्रोधवशेत्यादिना पुनर्दक्षपुत्रीसन्तानमाह ॥

विजज्ञे ह्यात्मसम्भवानित्यत्र आत्मसम्भवान् पुत्रान् विजज्ञे जनयामास ॥

सृमराश्चमरा अपीत्यत्र सृमराः गवयाः[1] । 'सृमरो गवयः शशे[2]' इत्यमरः ॥

सिंहान् व्याघ्रांश्च भारतेत्यत्र देहे तिर्यक्श्यामरेखाशतोपेताः स्थूलशार्दूला व्याघ्राः । वर्तुलनानावर्णरोमाङ्काः सूक्ष्मशार्दूला द्वीपिनः ॥

वनस्पतीनां वृक्षाणामित्यत्र विना पुष्पं फलन्ति ये पनसाद्याः ते वनस्पतयः; अनीदृशास्तरवो वृक्षा इति विभागः ॥

इति सम्भवे दशमोऽध्यायः ।

---

## ॥ एकादशोऽध्यायः ॥

हार्दिक्यो मनुजर्षभेत्यत्र हार्दिक्यः कृतवर्मानुजः कश्चित् हृदिकतनयः ॥

प्रह्लादो नाम बाह्लीक इत्यत्र बाह्लीकः बाह्लीकविषयाधिपतिः प्रह्लादः प्रह्लादो नाम कश्चिद्राजा ॥

महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारतेत्यत्र कामान्निमित्तात् योऽर्धनारीश्वरः स महादेवः, दिव् धातोः क्रीडायां प्रयोगात्; क्रोधान्निमित्तात् जगत्संहारकर्ता यः कालाग्निरुद्रः सोऽन्तकः अश्वत्थाम्नि कलौ रागाय योग्येषु पाण्डवेषु द्वेषाय च ताभ्यामंशाभ्यामेकत्वमुपसम्पद्य अश्वत्थामा जज्ञ इति योजना ॥

पौलस्त्या भ्रातरः सर्व इत्यत्र पौलस्त्याः पुलस्त्यकुलोत्पन्नाः रावणपुत्राः ॥

---

[1] पशुजातिविशेषाः.  [2] शशः । इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातय इत्यमरः ।

तानि षोडश देवीनामित्यत्र देवीनां गोपस्त्रीरूपदेवाङ्गनानां तानि षोडश सहस्राणि बभूवुः ॥

श्रियस्तु भागः सञ्जज्ञ इत्यत्र शंरूपे वायौ रतत्वात् श्रीर्भारती ॥

इति सम्भवे एकादशोऽध्यायः ।

## ॥ द्वादशोऽध्यायः ॥

दौष्यन्तेर्जनमेजयादित्यत्र जनमेजयादनन्तरम् ॥

यवीयान् सुन्वतः पुत्रो रथन्तर्यामजायतेत्यत्र यवीयान् यवीयान्नामकः कुमारः ज्येष्ठः । शूराद्यास्तस्य अनुजा इति विवेकः ॥

विद्वांश्चर्चे पुनोऽभवदित्यत्र च ऋचे पुन इति पदच्छेदः ॥

इति सम्भवे द्वादशोऽध्यायः ।

## ॥ त्रयोदशोऽध्यायः ॥

मोक्षमध्यापयामासेत्यत्र मोचयतीति व्युत्पत्त्या मोक्षमिति ज्ञानस्य विशेषणम् । सांख्यज्ञानं तत्वसंख्यासम्बन्धितया सांख्यपदोक्तं सच्छास्त्रं तत्वसंख्यानाख्यं (पा)पञ्चरात्रं वा सांख्यं तज्जनितं ज्ञानम् ॥

नाशीस्त्वं योजयामास दिगन्तज्ञानकर्मस्वित्यत्र न विद्यते आशीः आशा येषां ते नाशिषः तेषां भावः नाशीस्त्वं, यतित्वमित्यर्थः । भूप्रदक्षिणेन दिगन्तानां ज्ञानमेव कर्म स्वकर्तव्यं येषां ते तथोक्ताः ॥

तथैवात्राष्टमीमिति इलाया अपि वैवस्वतमनुकुमारीत्वकथनात् कुमारपरम्परया सूर्यवंशः कुमारीपरम्परया सोमवंशश्च वैवस्वतमन्वन्तरारम्भकालमारभ्यैव प्रवृत्तः । अतः कार्तवीर्यार्जुनस्याष्टाविंशतिमकृतयुगे भार्गवरामेण समागमो न्यायप्राप्त इति न काचिदनुपपत्तिः ॥

त्रयोदश समुद्रस्य द्वीपानित्यत्र समुद्रस्य लवणसमुद्रस्य अन्तर्गतलङ्का-

द्यवान्तरद्वीपषट्कैः सहिताः समुद्रस्य जात्येकवचनमिदम् । सप्तसमुद्राणां सम्बन्धिनो ये सप्तद्वीपाः ते त्रयोदशद्वीपाः ॥

शप्तः सद्यो व्यनश्यतेत्यत्र व्यनश्यत राज्याद्भ्रष्टो बभूव ॥

साह्यं कुरुत पुत्रका इत्यत्र सहेत्यस्य भावः साह्यं, सहायमित्यर्थः ॥

यत्कार्यं भवता कार्यमस्माकं यौवनेन चेत्यत्र भवता यौवनेन यत् स्त्रीभोगादिकं कार्यं तदेव यौवनेन अस्माकं च कार्यमिति सर्वान् गर्भीकृत्य यदोर्वचनम् । अत एवास्माकमिति प्रयोगः ॥

राजंश्चराभिनवयेत्यत्र अभिनवया तन्वा 'चर गतिभक्षणयोरि'ति धातोः चर भुङ्क्ष्व ॥

कामार्तः परिहीण इत्यत्र परिहीणः कामेन परिहीणः ॥

स्थास्यामि ते ज्ञयेत्यत्र ज्ञया आज्ञया आ सम्यक् ज्ञा ह्याज्ञा ॥

अवेक्ष्य मनसा तस्येत्यत्र तस्य कामस्य अतृप्तिं 'नाध्यगच्छदि'त्यत्रोक्ता(म)तृप्तिं मनसा अवेक्ष्येति योजना ॥

यत्पृथिव्यां व्रीहियवमित्यत्र व्रीहयश्च यवाश्च व्रीहियवम् । हिरण्यमिति जात्येकवचनम् । एवञ्च पृथिव्यां यावन्तो व्रीहयः यावन्ति हिरण्यानि याव(न्तः)त्यः पशवः यावत्यः स्त्रियः तदेतत्सर्वं एकस्य कामातुरस्य पुरुषस्य नालम् । एतावदपि नालं चेत् स्वर्गस्थमपि सर्वं संग्राह्यम् । शमः किंनिमित्त इति शङ्कापरिहाराय इतीत्युक्तम् । इति अनेन प्रकारेण मत्वा विचार्य यन्नालमिति प्रागुक्तं तदेव महता प्रयत्नेनापि दुर्लभम् । इतोऽतिरिक्तं तु सुतरां दुर्लभम् । अत आशाया अपर्यवसानात् असाध्यपरम्पराविषयिणी अलाभेन सदा दुःखदायिनी च आशैवेयं त्याज्येत्येतावत्प्रकारान् मत्वा विचार्येति भावः ॥

न बिभेति यदा चायमित्यत्र अयं ज्ञानी यदा न बिभेति लोकान्न बिभेति सर्वत्र निराशत्वादिति भावः । अस्मात् लोकाः यदा न बिभ्यति अतिशान्तत्वादिति भावः ॥

दशमो(यः)ऽयं प्रजापतेरित्यत्र ('अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य

अन्वयः। तस्मान्मरीचिः सञ्जज्ञे दक्षश्चैव प्रजापतिः । अङ्गुष्ठाद्दक्षमसृजच्चक्षुर्भ्यां च मरीचिनम्। मरीचेः कश्यपः पुत्रो दक्षस्य दुहिताऽदितिः। अदित्यां कश्यपाद्विवस्वान्, विवस्वतो मनुः, मनोरिळा, इळायां पुरूरवाः, पुरूरवस आयुः, आयुषो नहुषः, नहुषाद्ययाति'रिति वंशसंग्रहाध्यायोक्तरीत्या ययातेर्दशमत्वमनुसन्धेयम् । यद्वा) प्रजानां पतिरीश्वर इति विष्णुरेव प्रजापतिः । ब्रह्मणो विष्णुप्रजारूपत्वान्न मुख्यं प्रजापतित्वम्। एवञ्च वंशस्यादिपुरुषो नारायणः, ततो ब्रह्मा, ततो मरीचिः, ततः कश्यपः, ततः शशाङ्कः, ततो बुधः, ततः पुरूरवाः, तत आयुः, ततो नहुषः, ततो ययातिरिति ययातेर्दशमत्वमिति भावः ॥

श्रोतुं, व्यासतो द्विजसत्तमेत्यत्र व्यासतो विस्तारतः। 'व्यासः प्रपञ्चो विस्तारः स तु शब्दस्य विस्तर' इत्यभिधानम् ॥

वव्राते वरमित्यत्र वरं जामातरम् । 'वरो जामातरि श्रेष्ठ' इत्यभिधानम् ॥

मुहूर्तेऽलघुमार्दव इत्यत्र शान्तग्रहयोगात् अलघुमार्दवे बहुसान्त्वगुणदायिनि। मृदोर्भावो हि मार्दवं, सान्त्वमित्यर्थः । सान्त्वेन खलु कार्यं साधनीयं, अतस्तादृशमुहूर्तं साधयित्वा गत इति भावः ॥

ब्रह्मचर्यं चरिष्यामीत्यत्र ब्रह्म वेदं चरतः 'चर गतिभक्षणयोरि'ति धातोः अभ्यासं कुर्वतः वटोः सम्बन्धि कार्यं, गुरुसेवामित्यर्थः ॥

व्रतं सव्रतकाले स इत्यत्र एतावन्तं कालं त्वत्सेवां करोमीति नियमेन सहितः सहस्रपरिवत्सरसम्मितः कालः सव्रतकालः, तमवधीकृत्य व्रतं ब्रह्मचर्यव्रतं सेवाव्रतं च यथा पूर्वं स्वेनैवोक्तं तथा सं सम्यक् यथा भङ्गो न भवति तथेत्यर्थः । गृहीतवानिति योजना । व्रतं च व्रतकल्पं चेति पाठे व्रतकल्पं एतावन्तं कालं एतावद्व्रतमिति च कल्पं कल्पनां, यथोक्तं उक्तं 'गुरोर्वचनं यथा अनतिक्रम्य तद्व्रतं च गृहीतवानित्यर्थः ॥

युवा यौवनगां मख इत्यत्र मखे नित्याग्निहोत्रे ॥

गायन्तं चैव शल्कं चेत्यत्र शल्कं पुनःपुनः प्रियवादिनम् । ∴शल्को

मधुरभाषी स्यादि'त्यनुशासनम् । शुल्कं द्रव्यं दातारं चेति सम्बन्धः ॥

कचो रिष्टोऽथ विद्ययेत्यत्र रिष्टो नष्टः विद्यया प्रादुरभूदिति सम्बन्धः ॥

पेशीकृत्वा तु दानवा इत्यत्र पेशीकृत्वा पक्ष्यण्डवत्सूक्ष्ममांसीकृत्य, तिलशः (कृत्वे) छित्त्वेति यावत् । 'पेशी कोशः स्मृतोऽण्डश्चे'ति हलः ॥

प्रायच्छन् ब्राह्मणायैवेत्यत्र ब्राह्मणाय शुक्राय सुरायां मेलयित्वा प्रायच्छन्निति सम्बन्धः ॥

अब्राह्मणं लोकमित्यत्र न विद्यते ब्राह्मणो यस्मिन्नसावब्राह्मणः तम् ॥

अप्यस्य पापस्य भवेदिहान्त इत्यत्र अस्य पापस्य दैत्यैः कृतकचहननाख्यब्रह्महत्यापापस्य सम्बन्धी अन्तः तत्फलरूपो नाशः इह दैत्येष्वेव भवेत् भविष्यति । ब्रह्मवध्या ब्रह्महत्या कं न दहेत्; इन्द्रमपि दहेत् ॥

संरभेणैव काव्य इत्यत्र संरभेण संरम्भेण । गुरोर्भीत इत्यत्र गुरोर्भीतः गुरोरुदरभङ्गो भविष्यतीति भीतः । स वै सर्वमित्यत्र स भवानित्यर्थः । वेत्सीति पाठे स्पष्टोऽर्थः ॥

नन्वेव तु स्यात्तपसो व्यय इत्यत्र मयैव कथने पैशुन्यदोषेण तपसो व्ययः स्यान्नन्विति सम्बन्धः । तथापि गुर्वाज्ञोल्लङ्घनदोषाद्भीतो वदामीति भावेनाह— असुरैः सुरायामिति ॥

ब्राह्मीं मायामित्यत्र मायां माहात्म्यम् । ब्राह्मी मायेति पाठे स्पष्टोऽर्थः ॥

द्वौ मे शोकौ वह्निकल्पावित्यत्र कचस्य यो नाशः तस्मात्तव उपघातो नाशो यः स एको नाशः; तथा कचरक्षणार्थं 'वधेन मे जीवितं स्यात्कचस्ये'ति प्रागुक्तरीत्या ममोदरभङ्गेऽपि मम नाशः, कचस्य नाशे तु मम शर्मास्ति, त(था)दापि तवोपघाते[1] जीवितुं शक्तो नास्मीति उभयथापि यो मम नाशः स एको नाश इति मन्नाशस्त्वन्नाशश्चेति यौ द्वौ नाशौ तन्निमित्तौ वह्निकल्पौ मे द्वौ शोकौ दहेतां मां दहेतामिति योजना । कचनाशे तव नाशः तव नाशाद्वा

[1]तवोपघातात्.

ममोदरभङ्गाद्वा मम नाश इति द्वावपि नाशावसशाविति भावः ॥

पुत्रो भूत्वेत्यत्र ममोदरजातत्वात् पुत्रो भूत्वा भावितः भावेन मद्गुरु-विद्याप्रभावेन युक्तत्वाद्भावितः (अतः) त्वं मां भावय जीवय ॥

समीक्षेथा धर्मवतीमवेक्षामित्यत्र मत्तः [1]विद्याः प्राप्य मदुदरान्निष्क्रम्य नदीं तीर्त्वा उत्तारकस्यैव उपेक्षणवत् मामजीवयित्वा तव गमने महानधर्मः स्यात् । मम जीवने तु कृतज्ञतया महान् धर्मः स्यात । अतो हेतोः धर्मवतीमवेक्षामवेक्षेथा इत्यर्थः ॥

संसिद्धरूपोऽसीत्यत्र देवान् प्रति विद्यां यापयतीति देवयानी इति व्युत्पत्त्या स्वपुत्र्याः देवयानीशब्दवाच्यत्वात्तस्याः पक्षपातात् तव कार्यसंसिद्धिर्जातैवेति भावः । यद्वा संसिद्धं रूपं [2]सञ्जीव(न)नीविद्याया निरूपणं यस्य स तथोक्तः ॥

शुक्लात्यये पौर्णमास्यामिवेन्दुरित्यत्र शुक्लात्यये शुक्लपक्षस्यावसाने या पौर्णमासी तस्याम् ॥

ब्राह्मणं ब्रह्मराशिमित्यत्र ब्रह्मणः वेदस्य राशिर्यस्मिन् स तथोक्तः ॥

ऋतस्य दातारमित्यत्र निधीनां नितरां धीयन्ते तत्वानि येषु ते निधयः। एतादृशानां नयानां शास्त्राणां, दुःशास्त्रव्यावृत्त्यर्थं निधीनामिति विशेषणम् । निधिं, अत एव 'ऋतं यथार्थविज्ञानमि' ति वचनात् 'ऋ गतावि' ति धातोश्च ऋतस्य यथार्थज्ञानस्य दातारं चतुरं असुरैः सर्वथा विनाशितं मां स्वविद्यया पुनरुज्जीव्य मदर्थं स्वमरणमपि सोढ्वा मयि दत्तस्वविद्ययैव पुनः स्वस्याप्युज्जीवनेन गुरुहननाख्यपापान्मम रक्षितृत्वादिचातुर्ययुक्तं, अत एवार्चनीयम् । चतुरन्वयानामिति पाठे चतुरन्वयानां चतुर्वेदानामित्यर्थः । गुरुं ये नाद्रियन्त इति सम्बन्धः ॥

दृष्ट्वा कचं चापि तथा स जीवितमित्यत्र तथा मद्यपायिभिर्दैत्यैः भस्मीकृतस्य यथा पूर्वं रूपं तथैव आत्मना जीवितं च कचं दृष्ट्वा । कचास्य-

[1]विद्यां. [2]संजीविनीविद्यायाः.

ब्राह्मणमरणमपि परम्परया सुरापानदोषादेव जातमिति भावः ॥

शुश्रुवांसो गुरूणामित्यत्र गुरूणां सकाशात् शुश्रुवांसः शास्त्रश्रवणं कुर्वन्तः ॥

(न चेत्किञ्चिच्चिरां गच्छेरित्यत्र किञ्चिच्चिरां किञ्चिद्बहुकालीनां, अधिकवयस्कामिति यावत्। स्त्रियं न गच्छेश्चेद्याज्ञीयो भविष्यसीति कचं प्रति शुक्रस्याशीर्वादः। न ते कीर्तिर्जरां गच्छेदिति पाठे स्पष्टोऽर्थः।)

इति सम्भवे कचचरित्रे त्रयोदशोऽध्यायः।

---

## ॥ चतुर्दशोऽध्यायः ॥

गुरुपुत्रस्य पुत्रो मे इत्यत्र मे पितुर्गुरोः विद्यया वयसा च श्रेष्ठस्य अङ्गिरसः पुत्रस्य बृहस्पतेः मत्पितृसमानस्कन्धस्य पुत्रः त्वं मे असि योग्योऽसीत्यर्थः ॥

नेति यच्चात्थ मां तथेत्यत्र मां प्रति यदात्थ तत्तथा ॥

बृहस्पतिं सभाज्येदमित्यत्र सभाज्य संभाव्य ॥

इति सम्भवे चतुर्दशोऽध्यायः।

---

## ॥ पञ्चदशोऽध्यायः ॥

सः इन्द्रः ॥

समुदाचारहीनाया इत्यत्र सं सम्यक् उत् उत्कृष्ट आचारः समुदाचारः ॥

आधून्वस्व विधून्वस्वेत्यत्र आ समन्तात् धून्वस्व हस्तादिकं भवत्यः पश्यन्तु भवत्यः पश्यन्त्विति चाल्य। विधून्वस्व मां प्रत्येव वि वैपरीत्येन चाल्य। प्रतियोद्धारं त्वां प्रति योद्धारं ब्राह्मणकन्यासमूहमेव त्वं लप्स्यसे। तव समानस्कन्धया विप्रकन्यया कलहं कुरु। अहं तु राजकन्या त्वां न गणयामीति

---

[1]सभाज्येत्यत्र.

योजना । द्रुह्य द्रोहं कुरु । कुप्य कोपं कुरु । इति लोटि मध्यमपुरुषैकवचनम्। अत एव हे भिक्षुकीति सम्बुद्धिः ॥

शर्मिष्ठा प्राक्षिपत्कूप इत्यत्र देवयानीमिति योग्यपदाध्याहारः ॥

श्रान्तयुग्यहय इत्यत्र श्रान्ताः युग्याः रथयुगयोग्याः हया यस्य स तथोक्तः ॥

उज्जहार ततोऽवटादित्यत्र अवटात् भूगर्तरूपात् कूपात् । 'गर्तावटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु' इत्यमरः ॥

आचष्ट ते महाप्राज्ञेत्यत्र शर्मिष्ठया निमित्तेन वने वन एव गता अस्मीति देवयानी ते आचष्टेति योजना ॥

इत्युक्ता हि सखी मयेत्यत्र सखी शर्मिष्ठायाः सखी यद्येवं तर्हि शर्मिष्ठां प्रसादयिष्य इति हे तात मया उक्ता । शर्मिष्ठां प्रत्येव वक्तुं भीतया तत्सखी-माहूयेत्थमुक्तमिति भावः ॥

अचिन्त्यं ब्रह्म कल्याणीत्यत्र हे कल्याणि एषोऽहं अचिन्त्यं क्षत्रिया-दिभिश्चिन्तयितुमप्यशक्यं ब्रह्म ब्राह्मणोऽस्मि । अतो वृषपर्वणैव मत्सेवा कर्तव्या। अहं तु मत्तोऽपि नीचस्य तस्य गायी वन्दिकश्च न । परं ब्रह्मासीत्यर्थस्तु वृष-पर्वणोऽपि साम्यात् न प्रकृतोपयोगी । निर्द्वन्द्वं प्रतिद्वन्द्वरहितं, असदृशमिति यावत् । ऐश्वरं ईश्वरप्रतिपादकं अचिन्त्यं अनन्तत्वाच्चिन्तयितुमशक्यं । ब्रह्म वेदः मम बलं हि । हिशब्देन गानादिकमवैदिकानामिति सूचयति । गर्ह्यं निन्द्यं कर्म जैह्म्यं जिह्मस्य कुटिलस्य सम्बन्धि अनृतं अधर्मतो नेति वदता कचि-द्धर्मसङ्कटे अस्तीति सूचितम् ॥

इति सम्भवे पंचदशोऽध्यायः

---

## ॥ षोडशोऽध्यायः ॥

न हये रश्मिलम्बित इत्यत्र हये बाह्यरथतुरगे रश्मिना लम्बिते इतस्ततः प्रापिते सति यन्ता न ॥

तस्मादक्रोधन इत्यत्र अक्रोधने पुरुषे यज्ञस्तपो दानं महत्फलं मोक्षश्च तिष्ठन्तीति योजना ॥

विद्वांस्तस्य बलाबलमित्यत्र तस्य क्रोधस्य बलं ऋष्यादिभिर्निग्रहीतुमशक्यत्वेन प्राबल्यं क्रोधे सति (हि) सर्वधर्महानेः तदग्रे धर्मान्तरबलाभावं च विद्वान् जानन्नित्यर्थः ॥

[1]प्रेष्ये शिष्यार्यवृत्तिं हीत्यत्र शिष्यस्य आर्या श्रेष्ठा या वृत्तिः गुरुभक्त्यादिः तामुत्सृज्य [2]प्रेष्ये शिष्ये विपथं विरुद्धमार्गं गुर्ववज्ञादिकं गते सति न क्षन्तव्येति पूर्वेणान्वयः ॥

सुयन्त्रिता वरा नित्यमित्यत्र सु सुकृतेन यन्त्रिताः नियमिताः नियमेन पुण्यकृत इत्यर्थः । वराः श्रेष्ठाः ॥

न हि जात्या हि चण्डाला इत्यत्र स्वकर्मविहितैः स्वस्य नित्यनैमित्तिककर्मकरणार्थं विहितैः धनाभिजनविद्याभिर्विना केवलं भोगाय केवलं जनपूज्यतायै केवलं पाण्डित्याय च धनाभिजनविद्यासु सक्ताः चण्डालधर्मिण इति योजना ॥

तेषां न रोचयेदित्यत्र तेषां दुष्कृतानां विषये न रोचयेत् रुचिं न कुर्यात् ॥

न संरोहति वाग्व्रणमित्यत्र वाग्व्रणं शनैर्न संरोहति चित्तारोहणं न करोति । किन्तु सद्य एव चित्तं क्षोभयतीत्यर्थः । शस्त्रविषाग्निजातदुःखं तु शनैरेव रोहेत् । तदानीमल्पं क्रमेणोत्तरोत्तरं भवतीति भावः ॥

संरोहति शरैर्विद्धमित्यत्र परशुना हतं छिन्नं शरेण विद्धं च वनं शनैः संरोहति पुनरङ्कुरान्तरमुत्पाद्य च्छेदं विसारयति वाक्क्षतं तु न संरोहति पुनः पूर्ववन्मैत्र्याख्याङ्कुरोत्पत्तिं न कारयति । अतः वाचा दुरुक्तं बीभत्सं [3]अत्यन्तजुगुप्सं अत्यन्तभयजनकं वा । तस्मान्न पौनरुक्त्यम् ॥

इति सम्भवे षोडशोऽध्यायः ।

[1]प्रेष्यशिष्यार्यवृत्तिं हीत्यत्र शिष्यस्य शिष्यस्य. [2]प्रेष्यशिष्ये. [3]अत्यन्तं जुगुप्सितं.

## ॥ सप्तदशोऽध्यायः ॥

सद्यः फलति गौरिवेत्यत्र गौरिव दुरुक्तिरिव । यथा दुरुक्तिः सद्यः फलति एवमधर्मः सद्यो न फलतीति व्यतिरेकदृष्टान्तः। यद्वा गौरिव घृष्टिरिव। यथा घृष्टिः शनैरेव फलति तथा अधर्मोऽपि शनैः फलतीत्यन्वयदृष्टान्तो वा ॥

गुरुभुक्तमिवोदरे इत्यत्र गुरुभुक्तं बहुभोजनम् ॥

विप्रमाङ्गिरसमित्यत्र अङ्गिरसः कुलोत्पन्नं विप्रं कचम् ॥

कल्पेत समर्था[1] भवति ॥

शर्मिष्ठया देवयानीमित्यत्र कूपे पातयितुमुपदिशामीति योग्यपदाध्याहारेण योजना ॥

तथेममात्मनो दोषमित्यत्र इमं मिथ्याप्रलापित्वाख्यमात्मनो दोषं तथा त्वेद्वत्[2] मयि कर्तुं चिकीर्षसीति योजना ॥

यदि त्वमिति देवयान्या अनुवादबलात् मम मद्वित्तस्य च त्वमेव इति वृषपर्वणा प्रार्थितत्वात् राज्ञः वृषपर्वणः तद्वित्तस्य चाहमेवेश्वरोऽस्मीति शुक्रवाक्यमप्यनुमीयते ॥

एवं कृत्वा करिष्यामीत्यत्र करिष्यामि तव दास्यं करिष्यामि ॥

---

दैवेनोपहता सुभ्रूरित्यत्र उपहता ऐश्वर्यादुपहता ॥

विधानमनुवर्तत इत्यत्र विधानं विधिः दैवमित्यर्थः ॥

बहु चाप्यनुयुक्तोऽस्मीत्यत्र बहुसैन्यं अनु अनुसृत्य युक्तोऽस्मि सहितोऽस्मि। यद्वा बहुकार्यमुद्दिश्य प्रजाभिरनुयुक्तोऽस्मि नियुक्तोऽस्मीत्यर्थः ॥

अवरा भिक्षुकेत्यत्र अवरा नीचकुलोत्पन्ना भिक्षुका धनभिक्षामपेक्षमाणा वेश्येत्यर्थः ॥

अन्यत्वमस्ति न तयोरित्यत्र अन्यत्वं अत्यन्तदूरत्वम् । एकान्तर-

---

[1]भवेत. [2]तद्वत.

समाश्रिते एकं कण्ठमेव मध्यं कृत्वा हरेर्मुखवाह्वोर्ब्रह्मक्षत्रे स्थिते इत्यर्थः। तयोरभ्यन्तरं नास्तीति पाठे स्पष्टोऽर्थः ॥

ऋषिश्चाप्यृषिपुत्र इत्यत्र ऋषिपुत्रः 'ब्राह्मणास्ताः समभ्ययुरि' ति वचनात् ऋषीणां ब्राह्मणानां पुत्राः क्षत्रिया अपि ऋषय एव। जात्येकवचनमिदम् ॥

एकत्रैवोद्भवा इत्यत्र एकत्र एकस्मिन्नेव नारायणे उद्भवन्तीत्युद्भवा जाता इत्यर्थः ॥

प्रेपितं पितुरित्यत्र प्रेपितं प्रेषणं कृतम् ॥

दुर्गे मे पाणिमस्पृशदित्यत्र दुर्गे गन्तुमशक्ये कूपे । वृतस्त्वन्नाहुषः पतिरित्यत्र त्वत् त्वत्तः ॥

इति सम्भवे देवयानीविवाहो नाम सप्तदशोऽध्यायः ।

---

## ॥ अष्टादशोऽध्यायः ॥

कुमारं चाप्यजायतेत्यत्र अजायत जनयामास ॥

त्वन्नामानं कुर्वित्यत्र त्वन्नामानं शोकापहरणादशोकाख्यनामवतीम् ॥

देवयानी प्रजातेत्यत्र प्रजाता प्रजया अता व्याप्ता । यद्वा प्रकर्षेण जाता सपुत्रत्वात् सार्थकजन्मवती ॥

केशे बद्ध्वेत्यत्र अञ्जलिं कृत्वेति[1] वक्ष्यमाणत्वात् केशे अञ्जलिं बद्ध्वेत्यर्थः ॥

क(कि)श्चित्क्षणमवाप स इत्यत्र क्षणमवसरमित्यर्थः ॥

तव वा नाहुष! कुले कस्त्रियं स्प्रष्टुमर्हतीत्यत्र तव कुले वा स्थितां स्त्रियं दासीभूतां वा पत्नीभूतां वा कः अन्यः स्प्रष्टुमर्हति । कुलपदेन गृहमुपलक्ष्यते ॥

ऋतुं देहि नराधिपेत्यत्र ऋतुं देहि; मम पतिर्भवेति भावः ॥

एकार्थतायामित्यत्र कस्यचिद्वस्तुनः एकार्थतायां एकस्य द्रव्यतायां

---

[1] बद्ध्वेति.

समाहितायां सम्यङ्निश्चितायां सत्यां; साक्षिवचनेऽप्यनृतं दोपः द्रव्यविपये च अनृतं दोप इति भावः ॥

यत्ते समधिगच्छन्तीत्यत्र ते भार्यादयः स्वबन्धुभ्यः स्वभर्तुः सकाशाद्वा यत् वस्त्राभरणादिरूपं धनं समधिगच्छन्ति तद्धनं एते यस्य वशे तस्यैव। स्वाधीनधनाभावात् स्वयं त्वधना एवेति भावः ॥

पुष्कलं पुत्रदानं चेत्यत्र हे मारिष श्रेष्ठ यथाते इति सम्बुद्धिः। आत्मदानं परमात्मनो हृदि सन्निधापनं नारीणां पुत्रदानमात्मदानं च पत्या स्वशरीरे दत्ते सत्येव भवति। 'पतिरेव गुरुः स्त्रीणामि' ति वचनात् पत्युः प्रसादादात्माऽपि हृदि सन्निहितो भवति। पुत्रोपि भवति। तस्मात्पतिभावं प्राप्य तव शरीरं मह्यं देयमिति भावः ॥

तथ्यमित्येव जज्ञिवानित्यत्र जज्ञिवान् ज्ञातवान् ॥

इति सम्भवे अष्टादशोऽध्यायः।

---

## ॥ एकोनविंशोऽध्यायः ॥

माध्वीकरससंयुक्तेत्यत्र माध्वीका [1]मधुरगुडादिद्रव्यैर्निष्पन्ना, अत एव रससंयुक्ता ताम्। माध्वी गौडी पौष्पी पैष्टी चेति चतुर्विधा मदिरा। तत्र गुडरसोत्पन्ना गौडीत्युच्यते। [2]इयमपि मदिरा गौडीति भावः। रक्तपिञ्जरां रक्ता, पिञ्जरा सुवर्णवर्णा च ॥

जरावली च मे तातेत्यत्र जरया उद्बुद्धा वली नाडी ॥

अपापां पापवर्धिनीमित्यत्र वस्तुगत्या अपापां, मद्यपानजनितभ्रान्त्या दिनेदिने पतिधिक्कारादिपापं वर्धयन्तीम् ॥

ततो वर्षवरानित्यत्र वर्षवरान् वहुवयस्कान् वृद्धानिति सम्बन्धः। पण्डकाः [3]नपुंसकाः। 'पण्डकः स्यान्नपुंसक' इति हलः ॥

अङ्गुष्ठसमीपवर्तिनी अङ्गुलिः प्रदेशिनी ॥

---

[1]मधुरमध्वादिद्रव्यैर्निष्पन्ना. [2]इयन्तु मदिरा माध्वीति भावः. [3]शिखण्डिनः

कृतं ब्रह्मन्नित्यत्र धर्मेण कृतं मम एतत्कर्म ॥

इति सम्भवे एकोनविंशोऽध्यायः ।

---

## ॥ विंशोऽध्यायः ॥

परिभूतः सयौवनैरित्यत्र सयौवनैः समानयौवनैः पुम्भिः ॥

स चोडुप्लवसन्तार इत्यत्र उडुप्लवसन्तारः उडुवत् नक्षत्रवत् इतस्ततः सञ्चरन् यः प्लवः तस्य सन्तारः नौकोत्तारको भव ॥

अग्निप्रस्पन्दनपर इत्यत्र अग्नेः प्रस्पन्दनं आहुतिदानेन ऊर्ध्वज्वलनं तत्र परः तात्पर्यवान्न भविष्यसि ॥

न हस्तिनमित्यत्र भुङ्क्ते पालयति । नारोहतीत्यर्थः[1] । पीठकं पीठाकारेण कृतविमानम् ॥

रथयुग्यानामित्यत्र रथयुग्यानां रथयुगयोग्यानां अश्वतरीवृषभादीनां अध्वा तदारो(हे)हणगमनयोग्यमार्गः ॥

इति सम्भवे विंशोऽध्यायः ।

---

## ॥ एकविंशोऽध्यायः ॥

मातापित्रोर्वचनकृदित्यत्र पथ्यस्य ज्वरितः पिता क्षीरं देहीति वदति चेत् न देयम् । अतः पथ्यस्येत्युक्तम् । कलञ्जं देहीत्युक्ते न देयम् । अतः विहितस्य शास्त्रविहितस्येत्युक्तम् । पथ्यस्य विहितस्य च अनुकूलं यथा भवति तथा मातापित्रोर्वचनकृदिति योग्यपदाध्याहारेण योजना ॥

पुतीति नरकस्याख्येत्यत्र पुन्नाम्नो नरकस्य पुतीत्यपि संज्ञा । अतः पुतीति नरकस्याख्येत्युक्तम् ॥

वेदोक्तं सम्भवं मह्यमित्यत्र सम्यक् भवः शोभनं यस्मात्तत्सम्भवं शोभनं कर्म । हृदयान्मनस एवोद्भवो यस्य वनितादिविषयसेवनस्य तद्धृदयो-

---

[1] आरोहतीत्यर्थः.

द्भवम् । अनेन पूरुणा मम पुत्रेण कृत्स्नं तथ्यं जातं एतद्वृत्तयौवनेन यज्ञादि-कर्माण्यनुष्ठितम् । नानाविषयभोगा अपि भुक्ताः । तस्मादयमेव राज्यमर्हतीति भावः ॥

भवतोऽनुनयामीत्यत्र भवतः युष्मान् अनुनयामि सान्त्वयामि ॥

इति सम्भवे एकविंशोऽध्यायः ।

## ॥ द्वाविंशोऽध्यायः ॥

स तदेति श्रुतं मयेत्यत्र श्रुतं मुनीनां प्रवादाच्छ्रुतम् ॥

देवर्षिगणसन्निधावित्यत्र देवसमाना ऋषयः ॥

इति सम्भवे द्वाविंशोऽध्यायः ।

## ॥ त्रयोविंशोऽध्यायः ॥

त्वं हि धर्मविद इत्यत्र धर्मविदः पुरुषस्य धर्मं कथस[1] इति सम्बन्धः ॥

अमानुषेभ्यो मानुषा इत्यत्र अमानुषाः पशुपक्ष्यादयः ॥

आक्रुश्यमानो नाक्रोशेदित्यत्र आक्रुश्यमानः परुषवचनैस्तुद्यमानः नाक्रोशेत् परं प्रति परुषवचनं न वदेत् । तितिक्षतः मन्युः क्षमावतः पुरुषस्योपरि कृतः मन्युः परुषवक्तरि स्थितः कोप एव आक्रोष्टारं स्वात्मानमेव निर्दहति । अस्य आक्रोष्टुः सुकृतं विन्दति क्षमावान् प्राप्नोति ॥ नारुन्तुदः स्यादित्यत्र अरुन्तुदो मर्मभेदी । 'अरुन्तुदः स्याद्व्यथक' इति हलः । नृशंसवादी तूर्ष्णीं गालीदानेन निष्ठुरवादी ॥

न हीनतः परमभ्याददीतेत्यत्र परं पुरुषं प्रति हीनतः हीनान् दोपानभ्याददीत न वदेदिति यावत् । तस्मिन् हीनान् दोपानिति वा । यया वाचा पर उद्विजेत उद्वेगं दुःखं प्राप्नोति तां पापलोक्यां नरकादिपापलोकसम्बन्धिनीं, नरकदायिनीमित्यर्थः । रुशतीं क्रूरां, 'रुशती वागकल्याणी'-त्यमरः । न वदेदिति सम्बन्धः ॥

[1] कत्थसे.

मुखे निबद्धां निकृतिमित्यत्र निकृतिं कैतवम् । 'कपटोऽस्त्री व्याज-दम्भोपधयश्छद्मकैतवे । कुसृतिर्निकृतिः शाठ्यमि'त्यमरः ॥

सद्भिः पुरस्तादित्यत्र अभिपूजितः श्लाघितः, श्लाघायोग्यगुणयुक्तः स्यादिति भावः । पृष्ठतः आशीर्वादादिना रक्षितः स्यात् । तथा सत्सु प्रवणः स्यादिति भावः । असतां अतिवादान् दोषोद्दीपकवचनानि तितिक्षेत् ॥

परस्य चामर्मसु ये पतन्तीत्यत्र अमर्मसु च ये पतन्ति साधारणापवादा इत्यर्थः । तेऽपि न वक्तव्याः । मर्मस्पर्शिनो न वक्तव्या इति किं वक्तव्यमिति भावः । सम्यक् वननं भजनं यस्मात्तत्संवननम् । 'वन सम्भक्तावि'ति धातुः । (सान्त्वं सामवचनम्) ॥

यदावमंस्था इत्यत्र यत् यस्मात् आ समन्तात् अवमंस्थाः देवगन्धर्वादीनामवज्ञामकरोः । पापीयसश्च किमु । यद्वा पापीयसः अवमंस्था इत्येव योजना । अतिपापिन्यपि महता दयैव कर्तव्या; न त्ववमान इति भावः । उदितप्रभावः उदितः कथितः प्रभावः स्वमहिमा येन सः । सान्त्वं सामवचनम् ॥

इति सम्भवे त्रयोविंशोऽध्यायः ।

---

## ॥ चतुर्विंशोऽध्यायः ॥

मा स्म सर्वानित्यत्र मा मां सदृशान् श्रेयसश्च न चावमंस्थाः ॥

राजर्षिवरोऽष्टक इत्यत्र अष्टको नाम ययातेर्दौहित्रः कश्चन राजर्षिः । अत्रेयं वक्ष्यमाणोद्योगपर्वस्थकथाऽनुसन्धेया । माधवी नाम ययातेः कन्या, तस्याः 'प्रसूयन्ते प्रसूयन्ते कन्यैव त्वमि'ति वरदानबलात् चतुर्धा विवाहे जाते सति हर्यश्वात् दिवोदासात् उशीनरात् विश्वामित्राच्च वसुमनाः प्रतर्दनः शिबिरष्टक इति चत्वारः पुत्रा जाताः । ते च ययातेर्दौहित्राः । स्वाहङ्कारवशाद्दिवः पतितो ययातिः दौहित्रकृतपुण्यवशात् भुवमस्पृशन्नेव पुनर्दिवमारुरोहेति ॥

[1]विष्ठितं देवमार्ग इत्यत्र विष्ठितं विशेषेण स्थितम् । तत्त्वं पात इत्यत्र तव पाते पतने तत्त्वं यथार्थं कारणं जिज्ञासमाना इति योजना ॥

---

[1]देवमार्गविष्ठितमित्यत्र.

धृष्णुमप्रष्टुमग्र इत्यत्र अग्रे तव पुरोभागे स्थिता वयं धृष्णुं धारणशीलं धीरं त्वां अप्रष्टुं अविचारयितुं न न शक्ताः स्मः। तव मुखसन्दर्शने सति विचारं कुर्म इति मनो जायत इति भावः॥

ते त्वामित्यत्र ते वयम्॥

नालं प्रसोढुमित्यत्र वलहा वलाख्यदैत्यहन्ता प्रसोढुं. बलात्कर्तुं बलात्पातयितुमिति यावत्। प्रतिष्ठा प्रतितिष्ठत्य(नये)नेनेति प्रतिष्ठा आधार इत्यर्थः। आवपने बीजावापे॥

इति सम्भवे चतुर्विंशोऽध्यायः।

## ॥ पञ्चविंशोऽध्यायः॥

अविद्वांश्चेदित्यत्र अविद्वांश्चेत् वयसा वृद्ध इति कृत्वा स पुरुषो नाभिवाद्यः। स प्रसिद्धम्। यो वै विद्वान् (सः) वयसा वृद्धो न, स एव पूज्य इति सम्बन्धः॥

प्रतिकूलं कर्मणां पापमाहुरित्यत्र पापलोक्यं नरकादिपापलोकसाधनं पापं कर्मणां सत्कर्मणां प्रापणे सत्कर्मफलभूतस्वर्गादिपुण्यलोकप्रापणे तद्वर्तने तेषां सत्कर्मणां प्रवर्तने अनुष्ठाने च प्रतिकूलमाहुः। केचित्कृत्वाऽपि पापं तन्निगूहयन्तः सन्ध्यादिकर्माचरन्ति। छद्मना रात्रौ कृतागम्यागमनादिपापप्रतिबन्धेन प्रातस्तत्कृतसन्ध्यावन्दनादिपुण्यात् स्वर्गादिफलं न भवति। प्राकट्येन पापं कुर्वाणास्तु लोकभयाभावात् सन्ध्यामेव नाचरन्तीति भावः। तस्मात्सन्तः असतां तत्पापं[1] नानुवर्तन्ति। पापे न वर्तन्त इत्येतावता पूर्तौ नानुवर्तन्त इति पदं पापे वर्तमानानामनुसरणमपि न[2] कुर्वन्तीति सूचयितुम्। चशब्दात्पुण्यमेवाचरन्ति च। लोके[3]शिक्षार्थं भगवानपि पापं नाचरति, किमुतान्य इति सूचयितुं परस्मैपदम्। यदा आत्मा कश्चिज्जीवः एषां सज्जनानामनुकूलवादी भवति तदा सोपि पापं[4] नानुवर्तते। अनुकूलवादित्वमपि बहुपुण्यसाध्यमिति सूचयितुं यदेत्युक्तम्॥

[1]एतत्पापं. [2]नास्तीति. [3]लोके शिक्षार्थं. [4]पापं च.

अभूद्धनं मे इत्यत्र विपुलं बहु[1] महत् श्रेष्ठं धनं मे अभूत् । विचेष्टमानः विषयेषु चेष्टमानः अहं तद्धनं अधिगन्ता ज्ञाता नास्मि । विषयलम्पटस्य मम धनवार्तैव नाभूदिति भावः । यद्वा विचेष्टमानः चेष्टारहितः मृतः तद्धनं अधिगन्ता प्राप्तो[2] नास्मि । मरणानन्तरं तद्धनं मम पृष्ठतः नागतमिति भावः। तस्माद्धनं प्रधार्य मदीयमिति निश्चित्य आत्महिते स्वोदरभरणे निविष्टः जीवन् जीवनमात्रे तात्पर्यवान् यः पुरुषो वर्तते सः अव अधस्तात् नरके गमनमित्यर्थः। न जानाति । अथवा सः धनलुब्धः पुरुषः आत्मानं नावजानाति मम जन्म वृथा गतमिति कदाऽप्यवज्ञां न करोति । यद्वा आत्महिते निविष्टः स्वस्य हितं जानन्नित्यर्थः । धनं सुकृताख्यधनं प्रधार्य स्वर्गे अन्वागमनशीलमिति निश्चित्य जीवन्नेव यः वर्तते सः तत्पुण्यधनं नावजानाति किमनेनेनेत्यवज्ञां न करोति । किन्तु पुनः पुनरार्जयत्येवेति[3] भावः ॥

महाधनो यो यजते स यज्ञैरित्यत्र यो यज्ञैर्यजते यः सुविनीतबुद्धिः स पुरुषः वेदानधीत्य तपसा देहं योज्य दिवमियादिति योजना ॥

न जातु हृष्येन्महता धनेनेत्यत्र नानाभावाः 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी'त्यादिप्रकारेण नानादुर्भावनासहिताः बहवः कंसजरासन्धाद्याः दैवाधीनाः सन्तः नष्टौ चेष्टाधिकारौ चेष्टा सज्जनद्रोहादिचेष्टा, अधिकारः राज्याधिकारश्च येषां ते तथोक्ता जाताः । तस्माद्धनमदादिकं न कर्तव्यमिति भावः ॥

तत्तत्प्राप्येत्यत्र तत्तत् तस्मिन् तस्मिन् काले जातं दुःखं प्राप्य न विहन्येत कराभ्यां स्वोरस्ताडनादिना न विहन्येतेत्यर्थः ॥

सुखं हि जन्तुरित्यत्र सुखमात्मशक्त्या नेति स्फोरणाय दुःखं च सदैव गृहीतम् ॥

लभितेति मत्वेत्यत्र तथा लभिता लाभवान् इति मत्वा मे सन्तापो नासीदिति सम्बन्धः । भवितेति पाठे स्पष्टोर्थः ॥

---

[1]बहुलं. [2]प्राप्ता. [3]आर्जयत एवेति भावः.

दिष्टक्षय इत्यत्र दिष्टक्षये उद्दिष्टकालक्षये स्वां प्रकृतिं भजन्ते; तत्त-देहाः स्वकारण एव विलीना भवन्तीत्यर्थः। अश्माऽपि अशनिपातादिना चूर्णी-भवति, किमु देहादिरिति सूचनायाश्मनो ग्रहणम्॥

किं कार्यं वै किं च कृत्वा न तप्य इत्यत्र इदानीं गगने लम्बमानेन मया किं कार्यं वै; किमपि कर्तुं न शक्यते। किं च कृत्वा सज्जनावमानादि-महापापमहमेव कृत्वा न तप्ये। स्वकृतापराधपरिहारस्यायं कालो न। अतः स्वकृतापराधफलमवश्यं मयैव भोक्तव्यमिति च मत्वा न तप्ये॥

नास्ति निष्ठेत्यत्र नितरां स्थितिर्निष्ठा॥

क्षेत्रज्ञवत् सर्वसाक्षिभूतपरमात्मवत्॥ ततः महतो लोकान् सूर्यचन्द्रादि-लोकान् [1]जयेयं प्राप्तोऽस्मि। 'जि प्राप्तावि' ति धातुः। ततः सूर्यादिलोकात् परं उपरितनं [2]ध्रुवादिलोकम्। ततः ध्रुवादिलोकात् पुरुहूतस्य पुरीममरावतीम्। ततः परं लोकं जनलोकादिलोकम्। ततः ब्रह्मणो लोकात् परं उपरि विद्यमानं अमुक्तगम्यं सान्तानिकादिलोकम्॥

त्रिः प्लुतेनेत्यत्र प्लुतेन दीर्घेण॥

देशिकं यज्ञभूमेरित्यत्र यज्ञभूमेर्देशिकं यज्ञभूमिदेशादुत्पन्नम्। प्रतीतं मां प्रति इतं प्राप्तं, प्रसिद्धं वा॥

इति सम्भवे पंचविंशोऽध्यायः।

## ॥ षड्विंशोऽध्यायः ॥

हित्वा त्वं तदित्यत्र हे कार्तयुगप्रधान कृतयुगे विद्यमानाः कार्तयुगाः तेषु प्रधानेति ययातेः सम्बुद्धिः॥

कथं तत्र क्षीणपुण्या भवन्तीत्यत्र तत्र स्वर्गे क्षीणपुण्याः जनाः कथं भवन्ति 'भू प्राप्तावि' ति धातोः प्राप्नुवन्ति, कं लोकं प्राप्नुवन्तीति यावत्॥

के वा शिष्टाः कस्य धामोपयान्तीत्यत्र शिष्टाः स्वर्गफलभोगानन्तर-मुर्वरिताः के पुरुषाः कस्य धाम स्थानमुपयान्ति, अन्तरिक्षं वा भुवि नरकं वेति प्रश्नार्थः॥

[1] अजयं. [2] भुवं वा.

इमं भौमं नरकं ते पतन्तीत्यत्र क्षीणे पुण्ये इत्येकदेशोक्त्या 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ती'ति समग्रगीतावाक्यं स्मारयति। भोगेन पुण्यं क्षपयन्तीति भावः। इदं 'कथं तत्र क्षीणपुण्या भवन्ती'ति प्रश्नस्योत्तरम्। ते स्वर्गाच्च्युताः सर्वे लालप्यमानाः अतिशयेन विलापं कुर्वन्तः सन्तः नरकं बहुदुःखमिश्रत्वान्नरकोपमं भौमं भूसम्बन्धिनं इमं लोकं प्रति पतन्ति। अन्तरिक्षेऽपि न तिष्ठन्ति। भूगर्तस्थितनरकं प्रत्यपि न गच्छन्ति। किन्तु भूलोकं प्रत्येवायान्तीति 'कस्य धामोपयान्ती'त्यस्योत्तरम्। ते भूलोकं प्राप्तास्ते पुरुषाः कङ्कगोमायुबलाशनार्थं कङ्कवत् गोमायुवच्च 'वल परिवर्तन' इति धातोः वलेन परिवर्तनेन इतस्ततो गमनेनेत्यर्थः। अशनार्थं अन्नार्थं बहुधा भृतकाध्ययनप्रजापीडनकृषिवाणिज्यादिबहुविधवृत्त्या प्रव्रजन्ति संन्यासिवत् पुत्रमित्रकलत्रादिकं त्यक्त्वा देशे देशे सञ्चरन्ति। इदं च पूर्वार्धोक्तनरकत्वस्फोरणार्थम्। तस्मादेतद्वर्जनीयमिति श्लोकस्य स्पष्टोऽर्थः॥

यदा समन्तात्पतितांस्तुदन्तीत्यत्र यदा पतितान् स्वर्गात्पतितान् जनान् वयांसि अन्तरिक्षे चरन्तः पक्षिणः गृध्राः पिशिताशना राक्षसाश्च तुदन्ति मध्येमार्गं व्यथयन्ति। एते गृध्राद्याः अन्तरिक्षे सुखेन सञ्चरन्ति, अहं तु अधोमुखः पतामि; हा कष्टमिति तान् दृष्ट्वा व्यथा जायत इति भावः। यद्वा वयांसि नानापक्षिरूपिणः गृध्ररूपाश्च पिशिताशना राक्षसाः समन्तात् तुदन्ति दंशनं कृत्वा व्यथयन्ति। अथवा वयांसि स्वर्गभोगानुभवकाले यानि स्वस्य वयांसि तानि, पिशिताशनाः 'चिन्ता जीवन्तमप्यहो' इति वचनात् पिशितानि स्वदेहमांसानि अश्नन्ति [1]क्षपयन्तीति पिशिताशनाः, गृध्राः 'गृधु आकाङ्क्षायामि'ति धातोः विषयोत्कण्ठाश्च तुदन्ति। स्वर्गे सुखदायकस्ववयः स्मृत्वा स्वर्गस्थनानाभोगांश्च स्मृत्वा मध्येमार्गं तदभावात् चिन्तैवैनं व्यथयतीति भावः। इदं लालप्यमाना इति ययातिना संमुग्धाकारेणोक्तविलापस्य विस्तरेणानुवादः। कथं भवन्ति ते पतन्तः पुरुषाः कथं भवन्ति अल्पकालेनैव पतमाना भवन्ति वा उत बहुकालेनेति प्राथमिकप्रश्नार्थः। पुनश्च कतमाः कीदृशा भवन्ति बहुकाल-

[1]भक्षयन्तीति।

विशिष्टत्वपक्षेऽपि समकालविशिष्टा वा विषमकालविशिष्टा वेति द्वितीयप्रश्नस्यार्थः। भौमं नरकं कथं अल्पकालेन वा बहुकालेन वा समकालेन वा विषमकालेन वा पतन्तीति शृणोमि। एवञ्च तृतीयः कथंशब्दः उक्तचतुर्विधप्रश्नानुवादार्थ एव। न तु पृथक् प्रश्न इत्यपि ज्ञेयम्। न भौममन्तर्नरकं शृणोमीति पाठे भौमं भूसम्बन्धिनं अन्तर्नरकं भूगर्ते विद्यमानं नरकं न शृणोमि। किन्तु भूमेरुपरि संसाररूपं नरकमेव शृणोमीति भावः॥

उक्तानुवादपूर्वकं प्रथमप्रश्नस्योत्तरमाह— **ऊर्ध्वं देहात्प्राणिनो जृम्भमाणा इति**। देहादूर्ध्वं देहप्राप्तेरनन्तरं व्यक्तं स्पष्टं इह पृथिव्यां सञ्चरन्ति। एवञ्च उक्तविधया इमं भौमं नरकं ये पतन्ति ते अनेकान् वर्षपूगान् नावेक्षन्ते संसारासक्तत्वान्न पश्यन्तीति योजना। बहुकालेनैवायान्ति, न त्वल्पकालेनेति ययातेर्हृदयम्॥

द्वितीयप्रश्नेऽपि समबहुकालवन्तो न, किन्तु स्वकर्मानुसारेण विषमबहुकालवन्त इति भावेन द्वितीयप्रश्नस्योत्तरमाह— **षष्टिं सहस्राणीति**। परिवत्सरशब्देन सप्तविंशतिनक्षत्रैरेको मास इति कल्पनया द्वादशमासात्मको वत्सरो गृह्यते। केचित् षष्टिं, केचित्सहस्राणि, केचिदशीतिं परिवत्सराणि, केचिदन्यथा च पतन्तीति यथासम्भवमूह्यम्॥

**तान्वै तुदन्ति पततः प्रपात** इत्यत्र प्रपाते प्रकृष्टः पातो यस्मिन् लोके स प्रपातः तत्र[1] पततः तान् स्वर्गच्युतान्[2] भीमाः भयङ्कराः भौमाः भूसम्बन्धिनः तीक्ष्णदंष्ट्रा राक्षसा अन्तरिक्षलोकं गत्वा तुदन्ति॥

**यदैनसेत्यत्र** यदा एनसा पापेन पततः जीवान् भीमा भौमास्तीक्ष्णदंष्ट्रा राक्षसास्तुदन्ति तदा उक्तविधया स्वकृतपापशेषमनुभूय[3] पुनः कथं केन प्रकारेण भवन्ति उत्पद्यन्ते, रेतोरूपेण वा तद्भिन्नेव वा। रेतोरूपेणेति पक्षेऽपि कतमाः कीदृशाः रेतःप्राप्तिकाले किंकिंद्वारविशिष्टा भवन्तीत्यर्थः। कथंभूताः रेतःप्राप्त्यनन्तरमपि कं प्रकारमाश्रिताः गर्भभूता भवन्ति गर्भत्वं प्राप्ता भवन्तीति प्रश्नवाक्यार्थः॥

---

[1] ततः. [2] स्वर्गाच्च्युतान्. [3] स्वकृतं पापदोषं.

अत्रापि गर्भोत्पत्तेरेवान्तरङ्गत्वात् प्रथमतृतीयप्रश्नयोः सहैवोत्तरमाह— **असृग्रेत इति** । पुरुषेण सृष्टं तच्छुक्ररूपं रेतः पुष्पकालानुपृक्तं पुष्पकाले ऋतुकाले ऋतुस्नानकाल इति यावत् । अनुपृक्तं अनु अनुकूलतया पृक्तं स्वेन सह सम्बद्धं असृक् शोणितात्मकं स्त्रीरेतः अन्वेति अनुकूलतया प्राप्नोति । स च उत्पत्स्यमानो जीवः एतस्याः नार्याः रजः 'रञ्ज राग' इति धातोः रक्तं तच्छोणितं आपद्यते शुक्रद्वारा प्राप्नोति । पुनः स एव जीवः तत्र गर्भभूतः शुक्रशोणितसमागमेन गर्भाकारेण सम्भूतः तत्र मातुरुदरान्तस्स्थगर्भवासयोग्ये[1] जरायुस्थाने समुपैति । योन्याकाशाज्जरायुयोग्यं मातुरुदराकाशं गच्छतीति भावः ॥

कतमा भवन्तीत्यस्योत्तरं— **वनस्पतीनिति** । फलद्वारा पुंरेतः प्राप्नुवन्तः वनस्पतीनाविशन्ति । धान्यद्वारा चेदोषधीः । पानद्वारा चेदपः । पुष्पसौरभादिद्वारा चेद्वायुम् । मृदास्वादनद्वारा चेत्पृथिवीम् । अकस्माचेदाकाशम् । पशुमांसभक्षणाचेच्चतुष्पदम् । मनुष्यमांसभक्षणद्वारा चेत् द्विपदं एवं भूताः एवं प्राप्ताः गर्भभूता भवन्तीत्यर्थः ॥

पुनश्च स्वेच्छया वा प्रागुक्तगर्भस्थानं प्राप्नोति, अन्येच्छया वेति पृच्छति— **अन्यो हीति** । गर्भं गर्भस्थानं प्रब्रवीमि पृच्छामि ॥

शरीरदेहादिसमुच्छ्रयं चेत्यत्र शरीरं प्राक् शरीराकारं पुनस्तस्यैव देहादिसमुच्छ्रयं सूक्ष्ममध्यदेहस्यादिपदोक्तकरचरणादेश्च समुच्छ्रयं अभिवृद्धिं केन लभते । चक्षुःश्रोत्रं चक्षुश्श्रोत्रपदोपलक्षितज्ञानेन्द्रियपट्कं केन लभते । संज्ञां ज्ञानं च केन लभते । यद्यन्मया पृष्टं तत्तत्सर्वं तत्वं पृष्टस्त्वमाचक्ष्व ॥

वायुः समुत्कर्षतीत्यत्र पुष्पकालानुपृक्तं रेतः ऋतौ षड्तूनां मध्ये एकस्मिन् तज्जननयोग्यऋतौ गर्भयोनिं गर्भस्थानं प्रति वायुः मुख्यप्राणः समुत्कर्षतीति अन्यो हि वै (वि)निदधातीत्यस्योत्तरम् । तन्मात्रकृताधिकारः तन्मात्रेषु रूपरसादिपञ्चतन्मात्रेषु कृतः अधिकारः अभिमानरूपाधिकारो यस्य समानादिरूपेण गन्धरसाद्यभिमानीत्यर्थः । स वायुरेव क्रमेण तं गर्भं संवर्धयति । कलल-

[1] उदरान्तरस्थगर्भावासयोग्ये.

बुद्बुदमांसमज्जाकरचरणमुखाद्याकारेण संवर्धयतीत्यर्थः । इदं 'शरीरदेहादिसमुच्छ्रयं च केन लभत' इत्यस्योत्तरम् ॥

स जायमानो निगृहीतगात्र इत्यत्र जायमानः उदर एवाभिवर्धमानः स मनुष्यः निगृहीतगात्रः नितरां गृहीतं गात्रं येन सः प्रज्ञाननिष्ठायतनः प्र प्रकृष्टेन मुख्यप्राणेनैव ज्ञाननिष्ठायतनः ज्ञानस्य निष्ठा उत्कर्षः तस्या आयतनः आधारभूतः भवति । 'निष्ठोत्कर्षे व्यवस्थायामि'त्यभिधानम् । संज्ञोत्कर्षप्रकारमेव प्रपञ्चयति— स श्रोत्राभ्यामित्यादिना । महात्मनो महापुरुषात् मुख्यप्राणादेव शरीरे मातुः शरीरे एतान् त्वया पृष्टान् गर्भस्थानप्राप्त्यादीन् विहितान् कृतान्विद्धि । मातुरुदरे गर्भोपचयकरचरणाद्याकारज्ञानादिलाभः सर्वोपि मुख्यप्राणकृपयैव भवति, न स्वेच्छया न मातुरिच्छयेति सकलप्रश्नानामप्युत्तरम् ॥

यः संस्थित इत्यत्र संस्थितः मृतः । अभावभूतः अदर्शनं गतः ॥

पवमानानुसारीत्यत्र पवमानो मुख्यप्राणः तदनुसारी तेन नीत इत्यर्थः । पवमानेन अग्रे पुरतः सारी गच्छन् (इति वा) ॥

चेतयते परस्तादित्यत्र परस्तात् देहान्तरे चेतयते जानाति । विवक्षा पापफलानां विवक्षा, नारकयातनाया अतिक्रूरत्वेन यावता[1] वर्णयितुमशक्यत्वादिति भावः ॥

आख्यातमेतन्निखिलेनेत्यत्र निखिलेन सकलशास्त्रेण[2] ॥

मानेन सदेत्यत्र मानेन अहङ्कारेण[3] ॥

ब्रह्म वेदः परब्रह्म वा ॥

चत्वारि कर्माण्यभयङ्कराणीत्यत्र मानाख्याहङ्कारेण सह कृतत्वात् मानाग्निहोत्राद्याख्यान्येतानि । अत एव अयथाकृतानि भयं प्रयच्छन्ति ॥

इति दद्यादिति यजेदित्यधीयीत मे व्रतमित्यत्र मे व्रतमित्युक्त्वा दद्यात् । एवमुत्तरत्रापि । इत्यनेन प्रकारेण दानादिसत्कर्मसहितोऽहमस्मीति वदे-

---

[1] दयावता. [2] निखिलशास्त्रेण. [3] मानाख्याहंकारेण.

चेत् इमानि स्वाहाङ्कारप्रकटनपूर्वकं कृतत्वाद्भयानि भयप्रदानि । पूर्वश्लोके मनोदोषः, अस्मिन् श्लोके वाग्दोष इति विवेकः ॥

ये चाश्रमानित्यत्र मनीषिणः ज्ञानिनः संविभक्तान् अस्येदमस्येदमिति सम्यग्विभज्य कथितान् आश्रमान् वेदयन्ते मरणकाले स्मरन्ति । प्रेत्य मरणानन्तरं [1]निश्रेयः नितरां श्रेष्ठं तैजसं तेजोमयं तद्रूपं पुण्यफलभोगयोग्यं देहमेत्य । योगमिति पाठे युज्यत इति योगो देहः तम् । इह पूर्वोक्तस्वर्गादिलोकेषु परां शान्तिं सुखं प्राप्नुवन्ते ॥

इति सम्भवे षड्विंशोऽध्यायः ।

---

## ॥ सप्तविंशोऽध्यायः ॥

आचार्यकर्मा आचार्यस्य सेवारूपं कर्म यस्य स तथोक्तः ब्रह्मचारीत्यर्थः ॥

बहून्यस्मिन्नित्यत्र अस्मिन्नाश्रमचतुष्टये बहूनि फलानि ॥

न गृहस्थश्च नित्यमित्यत्र कस्मिंश्चिद्गृहे स्वाधीनगृहे स्थितः अल्पचारः 'चर गतिभक्षणयोरि' ति धातोः अल्पाहारः ॥

विजिताः सुखाश्चेत्यत्र सुखयन्तीति सुखाः सुखकरा विषयाः । भवितुं विरक्तो भवितुम् ॥

दशैव पूर्वानित्यत्र दशपूर्वान् ज्ञातीन् अपरान् दशैव एकविंशमात्मानं च ॥

ग्रामे चावसतोऽरण्यमित्यत्र अरण्यं पृष्ठतो भवतीत्यावृत्त्या योजना ॥

न ग्राम्यानुपयुञ्जीत स (य) आरण्यो मुनिर्भवेत् । तथाऽस्य वसतोऽरण्ये ग्रामो भवति पृष्ठत इत्यत्र ग्राम्यान् ग्रामस्थदधिक्षीरादिभोगान् ग्रामस्थजनांश्च नोपयुञ्जीत न सेवेत । तथा पूर्वार्धोक्तप्रकारेण ग्रामस्थसकलभोगांस्त्यक्त्वा ग्राम्यभोगान्विहायैव अरण्ये वसतोऽस्य योगिनः ग्रामः पृष्ठतः कृतो भवति धिक्कृतो भवतीत्यर्थः ॥

---

[1]निःश्रेयः.

अनग्निरनिकेतश्च अगोत्राचरणो मुनिः । कौपीनाच्छादनी चीरी सर्वस्वादुविवर्जितः ॥ यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् । तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठत इत्यत्र तथा अनग्निरनिकेत इति श्लोकोक्तप्रकारेण स्ववैराग्यमविहायैव ग्रामे वसतोऽप्यस्य संन्यासिनः अरण्यं पृष्ठतो भवति अनुचरवत्स्वपृष्ठभाग एवायातीत्यर्थः । एतादृशवैराग्यादिभाग्यवान् भिक्षुर्ग्रामे स्थितो(प्य)रण्यस्थ एवेति भावः ॥

वेदशास्त्रादिगोष्ठ्या अरण्येऽप्यपेक्षितत्वात् सर्वथा व्याहारवर्जनं न मौनं, किन्तु दुर्गोष्ठीपरित्याग एव मौनमिति भावेनाह— यस्तु कामानिति । कामान् काम्यार्थप्रसङ्गान् । मौनं दुर्गोष्ठीपरित्यागम् । अलङ्कृतं ऊर्ध्वपुण्ड्रादिना अलङ्कृतम् ॥

असितं सितकर्मस्थं कस्तं नार्चितुमर्हतीत्यत्र 'षिञ् बन्धन' इति धातोः सितकर्मस्थं स्वहृदिस्थहर्षर्पणबुद्ध्या बन्धकस्रक्चन्दनादिविषयेषु स्थितं[1] हृदि स्थितं वैराग्यमजानतां मन्दानां दृष्टिपथेन विषयाभिलाषिवत् स्थितं ब्रह्मादियोगिसमूहं असितं तत्रासक्तिशून्यत्वात् बन्धगन्धविधुरमित्यर्थः । 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा' इति वचनात् अतिधीर[2]योगीश्वरमित्यर्थः । कः अर्चितुं नार्हतीति योजना ॥

आस्येन मृगयते आस्यस्य यावदपेक्षितं तावदेव मृगयते, न तु परदिनार्थमार्जयतीत्यर्थः ॥

अथास्य लोक इत्यत्र अस्य यतेः पूर्वो यो लोकः स एवामृतत्वाय कल्पते । मोक्षवदत्रापि कुतश्चिद्भयरहितत्वादिति भावः ॥

इत्येतत्कारणं ज्ञेयमित्यत्र शुभाशुभं एतत्कारणं एतानि सुचरितदुश्चरित्राणि कारणानि यस्य तत्तथोक्तम् ॥

इति सम्भवे सप्तविंशोऽध्यायः ।

---

[1] स्थित. [2] धीरं.

## ॥ अष्टाविंशोऽध्यायः ॥

कतरस्त्वेतयोरित्यत्र एतयोः गृहस्थसंन्यासिनोः ॥

अप्राप्य दीर्घमायुस्त्वित्यत्र प्राप्तः विशिष्टकुलं प्राप्तः । विरुद्धाकृतिर्विकृतिः पापम् । अन्यः देहान्तरं गतः तपश्चरेत्[1] ॥

यद्वै नृशंसं तदसत्यमाहुरित्यत्र यत् नृशंसं निष्ठुरत्वं भावप्रधानो निर्देशः । तदसत्यमाहुः । निष्ठुरवचनमेवानृतं, न त्वनृतवचनमिति भावः । यस्मिन् असत्ये अनर्थबुद्धिः अनर्थोऽयमिति बुद्धिर्यस्य सोऽनर्थबुद्धिः सः धर्मं सेवेते[2] । सः अस्वोपि अधनोपि अत एव बहुवित्तसाध्ये यज्ञादौ अनीशश्च[3] असमर्थोपि धर्मं नित्यनैमित्तिकात्मकनिवृत्तिरूपधर्मं अनर्थबुद्धिः अर्थे स्वर्गादौ बुद्धिर्यस्य न सोऽनर्थबुद्धिः सन् सेवेते । धारयतीति धर्मो नारायणस्तं च सेवेत । तदेव आर्जवमिति वदन्ति, स एव समाधिरिति, तदेव आढ्यं यज्ञादिभ्योप्यतिशयितं च वदन्ति ॥

केनासि दूतप्रहित इत्यत्र केन दूतवत्प्रहितोऽसि । दूतेन केनेति पाठे स्पष्टोऽर्थः ॥

विद्या चैवमतिमाना च बुद्धिरित्यत्र विद्या, लोक्यं पापलोकसाधनं सर्वं कर्म च ममाभवत् । अतिमाना बुद्धिश्चाभवत् । तेन भूलोकं प्रति प्रहितोऽसीति केन प्रहितोऽसीत्यस्योत्तरम् । मम दुर्बुद्ध्यैव प्रहितोऽसि, न त्वन्येन केनचिदिति भावः । उक्त्वा वः एतावदुक्त्वा । ब्राह्मणाः ब्रह्म अणन्तीति ब्राह्मणाः सकलवेदपारज्ञता इति लोकपालानां विशेषणम् ॥

नाब्राह्मण इत्यत्र अब्राह्मणः ब्राह्मणव्यतिरिक्तः क्षत्रियः ॥

कुर्यादेवं न कृतं यदन्यैरित्यत्र अन्यैः यदकृतं[4] तदहमपि न कुर्यामिति नञावृत्त्या योजना ॥

यदा भवेत्संशयो धर्मकार्य इत्यत्र धर्मकार्ये सम्यक् शेत इति संशयः धर्म एव स्थिरबुद्धिरित्यर्थः । यत् अर्थकामौ न विरुद्धचेत् स धर्मः ॥

इति सम्भवे अष्टाविंशोऽध्यायः ।

---

[1] ततः (तपः) चरेत्. [2] सेवेत [3] अनीश्वरः [4] यत्र कृतं

## ॥ एकोनत्रिंशोऽध्यायः ॥

क्रीणीष्वैनानित्यत्र तृणकेन दूर्वादितृणेन स्वार्थे कप्रत्ययः । कुत्सिततृणेन वा, दानं नेच्छसि चेत् अस्माकं किञ्चित्तृणमेव क्रयरूपेण[1] दत्त्वा तान् लोकान् क्रीणीष्वेति भावः ॥

यथा गृहीतं शिशुक इत्यत्र शिशुके कदलीफलादिकं दत्त्वा गृहीतं आभरणादिकं यथा तथा अहमपि शङ्कमानः ॥

अकृतहोमसमाप्तीनां अवभृथायोगात् होमोपि समापित इत्याह— अश्वमेधे महायज्ञ इति । पुरा स्वयम्भुविहिते कर्तव्यतया विहिते अश्वमेधे अष्टकादिभिः क्रियमाणाश्वमेधे हूयन्तः[2] होमं कुर्वन्तः । अथवा ब्रह्मणा[3] सह ये षोडशर्त्विजः, हयस्य यान्यङ्गानि तानि[4] हूयन्त इति योजना ॥

अश्वमेधफलमाह— धूमगन्धं वपा इति ॥

परिणामे मृगव्रतेत्यत्र परिणामे वार्धके मृगव्रता मृगवत् तृणकणादिभक्षणेन प्राणान् धारयन्ती ॥

(मा मा भ्रष्टेति चाब्रवीदित्यत्र हे मातामह स्वर्गात् मा भ्रष्ट भ्रष्टो मा भवेत्यब्रवीच्च ।)

पुत्राणामपि पौत्राणामित्यत्र पुत्रपुत्रोपि पौत्रः पुत्रीपुत्रोऽपि पौत्र इति माधव्या हृदयम् ॥

श्राद्धे श्र(श्रा)पितारः अन्नश्रपणं कुर्वन्तः पाचका इत्यर्थः ॥

स काले कालत इत्यत्र स एव श्राद्धकालः (एव), तस्मिन् काले दत्तमेव कालतो दत्तम् ॥

ह्रीनिषेधः ह्रिया निषेधति सकलदुष्कर्माणीति ह्रीनिषेधः ॥

प्रस्थे बद्धेत्यत्र प्रस्थे मानविशेषे बद्ध्वा भूषणरत्नकनकादीनि पूरयित्वा। अथवा प्रस्थे निक्षिप्य अबद्ध्वा कोशान्तर्ग्रन्थौ बन्धनमकृत्वा ॥

मा मा भ्रष्टेति चाब्रवीदित्यत्र हे मातामह स्वर्गाद्भ्रष्टो मा भवेत्यब्रवीच्च ॥

---

[1] क्रयरूपं. [2] अहूयन्त होमं कृतवन्तः. [3] ब्राह्मणास्त एव. [4] तान्यहूयन्तेति.

सन्नमाविष्टचेतनेत्यत्र भावे क्तः । सन्नं सादम् ॥

इति सम्भवे एकोनत्रिंशोऽध्यायः ।

॥ इति यायातं समाप्तम् ॥

## ॥ त्रिंशोऽध्यायः ॥

(दौष्यन्तेर्जनमेजयादित्यत्र जनमेजयादनन्तरम् । यवीयान् सुन्वतः पुत्रो रथन्तर्यामजायतेत्यत्र यवीयान् यवीयोनामकः कुमारः ज्येष्ठः । शूराद्यास्त्वनुजा इति विवेकः । विद्वांश्चर्चे पुतोऽभवदित्यत्र च ऋचे पुतः इति पदच्छेदः ॥)

चर्चे पुनोऽभवदित्यत्र च ऋचे पुन इति पदच्छेदः ॥

रथन्तर्यामृपीनित्यत्र ऋपीन् राजर्षीन् ॥

इति सम्भवे त्रिंशोऽध्यायः ।

## ॥ एकत्रिंशोऽध्यायः ॥

अकृष्टकरकृदित्यत्र कृष्टं कृषिः तद्रहिताः अकृष्टाः तेभ्यः करं करोति ददातीति करकृत् । अकृष्टश्चासौ करकृच्च तादृशो न भवतीति नाकृष्टकरकृत्॥

इति सम्भवे एकत्रिंशोऽध्यायः ।

## ॥ द्वात्रिंशोऽध्यायः ॥

शक्तिपाणिं स्म मेनिर इत्यत्र शक्तिपाणिः षण्मुखः । 'षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारण' इत्यमरः ॥

निर्जरमित्यत्र जरा जरणं नाशः तद्रहितमित्यर्थः ॥

इति सम्भवे द्वात्रिंशोऽध्यायः ।

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

सोऽपश्यदिरिणं तत इत्यत्र इरिणं ईरिणं ऊपरभूमिमित्यर्थः । 'भवेदीरिणमूषरं' मिति हलः ॥

नदीकच्छोद्भवमित्यत्र कच्छस्तीरम् । 'कच्छो रोधस्तटं तीर' मिति निघण्टुः ॥

तत्र व्यालमृगान् सौम्यानित्यत्र व्यालो दुष्टगजः, 'व्यालो दुष्टगजः प्रोक्त' इति हलः । व्यालः सर्पो वा, मृगाः सिंहादयः तान् सर्वान् आश्रम-प्रभावेन सौम्यान् आगतानामपीडाकरान् परस्परं च प्रसन्नान् पश्यन्निति सम्बन्धः ॥

सचक्रवाकपुलिनामित्यत्र चक्रवाकैः सहितं पुलिनं सैकतं यस्याः सा ताम् । 'सैकतं पुलिनं द्वीपसिकता वालुका स्मृते' ति हलः ॥

तच्छिरोभिरिति पाठे तेषां वेदानां शिरोभिरुपनिषद्भिः । भारुण्ड-सामगीताभिः उद्गीथशैवादिनामवत् भारुण्डमिति कस्यचित्साम्नो नाम ॥

स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैरित्यत्र स्थापनं स्वसिद्धान्त-स्थापनं, आक्षेपः परपक्षनिराकरणं, सिद्धान्तः सत्सिद्धान्तः ॥

लोकायतिकमुख्यैश्चेत्यत्र लोकान् आ समन्तात्सञ्चरन्ति ये यतयः ते लोकायतिकाः, स्वार्थे कप्रत्ययः । तेषु मुख्यैः । वैदिकशिरोमणीनामृषीणां संसदि चार्वाकादीनामसम्भवादुक्त एवार्थः ॥

इति सम्भवे आश्रमदर्शनं नाम त्रयस्त्रिंशोऽध्यायः ।

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

वचनं मत्तकाशिनीत्यत्र मत्तकाशिनीति उत्तमस्त्रिया नाम । 'वरा-रोहा मत्तकाशिन्युत्तमा वरवर्णिनी' त्यमरः । 'अमत्ता मत्तवद्भाति या स्त्री सा मत्तकाशिनी' ति च निघण्टुः ॥

चलेद्धि चित्तमित्यत्र पुण्यानां मध्ये क्वचिन्निक्षिप्तं चित्तं कदाचिच्चलेत् पुण्यान्तरं प्रति चालयेत्, धर्मात्तु न चलेदेव ॥

विगृह्य स वसिष्ठमित्यत्र विगृह्य वसिष्ठं विरुद्धतया गृह्य वैरिणं कृत्वेत्यर्थः ॥

दुर्गे महात्मन इत्यत्र दुर्गे विषमस्थले कुरुक्षेत्र इत्यर्थः ॥

त्वं च सोममित्यत्र सोमं सोमरसम् ॥

अतिनक्षत्रवंशानीत्यत्र एतावत्सु नक्षत्रेषु जातः ब्राह्मणो भवति, एतावत्सु नक्षत्रेषु क्षत्रियः, एतावत्सु वैश्यः, एतावत्सु शूद्र इति नक्षत्रेषु पूर्वकल्पनाऽस्ति। अतिनक्षत्रवंशानि क्षत्रवंशो न भवतीति नक्षत्रवंशो ब्राह्मणवंशः, सः अतीतो यैः स्वोत्पत्तिकालीननक्षत्रैः तानि नक्षत्राणि अतिनक्षत्रवंशानि क्षत्रकुलोत्पत्तियोग्यश्रवणादिनक्षत्राणीति यावत् । इति कृत्वा नक्षत्रसम्पदा क्रुद्धः उत्पत्तिकालीनश्रवणादिनक्षत्रदोषात् खलु स्वयं क्षत्रकुले जात इति नक्षत्रेषु कोपवानित्यर्थः । प्रति अश्विन्यादिनक्षत्राणि प्रति तत्प्रतिकूलतयेत्यर्थः । श्रवणपूर्वाणि श्रवणमेव पूर्वमादिर्येषां तानि नक्षत्राणि ससर्ज । श्रवणस्यैव पूर्वत्वे ब्राह्मणजन्मयोग्यप्राथमिकनक्षत्रेषु श्रवणस्य प्राक् पठितत्वात् स्वस्य ब्राह्मणजन्म भविष्यतीति मत्वेति भावः ॥

हुताशनमुखत्वादिकं तदन्तर्यामिनारायणमपेक्ष्यैवोक्तमिति द्रष्टव्यम् ॥

इति सम्भवे चतुस्त्रिंशोऽध्यायः ।

## ॥ पञ्चत्रिंशोऽध्यायः ॥

गृध्रां वाससीत्यत्र वाससि गृध्रां आकाङ्क्षावतीम् । 'गृधु आकाङ्क्षाया'मिति धातुः ॥

अद्य संज्ञामित्यत्र संज्ञां मदागमनसूचनाय पादेन जलताडनाख्यसङ्केतं, यया संज्ञया अस्य तपसः क्षयं निर्यातं प्राप्तम् ॥

इति सम्भवे शकुन्तलाजन्मकथनं नाम पंचत्रिंशोऽध्यायः ।

## ॥ षट्त्रिंशोऽध्यायः ॥

कुण्डले परिपादुके इत्यत्र परिपादुके परितः सञ्चारयोग्यपादुके ॥

सुप्रजास्त्वमवाप्स्यसीत्यत्र (शोभना प्रजा यस्याः सा सुप्रजाः) सुप्र-

[1]सुप्रजसः

जायाः भावः सुप्रजास्त्वमिति वैदिकपदम् । 'सुप्रजास्त्वमङ्गिरसो वो अस्तु' इति प्रयोगात् ॥

परं चाभिप्रयातस्येत्यत्र परं वैरिणं, चक्रं आज्ञाचक्रम् ॥

इति सम्भवे शाकुन्तले षट्त्रिंशोऽध्यायः ।

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

सूतिकाले प्रसूयेतीत्यत्र त्वरां न कुरु । सूतिकाले प्राप्ते सति प्रसूय प्रसवं कुरु इति पिता यदब्रवीत् तत्करिष्यामीति त्वयाऽप्युक्तम् । तद्वचनं कर्तव्यम् ॥

चतुष्किष्कुश्च किष्कुश्चेति पाठे आयामेन चतुष्किष्कुः चतुर्हस्तप्रमा-(णकः)णः । 'किष्कुर्हस्ते वितस्तौ चे'त्यमरः । किष्कुः विस्तारेण एकहस्त-प्रमाण इत्यर्थः ॥

शापिता मम पादयोरित्यत्र मम पादयोः शापिता शपथं प्रापिता ॥

अनूपजाङ्गलयुतमित्यत्र अनुना पूरुज्येष्ठेन अधिष्ठितं उपजाङ्गलं जाङ्ग-लाख्यजनपदसमीपे वर्तमानं स्थलं अनूपजाङ्गलं तेन युतम् ॥

सर्वतः पुष्करिण्यैरित्यत्र पुष्करिण्यैः पुष्करिण्युद्भवकमलादिभिः ॥

इति सम्भवे सप्तत्रिंशोऽध्यायः ।

---

## ॥ अष्टत्रिंशोऽध्यायः ॥

सिंहानूकः सिंहगतिरित्यत्र सिंहानूकः सिंहवत् अनूकं शीलं धैर्यादि-गुणस्वभावो यस्य स तथोक्तः । 'अनूकमन्ववाये च शीलेऽपि च निगद्यत' इति निघण्टुः ॥

यथा तत्समय इत्यत्र तस्मिन् समये विवाहकाले कृतसङ्केते ॥

एकोऽहमस्मीत्यत्र हृच्छयं हृदि शयानम् ॥

---

[1]चतुर्हस्तः प्रमाणतः.

यमो वैवस्वत इत्यत्र दुष्कृतं निर्यातयति तस्माद्वद्धिः प्रापयति ॥

तं यमः पापकर्माणं निर्यातयति दुष्कृतमित्यत्र निर्यातयति दुष्कृतमनुसृत्य तं निर्यातयति नितरां यातनां प्रापयति ॥

यस्यात्माऽपि न कारणमित्यत्र आत्माऽपि परमात्माऽपि कारणं तस्य श्रेयःकारणं न ॥

[1]न खल्विदमित्यत्र इदं पुरं शून्यं न करोमि, शापेन न भस्मीकरोमीत्यर्थः ॥

कान्तारेष्वथ विश्राम इत्यत्र विश्रामः वृक्षच्छायादिकमाश्रित्यालस्यपरिहरणम् ॥

शिशुमालिङ्गमानस्येत्यत्र शिशुं आलिङ्गमानस्य पितुः सूनोः स्पर्शः यथा सुखं तथेति पूर्वेणान्वयः ॥

पुंश्चली प्रतिभासि म इत्यत्र पुंश्चली वेश्या । 'पुंश्चली बन्धकी वेश्ये' त्यभिधानम् ॥

सर्वा वामाः स्त्रिय इत्यत्र वामाः भर्तुः प्रतीपाः । 'वामा वध्वां सव्यरम्यप्रतीपेष्वि' त्यमरः । असत्योक्ताः असत्यमुक्तं वचनं यासां ता असत्योक्ताः स्त्रियः ॥

निर्माल्येव प्रवासितेत्यत्र निर्माल्येव धृत्वोज्झितपुष्पमालेव प्रवासिता प्रवासं प्रापिता त्यक्तेति यावत् ॥

अरिष्ट इव दुर्बुद्धिरित्यत्र अरिष्टः काकः । 'अरिष्टः करटः काक' इति हलः ॥

इति सम्भवे शाकुन्तले अष्टत्रिंशोऽध्यायः ।

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

भवतीह विपोटक इत्यत्र 'सदोषः स्वयमन्येषां निन्दकस्तु विपोटक' इत्यभिधानात् विपोटकः दुर्वाक्यैः परनिन्दकः ॥

---

[1]न खल्वहमिदमित्यत्र.

क्रीतान् सर्वविवर्जितानित्यत्र सर्वविवर्जितान् सर्वैः पितृमातृसहोदरादिबन्धुजनैः विवर्जितान् रहितान् अनाथानिति यावत्। कृतान् पुत्रीकृतान् दत्तपुत्रानिति यावत् ॥

अन्यासु चोत्पन्नानित्यत्र अन्यासु स्वगृहस्थदास्यादिषु। (मनुः—औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयञ्जातश्च शौद्रश्च षडदायादबान्धवाः ॥)

आत्मानमवगच्छाश्चित्यत्र आत्मानं परमात्मानं अवगच्छ मनसा स्मर। तादृशेन परमात्मस्मरणशीलेन ॥

इति सम्भवे एकोनचत्वारिंशोऽध्यायः।

---

## ॥ चत्वारिंशोऽध्यायः ॥

माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः। भरस्व पुत्रं दुष्यन्त सत्यमाह शकुन्तलेत्यत्र स्वोदरे वायुं परिपूर्य काले काले मुञ्चती चर्ममयी कारूणामुपकारिणी काचन सामग्री तद्वन्माता। पुत्रस्तु पितुरेवोपकारकः यस्मात् सः पितैव मातुरुदरे दत्तस्वरेतोरूपेण जातः। शुक्रान्तस्स्थितजीवस्य मातुरुद(रे)रप्रवेशानन्तरं जीवावरकं तदेव शुक्रं मातृभुक्तान्नरसादिना देहाकारेण परिणतं भवति। शोणितं तु सरोजस्य पङ्किलं सरोजलमिव आधारमात्रमिति भावेन स एवेत्युक्तम्। यथा कारुकरपूरितभस्त्रानिस्सृतो वायुः कारोरेवोपकारकः तथेति भावः ॥

रेतोधाः पुत्रं नयतीत्यत्र हे नरदेव दुष्यन्त पुत्रं पुत्रः रेतोधाः रेतोधातारं पितरं अक्षयं लोकं नयति। 'नापुत्रस्य लोकोऽस्ती'ति श्रुतेः। अस्य सर्वदमनाख्यस्य शकुन्तलागर्भस्य धाता रेतोधाता च सः त्वम्। अतः कारणात्त्वं भरस्वेति पूर्वेणान्वयः। "'व्यत्ययो बहुल'मिति सूत्रात् स्वग्रन्थस्य छन्दस्समानत्वद्योतनाय विभक्तिव्यत्यासोऽयमिति ज्ञातव्यम् ॥

सर्वेभ्यो ह्यङ्गमङ्गेभ्य इत्यत्र सर्वेभ्यः अङ्गेभ्यः पित्रङ्गेभ्यः अङ्गं स्वाङ्गं सम्पाद्य तदङ्गसदृशसर्वाङ्गतयेत्यर्थः ॥

अन्योन्यप्रकृतिर्ह्येष इत्यत्र एषः पतिजायाभावः ॥

क्षम्याः पतिकृत इत्यत्र पतिकृते क्षम्याः क्षमावत्यः ॥

लक्षयन् लक्षणानीत्यत्र लक्षणानि राजयोग्यलक्षणानि लक्षयन् तव पुत्रः ॥

तस्य तत्प्रथितं चक्रमित्यत्र तत्प्रसिद्धं चक्रं नारायणसुदर्शनं प्रावर्तत सर्वतो रक्षणाय सेनायां प्रतिष्ठितमभूत् ॥

श्रीमान् गोविततं नामेत्यत्र गवि भूम्यां विततत्वात् प्रथितत्वात् गोविततं नाम ॥

सहस्रं पद्मानां पद्मसंख्याकधनानां, 'शतं शतसहस्राणां कोटिमाहुर्मनीषिणः । शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते ॥ शतं शङ्कुसहस्राणां महाशङ्कुरितीर्यते । महाशङ्कुसहस्राणां शतं वृन्दमिहोच्यते ॥ शतं वृन्दसहस्राणां महावृन्दमितीर्यते । महावृन्दसहस्राणां शतं पद्मं विदुर्बुधाः ॥' इति युद्धकाण्डे वाल्मीकिवचनम् । एवंविधसुवर्णं कण्वाय ददाविति सम्बन्धः ॥

जह्नुमुभौ च जन रूपणमित्यत्र हे जन! जनमेजय इति राज्ञः सम्बोधनम् । जह्नुं रूपणं चेत्युभौ ॥

विषाणभूतं सर्वस्येत्यत्र सर्वस्य शत्रुसमूहस्य विषाणभूतं उत्तुङ्गगोशृङ्गवत् भयङ्करत्वाद्विषाणभूतं, विषमणति प्रापयतीति विषाणः सर्पो वा ॥

सौरी तपतीत्यत्र सौरी सूर्यपुत्री तपती (नाम) ॥

अभीश्वतः परीक्षिचेत्यत्र अभीश्वतः अभीश्वन्नामकात् कुरुपुत्रात् ॥

सिंहावलोकनन्यायेन कुरुपुत्रस्य जनमेजयस्य वंशं पुनराह— जनमेजयस्य तनया इति ॥

पर्यश्रवसमिन्द्राभमित्यत्र युधि नारान् नरसमूहान् अति अतिक्रम्य वर्तेत इति युधि अतिनार इति धृतराष्ट्रस्यैव नामान्तरम् ॥

इदानीं परीक्षितः पुत्रस्य भीमसेनस्य वंशमाह— भीमसेनान्महेष्वासादिति ॥

भरतवंशपरम्परामुक्त्वा पुनः सिंहावलोकनन्यायेन भरतस्यैव पुण्यचरि(त)त्रमाह— गङ्गाद्वारं समासाद्येत्यादिना ॥

जाम्बूनदस्य शुद्धस्य कनकस्य महायशा इत्यत्र जाम्बूनदस्य जम्बूनदीसम्बन्धसमुत्पन्नस्य अत एव शुद्धस्य कनकस्य ॥

यस्य यूपाः शतव्यामा इत्यत्र परिणाहे वर्तुलतायां शतव्यामाः शतं विस्तृतबाहुद्वयान्तरितदेशप्रमाणानि येषां ते तथोक्ताः । 'व्यामो बाह्वोस्सकरयोस्ततयोस्तिर्यगन्तर'मित्यमरः । 'मारु' इत्यपभ्रंशभाषा ॥

सहस्रव्याममुद्विद्धा इत्यत्र सहस्रव्यामं यथा भवति तथा उद्विद्धाः ऊर्ध्वं विद्धाः उन्नता इत्यर्थः ॥

इति सम्भवे चत्वारिंशोऽध्यायः ।

॥ समाप्तं शाकुन्तलम् ॥

## ॥ एकचत्वारिंशोऽध्यायः ॥

इक्ष्वाकूणामन्यतम इत्यत्र रघूणामितिवत् कुरूणामितिवच्च इक्ष्वाकुवंशजातानामपि इक्ष्वाकुत्वम् ॥

शप्ता वै स्मो महानदि । अस्वयंकृतया बुध्द्या वसिष्ठेन महात्मनेत्यत्र महात्मना वसिष्ठेन अस्वयंकृतया केवलं स्वेनैव कृता न भवतीत्यस्वयंकृता तया हृदिस्थब्रह्मावेशबलेन कृतयेत्यर्थः । शप्ताः स इति योजना । अत एव 'ताञ्छशाप, वसिष्ठसंस्थः कमलोद्भवः प्रभु'रित्याहुः ॥

इति सम्भवे एकचत्वारिंशोऽध्यायः ।

## ॥ द्विचत्वारिंशोऽध्यायः ॥

हावभावसमन्वितैरित्यत्र हावाः आलम्बनाख्याः स्वाङ्गविलासाः । भावाः चन्द्रोदयादिकामोद्दीपनविभावाः ॥

इति सम्भवे द्विचत्वारिंशोऽध्यायः ।

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

अमीमांस्या कर्मयोनिरित्यत्र कर्मयोनिः कर्मणो योनिः कारणं अमीमांस्या, आगमः कुतस्त्वमागता कस्य पुत्रीत्याद्यागमनप्रकारश्च अमीमांस्य इति स्वपितृवचः स्मरन् पुत्रकिल्बिषं पुत्रवधरूपपापं नापृच्छदिति सम्बन्धः ॥

जीर्णस्तु मम वासोऽयमित्यत्र वासः भवद्गृहे आवासः ॥

आपवस्याभिशापेनेत्यत्र अप्सु भवः आपवः तस्य । यमुनाजलसम्भूतत्वादापव इति वसिष्ठस्य नाम । 'अब्धः सम्भूतो हिरण्यगर्भे' इति वचनात् आपवो ब्रह्मा च । उभयोः सङ्ग्रहायापवपदम् । अन्यथा वसिष्ठस्येत्यवक्ष्यत् । अत एव वसिष्ठे स्वपुत्रशतवधेऽपि कोपाभावेन शापायोगस्य भारत एव विस्तृतत्वात् 'वसिष्ठसंस्थः कमलोद्भवः प्रभु'रिति तात्पर्यमाहुः । तेषां जनयिता नान्य इति वदन्ती गङ्गायां मयि पुत्रस्य जनयिता त्वं वरुण इति च ध्वनयति। तस्मात् तव वरुणत्वात् मम गङ्गात्वात् ॥

जातं जातं मोक्षयिष्य इत्यत्र मानुषेषु जातं जातं पुत्रं नियोगात् वसूनामेव नियोगात् मोक्षयिष्ये मानुषदेहान्मोक्षयिष्ये । त्वत्कृते अयमष्टमः पुत्रः मया न मुच्यते मानुषदेहान्न मोचयिष्यते । न मुच्यते जले न निक्षिप्यते वा ॥

अयं तव सुत इत्यत्र तेषां वसूनां वीर्येण शौर्येण सम्भूतोऽयं अन्यान् जनान् अति अतिक्रान्तः भविष्यतीति योजना ॥

एष पर्यायवासस्थ इत्यत्र पर्यायेण क्रमेण वासः बृहस्पतिनिकटे परशुरामनिकटे च[1] आवासः तत्र तिष्ठतीति तथोक्तः ॥

इति सम्भवे त्रिचत्वारिंशोऽध्यायः ।

---

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

गां प्रजातेत्यत्र गां गोरूपसन्ततिं प्रजाता प्रसूतवती ॥

द्यौस्तदा तां तु दृष्ट्वेत्यत्र द्यौः द्युनामको वसुः ॥

---

[1] वा वासः.

हृत्वा गौस्सा तदेत्यत्र सा गौः शक्तितः कण्टकादिभिस्ताडनशक्तितः हृता, न तु स्वयमेव प्रयाता ॥

महाप्रभावो ब्रह्मर्षिरित्यत्र ब्रह्मणा आविष्टो ऋषिर्ब्रह्मर्षिः, अत एव महाप्रभावः ॥

प्रजा ह्यनृतवाक्येन हिंसन्मैनस्तथाऽऽप्नुयादित्यत्र प्रजाः हिंसन् एनः यथा आप्नुयात् तथा अनृतवाक्येन मा मां एनः आप्नुयात् तस्मादनृतं न वदामीति भावः ॥

न प्रजास्यतीत्यत्र न प्रजास्यति प्र(जाः)जां नाकाङ्क्षति । क्षीरस्यतीतिवच्छन्दोऽयमिति ज्ञातव्यम् ॥

इति सम्भवे चतुश्चत्वारिंशोऽध्यायः ।

॥ पञ्चचत्वारिंशोऽध्यायः ॥

कुरूणां पुटभेदन इत्यत्र पुटभेदने पत्तने । 'पत्तनं पुटभेदन' मित्यमरः ॥

समस्तैरभिगामिकैरित्यत्र अभिगामिकैः अभि स्वाभिमुख्येन गमनं सर्वेषां प्रापणं तत्सम्बन्धिभिरभिगामिकैः, सर्वान् जनान् स्ववशान् कुर्वद्भिरित्यर्थः । अभितः गामिकैः गमनशीलैः, सर्वत्र प्रसिद्धैरिति वा ॥

स समाः षोडशाष्टौ चेत्यत्र अग्र्येण तपसा कर्शितः सदा जपध्यानपरः सः वनगोचरः ऋषिवर्गः स्वसङ्कल्पानुसारेण स्वफलप्राप्त्यनुसारेण वा षोडशसमाः, ततः प्रागेव फललाभे अष्टौ समाः, तथा चतस्रः समाः, तावता फलाप्राप्तौ पुनरष्टौ च समाः, एवं फलानुसारेण अपराः दशद्वादशादिसमाश्च काञ्चिद्रतिं अन्नपानवनितादिविषयाभिलाषं अप्राप्नुवन् बभूव ॥

तथारूपस्तथाचार इत्यत्र तथा स्वपितृवत् रूपं यस्य स तथोक्तः । एवमुत्तरत्रापि ॥

स कदाचिन्मृगान्निघ्नन्नित्यत्र स शन्तनुः ॥

इति सम्भवे देवव्रतराज्याभिषेको नाम पंचचत्वारिंशोऽध्यायः ।

## ॥ षट्चत्वारिंशोऽध्यायः ॥

विधेयास्सर्वशत्रव इत्यत्र विधिर्नियोगः आज्ञा तद्योग्याः दासा इत्यर्थः। 'विधेयो विनयग्राही वचनेस्थित आश्रव' इत्यमरः ॥

अनुवृत्त्या स्मरन्नॄणामित्यत्र नॄणामनुवृत्त्या अनुकारेण कथञ्चित्तव विपत्तौ नः कुलं नास्तीति स्मरन् शोचामीति सम्बन्धः ॥

नान्यत्र शस्त्रात्ते पुत्रेत्यत्र शस्त्रादन्यत्र ते निधनं न विद्यते, शस्त्रात्तु जयपराजययोर्दैवाधीनत्वाद्युद्धे कदाचिन्मृतिः स्यादेव । अतः त्वयि शान्ते मृते सति कथं भवेत् वंशः कथं भवेदिति सम्बन्धः ॥

उच्चैश्श्रवसमागम्येत्यत्र दीर्घकर्णत्वादुच्चैःश्रवोनामानं दाशराजम् ॥

अपत्यं हीदमित्यत्र इदं पुत्रीरत्नं आर्यस्य उपरिचरवसोः अपत्यं हि ॥

दानादाने त्वयि स्थित इत्यत्र दानमदानं च दानादाने ॥

इदं वचनमादत्स्वेत्यत्र अस्य वचनस्य अन्यो वक्ता सम्प्रति नास्ति अस्य अन्यो वक्ता न जातः न जनिता न जनिष्यति । लुटो रूपमिदम्। समग्रश्लोकस्येयं योजना ॥

भीष्मोऽयमिति चाब्रुवन्नित्यत्र भीष्मः महासाहसिकः । 'भीष्मः साहसिको मत' इत्यमरमाला । 'अभीरं भीषणं भीष्मं भैरवं च भयावह'मिति हलः ॥

इति सम्भवे भीष्मब्रह्मचर्यव्रतं नाम षट्चत्वारिंशोऽध्यायः ।

---

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

चेदिराजसुतामित्यत्र चेदिविषयाधिपतिर्वसुचक्रवर्ती चेदिराजः ॥

ततः शान्तनव इत्यत्र शान्तनवः शन्तनुवीर्योत्पन्नः ॥

इति सम्भवे विचित्रवीर्याभिषेको नाम सप्तचत्वारिंशोऽध्यायः ।

---

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

सोद्वेगा इव तं दृष्ट्वेत्यत्र सोद्वेगाः स(अ)कुतूहलाः कन्याः अपाक्रामन्त चित्तं [1]परावृत्य नीतवत्यः ॥

[2]आमुञ्चतां च वर्माणीत्यत्र आमुञ्चतां बध्नतां 'न(ब)द्धं पिनद्धमामुक्त'-मिति हलः ॥

वासिता समये यत्त इत्यत्र वासिता नाम प्राप्तयौवना क्रीडायोग्या पशुस्त्री [3]वासितायाः समये वासितासमये ॥

अम्बामन्यस्य की(र्त)र्त्यन्तीमित्यत्र अन्यस्य भार्येति की(र्त)र्त्यन्तीमम्बां अनपेक्षमाण इति योग्यपदाध्याहारेण योजना । प्रत्यक्षफलः प्रत्यक्षं फलं विपरीतफलं यस्येति कामस्य विशेषणम् ॥

अनन्तसेनो भगवानित्यत्र अनन्ता अपरिमिता सेना पिशाचादिसेना यस्य सोऽनन्तसेनः । 'कुमारो नीललोहित' इति वचनात् कुत्सितो मारो येनेति व्युत्पत्त्या च कुमारः शिवः ॥

एषा पुष्करिणीत्यत्र पुष्करिणी कमलवती ॥

इति सम्भवे विचित्रवीर्यविवाहो नाम अष्टचत्वारिंशोऽध्यायः ।

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥

यज्ञसेनाभिधावेत्यत्र अभिधाव अभ्यागच्छ । तेन भीष्मेण ॥

यत्र नाथोऽवसीदतीत्यत्र 'नाथृ याञ्चाया' मिति धातोः नाथः याचकः ॥

त्वत्प्रसादादित्यत्र त्वत्प्रसादात् युष्मत्प्रसादात् मा धर्मो मा पराजय इति मयोक्ता इति पूर्वेणान्वयः ॥

क्षत्रियाणां हि बलं धर्मोऽनुवर्तत इत्यत्र बलं स्वबलं अनुवर्तते अनुसृत्य वर्तत इति यत् सः क्षत्रियाणां धर्मः ॥

न हि भीष्मादहं धर्ममित्यत्र धर्मं अभयदानाख्यं धर्मम् ॥

---

[1]परावृत्तमकुर्वत. [2]आमुञ्च्य नानावर्माणीत्यत्र आमुञ्च्य आबध्य. [3]तस्याः.

गङ्गाद्वारे विभजनमित्यत्र विभजनं नाम स्वकीयं वस्तु अन्यस्मै दत्त्वा तस्मात् स्वापेक्षितवस्तुस्वीकारः । प्रकृते तु तव स्त्रीत्वं स्वयमादाय स्वकीयं पुंस्त्वं तुभ्यं दास्यामीत्येतदेव विभजनमिति भावः ॥

इति सम्भवे लिंगविनिमयो नाम एकोनपंचाशोऽध्यायः ।

## ॥ एकपञ्चाशोऽध्यायः ॥

पाणौ गृहीतः पुत्रेतीत्यत्र पाणौ गृहीतः धारापूर्वकं गृहीतः; दत्त-पुत्रोऽपि पुन्नाम्नो नरकात्त्राता, किमौरस इति वेदे कथितं धर्मं मनसि संस्थाप्येति योजना ॥

कनीयस्तात नैवेत्यत्र हे कनीयस्तात सूक्ष्मपितः ॥

तमो दीर्घं प्रवेक्ष्यसीत्यत्र तमः नयनाभावात् अदर्शनाख्यं तमः प्रवेक्ष्यसीति सम्बन्धः ॥

स्वां तु धात्रेयिकां तस्मै इत्यत्र स्तनदायिनी धात्री, तस्याः पुत्री धात्रेयिका ताम् ॥

इति सम्भवे अंगोत्पत्तिर्नाम एकपंचाशोऽध्यायः ।

## ॥ त्रिपञ्चाशोऽध्यायः ॥

आजगाम तरीं तातेत्यत्र तरीं नावम् ॥

स तु पित्रायतो गत इत्यत्र पित्रायतः पितरि आयतः पित्रधीन इत्यर्थः ॥

कृताञ्जलिपुटोऽह्वपदित्यत्र वन्द्य मातुः पादौ प्रवन्द्य अह्वपत् अह्वप्यत् ॥

अर्थमर्थानुबन्धं चेत्यत्र अर्थं द्रव्यं, अर्थानुबन्धं अर्थकारणीभूतवाणिज्याद्युपायम् ॥

इति सम्भवे त्रिपंचाशोऽध्यायः ।

---

[1]कनिष्ठपितृव्य.

## ॥ चतुःपञ्चाशोऽध्यायः ॥

कद्रूणि चास्य श्मश्रूणीत्यत्र 'क(द्रूः)द्रुः कनकपिङ्गले'त्यमरमाला। कद्रूणि कनकपिङ्गलानि ॥

सम्बभूव तयेत्यत्र सम्बभूव सङ्गतो बभूव ॥

त्वं भुजिष्या भविष्यसीत्यत्र 'दासी भुजिष्या कथिता स्वामिनः पुत्रजन्मतः। अदासी च भवत्येषा रक्ष्या चैव विशेषतः' इति वचनस्य या प्राग्दासी सैव स्वामिनः सकाशात्पुत्रजन्मतः भुजिष्या कथिता, एषा पुनरदासी दासी न भवतीत्यदासी विशेषतो रक्ष्या च भवतीति योऽर्थः तस्य पात्रीभविष्यसीत्यर्थः ॥

गन्धवत्या योजनगन्धिन्या(:) सत्यवत्या(:) ॥

इति सम्भवे चतुःपंचाशोऽध्यायः ।

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

दस्यवो लोप्त्रहारिण इत्यत्र लोप्त्रं चोरैरपहृतं द्रव्यम् । 'चोरैरपहृतं द्रव्यं लोप्त्रमित्यभिधीयत' इति हलः ॥

स वध्यघातैरित्यत्र आज्ञप्तः छिद्यतामिति राज्ञा आज्ञप्तः वध्यघातैः वध्यान् वधयोग्यान् अपराधानुसारिशिरश्छेदादिशिक्षायोग्यान् घातयन्ति शिक्षयन्तीति वध्यघाताः चोरशिक्षाधिकारिणो यामिकाः तैः शूले प्रोत इति योजना। काचित्पतिव्रता स्वपतिं वेश्यागृहं प्रति शिरसि ऊढ्वा पतिप्रीत्यै नयन्ती स्वपतिपादेन शूलस्थमाण्डव्यस्य स्पर्शे सति तापमकरोत्किल । तेन तापेन दुःखितः स माण्डव्यः सूर्योदये सति तव पतिर्नश्यत्विति शापमददात्किल। सा च पतिव्रता तादृशः सूर्योदय एव माऽस्त्विति प्रतिशापमकरोत् । तदा कश्चित्कालं सूर्याभावे सति सर्वे ब्राह्मणाः तं माण्डव्यं तां पतिव्रतां च प्रसाद्य शापद्वयमपि मोचयाञ्चक्रुरिति पौराणिकी कथा। तां सूचयितुमाह—काचित्पतिव्रतेत्यादिना ॥

तच्छ्रुत्वा रक्षिण इत्यत्र तत् पतिव्रतामाण्डव्यसम्भाषणं, पक्षिरूपेणागतऋषिसम्भाषणं च ॥

इति सम्भवे माण्डव्यशापोपाख्यानं नाम पंचपंचाशोऽध्यायः ।

---

॥ षट्पञ्चाशोऽध्यायः ॥

करणत्वाच्च विदुर इत्यत्र करणत्वात् शूद्रयोनिजत्वात् । 'करणः शूद्रयोनिज' इति वागुरिः ॥

इति सम्भवे षट्पंचाशोऽध्यायः ।

---

॥ सप्तपञ्चाशोऽध्यायः ॥

पैतृष्वसेयाय ततः सोऽनपत्याय वीर्यवान् । अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वीर्यवान् ॥ अग्रजातां तु तां कन्यामग्रानुग्रहकाङ्क्षया। अददात्कुन्तिभोजाय शूरो गोपतये सुतामित्यत्र वीर्यवान् स शूरः अनपत्याय पैतृष्वसेयाय गोपतये भूपतये कुन्तिभोजाय स्वस्यापत्यस्य मध्ये अग्रं प्रथमोत्पन्नमपत्यं अग्रे अपत्योत्पत्तेः पूर्वं प्रतिज्ञाय तुभ्यं दास्यामीति प्रतिज्ञाय पुनर्वीर्यवान् स शूरः अग्रानुग्रहकाङ्क्षया अग्रे उक्तस्य वाक्यस्य अनुग्रहः अनुकूलतया ग्रहणं तस्य काङ्क्षया अग्रजातां तां कन्यां अददात् कुन्तिभोजायैव अददादित्यन्वयः । पुत्रदानप्रतिज्ञायाः यथाप्रतिज्ञं दानस्य चान्यैर्दुष्करत्वात् उभयत्रापि वीर्यवानिति विशेषणम् ॥

अभिसाराभिसंयुक्तमित्यत्र येषु देवेषु स्वस्याः मनः तेषां सर्वेषां 'सृ गतावि'ति धातोः अभितः सारः सरणं आगमनं तेनाभिसंयुक्तम् ॥

तस्य कौतूहलादित्यत्र तस्य मन्त्रस्य कौतूहलात् सामर्थ्य(शो)साधनोत्कण्ठ्यात् । सत्येति पाठे सत्यं सामर्थ्यम् ॥

आदित्ये कुण्डले बिभ्रदित्यत्र आदित्ये आदित्यस्य मम योग्ये ॥

आमुक्तकवचः श्रीमानित्यत्र आमुक्तकवचः बद्धकवचः । 'न(ब)द्धं पिनद्धमामुक्त'मिति हलः ॥

कर्णनामाभिसंज्ञितामित्यत्र कर्णनाम्ना कर्णस्येयं मञ्जूषेति मञ्जूषोपरि लिखितनाम्ना अभिसंज्ञितां अङ्किताम् ॥

राधाभर्ता महायशा इत्यत्र राधाभर्ता अधिरथः ॥

समाहृतोऽयमित्यत्र वसुना द्रव्येण सह ॥

आ पृष्ठतापा(दा)च्चादित्यमित्यत्र आ पृष्ठतापात् पृष्ठतापपर्यन्तं पूर्वत उदितस्य सूर्यस्य पूर्वाभिमुखात्स्वस्मात्पृष्ठतस्तापस्तपनं यावता भवति तावत्कालपर्यन्तं अपराह्णकालपर्यन्तमिति यावत् ॥

प्रियमस्तीति ब्राह्मणमित्यत्र प्रियं वस्तुनि मम प्रीतिरस्तीति कृत्वेत्यर्थः ॥

कर्णपाल्यौ च द्वे छित्त्वेत्यत्र कर्णच्छिद्रानन्तरं कुण्डलादिधारणाय या कर्णाधोभागे लम्बमाना नाडी सा कर्णपालीत्युच्यते । कर्णद्वयनाड्यपेक्षया कर्णपाल्याविति द्विवचनम् । ते द्वे अपि च्छित्त्वा प्रायच्छदिति सम्बन्धः । पुनस्तदैव तयोरभिनवरक्तार्द्रत्वचोर्योगे कर्णयोरपि न न्यूनता जातेति ज्ञेयम् ॥

इति सम्भवे कर्णोत्पत्तिर्नाम सप्तपंचाशोऽध्यायः ।

॥ अष्टपञ्चाशोऽध्यायः ॥

मद्राणां पुटभेदनमित्यत्र पुटभेदनं पट्टणम् । 'पट्टणं पुटभेदन-'मित्यमरः ॥

वैरी सर्वकुरुक्षितामित्यत्र कुरुक्षितां कुरुभूरक्षितॄणाम् । महीक्षिदितिवत् कुरुक्षिदित्यपि पदम् ॥

राजगृहे हत इत्यत्र राजगृहे जरासन्धनगरे ॥

बुद्ध्यन्तरगता अपीत्यत्र उन्मादादिवशात् अन्यबुद्धिं गता बुद्ध्यन्तरगताः ॥

न विधिं ग्रसते प्रज्ञेत्यत्र विधिं दैवं स्वफाललेखनकर्तारं ब्रह्माणं वा । महता प्रयत्नेनापि परीक्षिता विधेरनतिक्रमात् । प्रज्ञां विधिर्ग्रसते अत्येति । अस्यापीदमेवोदाहरणम् ॥

अपत्रपाभिभूतत्वादित्यत्र अपत्रपा लज्जा ॥

इति सम्भवे पाण्डुशापप्राप्तिर्नाम अष्टपंचाशोऽध्यायः ।

## ॥ एकोनषष्टितमोऽध्यायः ॥

सद्वृत्तिमनुवर्तिष्ये तामहं पितुरव्ययामित्यत्र पितुर्ज्येष्ठपितुर्भीष्मस्य उत्पादकपितुर्व्यासस्य वा सद्वृत्तिमनुवर्तिष्य इति योजना ॥

तस्मादेकाहमेकोऽहमित्यत्र तस्माद्बन्धस्य व्यसनत्वात् एकः एकाकी अहं एकाहं एकस्य एकाकिनः संन्यासिनः योग्यं कर्म यथा भवति तथा मुण्डः मुण्डितमूर्धजः, मुनिर्भूत्वेति पाठे स्पष्टोऽर्थः । संन्यासी सन् भिक्षां चरन् इमां महीं सञ्चरिष्यामि । अथवा एकः एकाकी सत्योश्च भार्ययोः तत्सङ्गरहित इत्यर्थः । मुनिः वानप्रस्थमुनिस्सन् अस्मिन्नेव तपोवने चरिष्यामीति योजना ॥

अल्पमल्पमथो भोज्यमित्यत्र पूर्वलोभात् पूर्वदिने भुक्तपरमान्नादौ लोभात् परदिने जातुचिदपि न, तन्नाकाङ्क्षेदित्यर्थः ॥

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षत इत्यत्र एकं बाहुं दक्षबाहुं चन्दनेन, उपलक्षणं चैतत् । चन्दनादिषोडशोपचारैः हरिं सम्पूज्य तक्षतः तक्षे (सार्वविभक्तिकस्तसिः) संसारश्रमाल्पीकरणे पापनिर्भर्त्सने वा 'तक्षू तनूकरण-निर्भर्त्सनयो'रिति धातुः । वास्य स्थापयित्वा एकं बाहुं वामबाहुं उक्षतः उक्षणे भूप्रोक्षणलेपनादौ वास्य स्थापयित्वा चरिष्यामि । अथवा एकं बाहुं दक्षबाहु-स्थानीयां ज्येष्ठपत्नीं कुन्तीं चन्दनेन तक्षतः तक्षणे चन्दनकाष्ठस्याल्पीकरणे हरि-पूजासाधनगन्धादिकरण इति यावत् । वास्य स्थापयित्वा एकं बाहुं वामबाहु-स्थानीयां सूक्ष्मपत्नीं माद्रीं उक्षतः उक्षणे भूप्रोक्षणलेपननैवेद्यादिकरणे वास्य स्थापयित्वा चरिष्यामीति पूर्वेणान्वयः । यत्याश्रमे पूर्वयोजना । वानप्रस्थाश्रमे द्वितीययोजना । नह्यैकमिति पाठे 'नह बन्धन' इति धातोः नह्य बद्ध्वा दृढ-तया स्थापयित्वेत्यर्थः ॥

याः काश्चिज्जीवता शक्याः कर्तुं नित्याक्षताः क्रियाः । तास्सर्वा-स्समतिक्रम्य निमेषादिष्ववस्थितः ॥ न जिजीविषुवत्किञ्चिन्न मुमूर्षुवदा-चरन्नित्यत्र जीवता कर्तुं शक्याः नित्याक्षताः नित्यपक्षताः अङ्गवैकल्यादिक्षय-रहिताः क्रियाः यज्ञभूरक्षणादिक्रियाः समतिक्रम्य निमेषादिषु सर्वथा त्यक्तुमश-

कयचक्षुरुन्मेषणश्वासधारणकन्दमूलफलाहारादिष्ववस्थितः सन्नित्यर्थः । जिजीविषुवत् जीवितुमिच्छुवत् किञ्चिदङ्गपोषणादिकर्म नाचरन् मुमूर्षुवत् अत्यायासे सति मर्तुमिच्छुवत् बलादग्निप्रवेशादिकर्म नाचरन्नित्यर्थः ॥

**सुनिर्णिक्तात्मकिल्बिषः** सुष्ठु प्रक्षालितात्मपापः । 'निर्णिक्तं शोधितं मृष्ट'मित्यमरः ॥

**सर्ववागुराः** समस्तमृगबन्धनजालानि । 'वागुरा मृगबन्धिनी'त्यमरः । व्यतीतः अतिक्रम्य वर्तमानस्सन् मातरिश्वनः सधर्मा वायुवत्सञ्चरणशील इत्यर्थः ॥

**नाहं चाचरिते मार्गे** इत्यत्र आचरिते दीनैराचरिते मार्गे याचनादिमार्गे ॥

**आवाभ्यां धर्मपत्नीभ्यामित्यत्र** अस्य तपसः अर्थे फलं त्वमेव स्वर्गे भविता 'भू प्राप्ता'विति धातोः प्राप्ता भविष्यसीत्यर्थः । भर्तृलोकं भर्तुर्लोको यस्मात्तद्भर्तृलोकं तप इति सम्बन्धः ॥

(**पक्वापक्वेन** पक्वं फलादि, अपक्वं कन्दादि ॥)

**अनुयात्राणि** अनु यात्रा येषां तानि योधादिकटकानि ॥

**अथ पारशवीं कन्यामित्यत्र** परत्र कुलस्त्रियोऽन्यत्र शवसे सुखाय उत्पन्ना पारशवी ताम् ॥

इति सम्भवे एकोनषष्टितमोऽध्यायः ।

---

## ॥ षष्टितमोऽध्यायः ॥

**न पितॄणां च मुक्तोऽस्मि तच्च तेभ्यो विशिष्यत** इत्यत्र इतरेषां देवत्रयाणां वर्षिमनुष्याणां ऋणभूतयज्ञतपोयुक्तस्वाध्यायानृशंस्यानां नाशे आत्मा स्वयमेव यज्ञाकरणात् स्वाध्यायापठनात् नृशंसत्वाच्च नश्यति । देवादयस्तु पुरुषान्तरकृतयज्ञादिना जीवन्त्येव । पितॄणामृणाख्यप्रजानाशे, देहनाशे स्वदेहनाशे सति, देहनाशात्पूर्वं स्वस्यैव पिण्डादेर्दातुः सद्भावात् देहनाश इत्युक्तम् । पितॄणां स्वपितृपितामहादीनां पिण्डदातुः स्वस्याभावात् अन्येषामेतत्पिण्डदाने

अप्रसक्तेश्च पितृनाशः । एवं पितॄणां पिण्डदानाख्यऋणनाशात् सप्रजः स्वयं च नाशमृच्छति । स्वपितृवन्नष्टस्य स्वस्य पिण्डदातुरभावादेव स्वनाशः । प्रजायास्तु अनुत्पत्त्याख्यमूलनाशादेव नाश इति त्रिविधो नाशो भवति यस्मात्, तस्मात् तत् पितॄणामृणमेव तेषां देवादीनां ऋणत्रयाद्विशिष्यते । ईदृशात्तु पितॄणामृणादहं न मुक्तोऽस्मीति सम्बन्धः ॥

अनुनीय तु ते सम्यक् महाब्राह्मणसंसदि । ब्राह्मणं गुणवन्तं वै चिन्तयामास धर्मविदित्यत्र धर्मवित् पाण्डुः महाब्राह्मणसंसदि ते पत्न्यौ अनुनीय श्रेष्ठात्पुत्रोत्पत्तिमनुनीय ब्राह्मणमुखेनापि आपदि श्रेष्ठात् प्रजोत्पत्तिं धर्मं वाचितवानिति सूचनाय महाब्राह्मणसंसदीत्युक्तम् । स्वचिकीर्षितस्य ब्राह्मणैरप्यनुकूलितत्वात् ब्राह्मणं जात्येकवचनमिदम् । ब्राह्मणकुलमित्यर्थः । गुणवन्तं दयादिगुणोपेतं देवोत्पत्तिमजानन् ब्राह्मणं चिन्तयामासेति योजना ॥

षडेव बन्धुदायादाः पुत्राः सद्धर्मचारिणः । षडेवाबन्धुदायादा निर्दिष्टा(ष्टां)स्ताञ्छृणु प्रिये ॥ स्वयञ्जातः क्षेत्रिकश्च परिक्रीतश्च यः सुतः । पौनर्भवेयः कानीनः स्वैरिण्यां यश्च जायते ॥ दत्तः क्रीतो गर्हित(क)श्च उपयच्छेत्स्वयं च यः । सहोढाजातरेताश्च हीनयोनिधृतश्च य इत्यत्र बन्धुदायादाः दायमदन्ति बन्धुत्वयोग्याः (च) ये सत्पुत्राः ते बन्धुदायादाः; ते च षट् । दायमदन्ति, बन्धुत्वयोग्या न भवन्ति ये दुष्पुत्राः ते अबन्धुदायादाः; ते च षट् । एवं द्वादशदायादान् क्रममनपेक्ष्य सङ्कलय्याह । स्वयञ्जातः स्वपितुरेव तद्धर्मपत्न्यां जातः स्वयञ्जातः । क्षेत्रिकः स्वपितुः क्षेत्रे धर्मपत्न्यामापदि स्वपतेराज्ञया श्रेष्ठाद्देवाद्वा जातः क्षेत्रिकः । परिक्रीतः मातृपितृस्वस्रादीनामभावे तत्परिजनैर्यैः कैश्चित् क्रयं गृहीत्वा दत्तः परिक्रीतः । दत्तः विधिपूर्वकं स्वपुत्रतया स्वीकृतो दत्तपुत्रः । क्रीतः शुनश्शेफादिवत् स्वपित्रैव क्रयं गृहीत्वा दत्तः क्रीतः । यः स्वयमेव बालः रक्षकस्वजनानामभावादनाथो भूत्वा मां पुत्रीकृत्य त्वमेव रक्षेत्यागतः स एक इति षट् बन्धुदायादाः । पौनर्भवेयः पुनर्भर्तृमरणानन्तरं रण्डायां तत्पत्न्यां यो भवः जन्म तत्सम्बन्धी गोलकः पौनर्भवेयः । कानीनः कन्यकायां जातः । भर्तरि सत्येव जारिण्यां तत्पत्न्यां यो जायते स

कुण्ड एकः । गर्हितः स्वोदरात्स्वपत्न्यां जातोपि दुष्कर्मणा जातिभ्रष्टः गर्हितः[1]। सहोढाजातरेताः सहोढासु शतसंख्यासु कन्यासु तदैव विवाहमण्टपदाहे सति इतस्ततो गतासु सतीषु पुनस्तैस्तैः पतिभिर्व्यत्यासेन गृहीतासु जातं रेतः यस्योत्पादकं स एकः । हीनयोनिधृतः हीनयोनिषु शूद्रादियोनिषु जातः एक इति षट् अबन्धुदायादा इति विवेकः ॥

पूर्वपूर्वमसम्भावमित्यत्र न विद्यते सम्भावः सम्भावना यस्य तमसम्भावम् । पूर्वपूर्वं असम्भावं मत्वा लिप्सेत अपरं लिप्सेत; मुख्यालाभे अमुख्यं वा पुत्रमिच्छेतेत्यर्थः ॥

इति सम्भवे कुन्तीवाक्यं नाम षष्टितमोऽध्यायः ।

---

## ॥ एकषष्टितमोऽध्यायः ॥

इदं वचनमुत्तममित्यत्र वक्तुं योग्यं वचनम् ॥

अनावृताः किल पुरेत्यत्र अनावृताः आवरणं निवारणं तद्वर्जिताः यथेष्टचारिण्य इति यावत् ॥

न निमित्तं कृतं शुभ इत्यत्र निमित्तं दोषनिमित्तम् । नास्त्यनित्यमिति पाठे अनित्यं नास्ति, किन्तु नित्यमेवास्तीत्यर्थः ॥

पूर्वमेव कृतः स्त्रिय इत्यत्र स्त्रिया[2] निमित्तात् पित्र्यादृणादनिर्मुक्तः कृतः । स्त्रीपरिग्रहाभावात् ऋणं न मुक्तमिति भावः ॥

समक्षं मातरं पितुरित्यत्र पितुरुद्दालकस्य समक्षम् ॥

प्राणदानेन ते ब्रह्मन्नित्यत्र ते शापाकरणात्प्राणदानेन ॥

स्वे स्वे वर्णे तथा प्रजाः इत्यत्र गावः यथा स्वे स्वे वर्णे स्वस्वजातौ अनियमेन स्थिताः मद्दिपादौ न गच्छन्ति । गोषु यथेच्छं सञ्चरन्तीत्यर्थः । कुटुम्बेषु न प्रापद्यन्त नियमं न प्रापद्यन्त ॥

पतिं प्रति व्युचरन्त्याः विरुद्धतया चरन्त्याः पत्यन्तरपरिग्रहं कुर्वन्त्या इत्यर्थः ॥

---

[1]गर्दितकः. [2]स्त्रियः स्त्रिया निमित्तात्.

अद्याप्यनुविधीयन्त इत्यत्र अनु स्वेच्छानुसारेण विधीयन्ते भर्तारः ॥

अधर्मः (स) सुमहानित्यत्र प्रसाद्यः प्रसादनयोग्यो भर्ता स्त्रियं प्रसादयत इति यत् एष स्त्रीणामधर्मः ॥ (स्त्री मर्यादा न ॥)

इति सम्भवे स्त्रीमर्यादा नाम एकषष्टितमोऽध्यायः ।

---

## ॥ द्विषष्टितमोऽध्यायः ॥

ऐन्द्रे चन्द्रमसा युक्त इत्यत्र ऐन्द्रे ज्येष्ठानक्षत्रे ॥

ततो जज्ञे मांसपेशी साष्ठीला जनमेजयेत्यत्र मांसपेशी चतुरश्राकारमांसपिण्डिका । 'चतुरश्रा स्मृता पेशी वृत्तः पिण्डो घनः स्मृत' इति निघण्टुः। अष्ठील्या जरायुणा सहितः साष्ठीला गर्भावरकमांसचीलविशेषो जरायुः ॥

इति सम्भवे धर्मपुत्रादिसम्भवो नाम द्विषष्टितमोऽध्यायः ।

---

## ॥ पञ्चषष्टितमोऽध्यायः ॥

सूर्येण सह धर्मात्मेत्यत्र सूर्याभिमुख्येन तपः कुर्वन् सूर्ये प्राचीं दिशं गते स्वयं प्राङ्मुखोऽभवत् । अपरस्यां दिशि परिवर्तमाने सति स्वयमपि पर्यवर्तत । पश्चिमाभिमुखोऽभूदिति भावः ॥

उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा । जातस्तु फाल्गुने मासि तेनासौ फल्गुनः स्मृत इत्यत्र फाल्गुने मासि उत्तराभ्यां द्वितारात्मकोत्तरानक्षत्रताराभ्यां पूर्वाभ्यां ततः पूर्वं विद्यमानाभ्यां फल्गुनीभ्यां फल्गुनीशब्दवाच्यद्वितारात्मकपूर्वानक्षत्रताराभ्यां च योगे सति दिवा अह्नि मध्याह्नपर्यन्तं पूर्वानक्षत्रयोगे अपराह्णप्रारम्भसमये च उत्तरानक्षत्रयोगे सति तदुभयसन्धौ फाल्गुनमासे पौर्णमास्यां फल्गुनो जात इत्यर्थः ॥

महान् पितामह इत्यत्र पितामहः शन्तनुः । रजसा रक्तेन ॥

इति सम्भवे अर्जुनोत्पत्तिर्नाम पंचषष्टितमोऽध्यायः ।

---

## ॥ षट्षष्टितमोऽध्यायः ॥

मम जातो वनस्थाया इत्यत्र वनस्थाया मम अवरत्वात् दुर्वाससो वर-रहितत्वात् कथञ्चन विगुणोऽपि सन्तानो मे जातो नास्तीति योजना ॥

यदि त्वपत्यसन्तानमित्यत्र अपत्यसन्तानं पुमपत्यसन्तानं, अपत्यस्य सम्यग्विस्तारं वा ॥

सिंहक्षीबा मनुष्येन्द्रा इत्यत्र सिंहवत् क्षीबाः मत्ताः । 'मत्ते शौण्डोत्कटक्षीबा' इत्यमरः ॥

इति सम्भवे षट्षष्टितमोऽध्यायः ।

## ॥ अष्टषष्टितमोऽध्यायः ॥

धन्या त्वमसि बाह्लीके मत्सभाग्यतरा भुवीत्यत्र हे बाह्लीके बाह्लीक-विषयजाते । मद्रदेशस्य बाह्लीकविषय इत्यपि नाम । मत् मत्तः त्वं सभाग्यतरा असीति योजना ॥

हा राजन् कस्य नौ हित्वेत्यत्र कस्य हेतोरित्यर्थः ॥

बान्धवानामजातत्वादित्यत्र जाता न भवन्तीत्यजाताः तेषां भावात् अजातत्वात् बान्धवानां धार्तराष्ट्रादीनामजातत्वात् तेषामप्रियत्वादिति यावत् ॥

कर्तव्यं न प्रसीदतामित्यत्र प्रकर्षेण सीदतां क्लेशमनुभवतां अस्माकं कर्तव्यं न न दृश्यते । नः कर्तव्यमिति पाठे कर्तव्यं प्रति भवान् प्रसीदता-मिति वा ॥

युवाभ्यां दुष्करं चैतदित्यत्र एतद्भर्त्रा सह मरणं युवाभ्यां दुष्करं कर्तु-मयोग्यं द्विजपुङ्गवा वदन्ति ॥

भर्तारं निस्तरेच्छुभेत्यत्र निस्तरेत् निस्तारयेत् । अन्तर्णीतो णिच् ॥

कुन्ती माता त्वहं धात्री युवाऽऽभ्यां च पिता मृतं इत्यत्र युवा भवतां पिता आभ्यां आवाभ्यां निमित्ताभ्यां मृतः । कुन्ती व्यापारान्तरा-सक्ता, अहं तु सङ्गानुकूला इति हेतोरावाभ्यां मृत इति भावः ॥

पाण्डोरवभृथं कृत्वेत्यत्र अवभृथं पितृमेधानन्तरं माङ्गलिकस्नानम् ॥

प्रदायोपनिधिं राजेत्यत्र उपनिधिं निक्षेपद्रव्यमिव प्रदाय । 'निक्षेपः स्यादुपनिधि'रिति हलः ॥

शुकः परमधर्मज्ञ इत्यत्र शुकः प्रागुक्तः शर्य्यातेः[1] पुत्रः शुको नाम राजर्षिः ॥

ततो मन्त्रमकुर्वन्त ते समेत्य तपस्विन इत्यत्र मन्त्रमकुर्वन्तेति वचनात् 'तस्मात्कृत्यं परीक्षध्वमिति ह्योवाच धर्मवि'दिति वचनाच माद्रीपाण्डुदेहौ विना पाण्डवानेव गृहीत्वा हस्तिनपुरं प्रत्यस्माभिर्गते सति दुर्योधनादयः 'आहुः केचिन्न कस्यैते कस्यैत इति चापरे । यदा चिरं मृतः पाण्डुः कथं तस्येति चापर' इति अनुक्रमणिकाध्याये प्रागुक्तप्रकारेण सर्वथा पाण्डवानपहसिष्यन्ति । अतस्तयोरुभयोरपि शरीरस्थानीये अभिनवास्थिनी सहैव सङ्गृह्य वयं च सर्वे पाण्डवैः सहैव गत्वा अधिसभं ते अस्थिनी सर्वेषां प्रदर्शयिष्याम[2] इत्येको मन्त्रः । तथा यद्यपि शतशृङ्गपर्वते पाण्डोर्माद्र्याश्च शास्त्रोक्तविधिना सङ्क्षेपतः सर्वमप्यौर्ध्व(दे)दैहिकं कर्म कृतम् । तथापि महाराजोचितसर्वसम्भ्रमैः सह दम्पत्योरुभयोरप्यौर्ध्व(दे)दैहिकं कर्म भीष्मधृतराष्ट्रविदुरदुर्योधनादीनां बन्धूनां सकलपौरजनानां च समक्षमपि कारयितव्यम् । अस्थ्यभावे च औदासीन्यं कुर्युः । अतोपि द्वयोरस्थिनी सहैव नयाम इति च मन्त्रमकुर्वन्तेति योजना । तस्मात् 'पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारये'त्यादिना वक्ष्यमाणा पुनः संस्कारकथा, 'शरीरे चैव तापसा' इति 'इमे तयोः शरीरे द्वे' इति स्थलद्वयेऽप्युक्तशरीरे च नानुपपन्ने । अस्थ्नामपि शरीरैकदेशत्वेन शरीरत्वात् 'अस्थीनि तीरे गङ्गायां गाङ्गेनाप्युदकेन च । प्लावयित्वे'त्यादिना उपरि मूल एव बहुशः अस्थ्नां वक्ष्यमाणत्वाच्च उभयत्रापि शरीरपदेन तयोरस्थीन्येवोच्यन्ते ॥

तमकूजमिवाज्ञायेत्यत्र कूजः कूजनं ध्वनिः तद्रहितं स्तम्भमिव स्थितमित्यर्थः ॥

इति सम्भवे पाण्डवनगरप्रवेशो नाम अष्टषष्टितमोऽध्यायः ।

---

[1] सुतः. [2] प्रदर्शयामः.

## ॥ एकोनसप्ततितमोऽध्यायः ॥

ऋषीणां सत्यसङ्कल्पत्वात् पाण्डोः पुनरपि प्रेतकर्मादिकं कार्यमिति धृतराष्ट्रस्यैव स्वप्नोऽभूदित्याह— श्राद्धं दास्यामि पाण्डोस्तु स्वप्ने दर्शितवान् हि मामिति ॥

पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय । राजवद्राजसिंहस्य माद्र्याश्चैव विशेषत इति वचनात्, 'आच्छन्नः स तु वासोभिः जीवन्निव नरर्षभः । शुशुभे पुरुषव्याघ्रो महार्हशयनोचित' इति वचनाच्च, पुनर्भीष्मादयः सर्वे नागरिकाः केवलमस्थामेव राजयोग्यविभवायोगात् द्रष्टृनयनकौतुकजननायोगाच्च माद्रीपाण्ड्वोरुभयोः नवरत्नखचिते द्वे सौवर्णप्रतिमे [1]अस्थीनि च शिबिकोपरि संस्थाप्य गन्धपुष्पादिभिरलङ्कृत्य अस्था सह नीत्वा प्रतिमे विप्राणां दानं दत्त्वा अस्थां पलाशविधिना पुनर्दाहमकुर्वन् इत्यपि कथा कथितप्राया । अतो न कश्चित्क्षुद्रोपद्रवः ॥

कृत्वा नाथान्परोऽनाथान् क यास्यति नराधिप इत्यत्र अनाथानस्मान् नाथान् याचकान् कृत्वा, 'ना(थृ)थृ याच्ञाया' मिति धातुः । क यास्यतीति सम्बन्धः ॥

ततस्तस्य शरीरं तदित्यत्र शरीरं शरीरमिव लुप्तोपमा; शरीरं शरीरस्थानीयान्यस्थीनि वा ॥

तथा तुङ्गरसेन चेत्यत्र तुङ्गरसो नाम नानापरिमलैः संस्कृततैलविशेषः ॥

हा हा पुत्रेति कौसल्येत्यत्र कौसल्या कोसलविषयजाता काशिराजसुता पाण्डोर्माता अम्बालिका ॥

इति सम्भवे एकोनसप्ततितमोऽध्यायः ।

## ॥ एकसप्ततितमोऽध्यायः ॥

हर्षाद्ध्येतान् क्रीडमानान् गृह्य काकनिलीयने । शिरस्सु च निगृह्यैतान् योधयामास पाण्डव इत्यत्र पाण्डवो भीमः काकनिलीयने शिखायां,

[1] अस्थिनी.

'शिखा काकनिलीयन'मिति निघण्टुः । गृह्य निगृह्य, तत्पाते सति शिरःसु च निगृह्य क्रीडमानानेतान् दुर्योधनादीन् योधयामासेत्यर्थः ॥

कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरमित्यत्र उत्तरं प्रत्युत्तरमात्रं चक्रुः; न तु प्रतिक्रियामित्यर्थः ॥

इति सम्भवे एकसप्ततितमोऽध्यायः ।

---

## ॥ द्विसप्ततितमोऽध्यायः ॥

सशेपत्वान्न सम्प्राप्तो जले शूलानि पाण्डव इत्यत्र सशेपत्वात् शूलप्रोतजलादवशिष्टजलसहितत्वादित्यर्थः ॥

ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् । हतं सर्पविषेणैव स्थावरं जङ्गमेन तु इत्यत्र जङ्गमेन सर्पविषेण स्थावरं तत् दुर्योधनेन प्राक् भोज्ये दत्तं कालकूटकं विषं हतमिति योजना । कण्टकेनैव कण्टकमितिवत् स्वान्तस्थितकालकूटविषं सर्पविषेण सह वहिश्चकार । अतो भीमस्य दु(र्म)र्जरदेहत्वं निर्जराधीश्वरत्वं च किं वर्णनीयमिति भावः ॥

अहन्नरो वै नागेन्द्रेत्यत्र अहन् हिंसितवान् ॥

आर्यकौतुकदृष्टस्स प्रयातस्त्वार्यकेण तु । ततो दृष्टश्च तेनापि परिष्वक्तश्च पाण्डव इत्यत्र 'आर्यकश्चार्द्रकश्चैव नागौ वासालपोतका'विति आस्तीके नागनामसु पाठात् आर्यकेण आर्यकनाम्ना सर्पेण सह प्रयातः आगतः सः वासुकिः आर्यकौतुकदृष्टः आर्येण कौतुकात् कुतूहलेन दृष्ट आसीत् । ततः वासुकिमुखदर्शनानन्तरं तेनापि आर्येणापि दृष्टः स पाण्डवो भीमः परिष्वक्त इति योजना ॥

बलं नागसहस्रस्येत्यत्र नागसहस्रस्य बलं गजसहस्रस्य बलं बलप्रदम् ॥

पिबत पाण्डव इत्यत्र पिबत अपिबत ॥

ओपधीभिर्वनघ्नीभिरित्यत्र 'हन हिंसागत्यो'रिति धातोः वनघ्नीभिर्वनस्थाभिरित्यर्थः ॥

युधिष्ठिरस्तु धर्मात्मा चिन्तयन् पापमात्मनि । स्वेनानुमानेन परं तदाऽस्यानुपपश्यतीत्यत्र परं शत्रुं दुर्योधनं प्रति अस्य भीमस्य पापं अपराधं स्वेन अनुमानेन आत्मनि चिन्तयन् अनुपपश्यति नोपपश्यतीत्यर्थः । तस्माद्भीमस्यानपराधित्वात् तं प्रत्यन्योपि नापराध्यतीति मत्वा तूष्णीं स्थित इति भावः ॥

तत्रैनं वहुलमित्यत्र वहुलं बहुपराक्रमवन्तम् ॥

इति सम्भवे द्विसप्ततितमोऽध्यायः ।

## ॥ त्रिसप्ततितमोऽध्यायः ॥

ततो जालवतीं नाम देवकन्यां सुरेश्वर इत्यत्र जालवतीं स्वलावण्याख्यजालेन परवशीकरणसमर्थत्वात् उर्वश्यां एव जालवतीति नामान्तरम् ॥

धनुर्वाणधरं दृष्ट्वा लोभयामास गौतममित्यत्र गौतम इति कुलनाम ॥

तथाऽनानास्त्रकोविद इत्यत्र नानास्त्रकोविदो न भवतीत्यनानास्त्रकोविदः । विनयेत् शिक्षयेत् ॥

महर्षिस्तु भरद्वाजो हविर्धानेऽभवत्पुरेत्यत्र हविर्धाने हविर्धानाख्ये आश्रमे नगरे वा ॥

तद्दपिद्रोंण आदधदित्यत्र द्रोणे द्रोणपरिमाणे कलशे ॥

अग्निवेश्यं अग्निवेश्यनामकं स्वभ्रातृपुत्रम् ॥

[1]वोऽस्ति क्कत्र ननु ब्रह्मन् कस्य पुत्रः प्रतापवानित्यत्र कुत्र वा [3]अस्तीति सम्बन्धः ॥

अश्वस्येवास्य यत्थाम नदतः प्रदिशो गतमित्यत्र 'थमु शब्दे' इति धातोः थाम ध्वनिः हेषेति यावत् ॥

इति सम्भवे द्रोणास्त्रपरिग्रहो नाम त्रिसप्ततितमोऽध्यायः ।

---

[1]वाद्य. [2]वाऽसि. [3]असीति.

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

सखिपूर्वं किमिष्यत इत्यत्र सख्युर्यत्पूर्वं स्नेहादिकं तत्सखिपूर्वं पूर्वसख्यमिति यावत् । सम्बन्धादिकं किं किंप्रयोजनाय इष्यत इत्यर्थः । सङ्गतं सम्बन्धः ॥

यां कर्तेत्यत्र यां बद्ध्वा नयामीति प्रतिज्ञाम् ॥

क्रीडन्तो वीडया तत्र वीराः पर्यचरन्मुदेत्यत्र [1]वीडा विशेषेण क्षणे क्षणे सत्त्वेन च डलयोरभेदात् इडा इला प्राप्या यया सा वीडा कन्दुक इत्यर्थः ॥

सखिपूर्वमहं प्रभो इत्यत्र पूर्वं सखा सखिपूर्वः तम् ॥

स मां निराकारमित्यत्र निराकुर्वद्वचनं निराकारं, आकारपुष्टिरहितं मामिति वा ॥

अभ्यागच्छं कुरून् भीष्म शिष्यैरर्थी गुणान्वितैरित्यत्र गुणान्वितैः शिष्यैः अर्थी अर्थवान् प्रयोजनवानित्यर्थः ॥

इति सम्भवे द्रोणशिष्यसंग्रहो नाम चतुस्सप्ततितमोऽध्यायः ।

---

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

भुक्तवानेव कौन्तेयो न चास्मात्स न्यवर्तत । हस्ततेजस्विनो नित्यमभ्यासकृतिकारणादित्यत्र अभ्यासकृत्याख्यकारणात् हस्ततेजस्विनः ज्याघातेन हस्तमात्रे तेजोवतस्तस्यार्जुनस्य सः हस्तः असाद्भोजनात् न न्यवर्तत स्वहस्ततेजसैव तमो निरस्य पात्रादन्नं आस्ये न्यक्षिपदित्यर्थः । अतो भुक्तवानेव कौन्तेय इति योजना । इदं च तेजोदर्शनं अन्धकारत्वादेव जातं, आलोकान्तरे सति तत्तेज एवेति भ्रान्त्या नात्र दृष्टिः प्रसरेदिति भावः । ईदृशाभ्यासकौशलस्य गोप्यत्वेनान्याज्ञेयत्वात् प्रागन्धकारेऽन्नदाननिषेध इति ज्ञेयम् । प्रयोगो बलवत्तर इति पाठे बलवत्तरः प्रयोगः अस्त्रशस्त्रप्रयोगकौशलं मत्कृपया भविष्यति ॥

कृत्वा द्रोणं महीमयमित्यत्र महीमयं मृण्मयम् ॥

---

[1] वीडया वि विशेषेण.

शब्दवेध्यमदर्शयन्नित्यत्र शब्दो यत्र तत्र वेधनयोग्यो यथा भवति तथा अदर्शयन् स्वयं श्वानमपश्यन् ॥

इति सम्भवे पंचसप्ततितमोऽध्यायः ।

## ॥ षट्सप्ततितमोऽध्यायः ॥

कृत्रिमं भासमारोप्येत्यत्र 'शकुन्तो भास उच्यत' इत्यभिधानात् शकुनसूचकः शकुन्ताख्यः पक्षी भासः ॥

नैतच्छक्यं त्वया वेद्धुमित्यत्र सर्वत्र दृष्टिपातेन लक्ष्ये एकाग्रदृष्टेरभावात् कृत्स्नमिति भावः ॥

इति सम्भवे षट्सप्ततितमोऽध्यायः ।

## ॥ सप्तसप्ततितमोऽध्यायः ॥

बद्धकक्ष्या महाबला इत्यत्र बद्धा कक्ष्या वसनबन्धनपट्टतन्त्वादिर्येषां ते । 'कक्ष्या वसनबन्धिनी' इति निघण्टुः ॥

गन्धर्वनगराकारमित्यत्र इच्छामात्रेण निर्मितत्वात् गन्धर्वनगराकारमित्युक्तम् ॥

इति सम्भवे रंगावतरणं नाम सप्तसप्ततितमोऽध्यायः ।

## ॥ अष्टसप्ततितमोऽध्यायः ॥

समुत्पिञ्जलिकोऽभवदित्यत्र समुत्पिञ्जलिको जनकोलाहलः । 'जनकोलाहलः प्रोक्तः समुत्पिञ्जलिको बुधै'रिति निघण्टुः ॥

सावित्रेणैव चन्द्रमा इत्यत्र पञ्चतारेण संयुक्तः सावित्रेण सवितृदत्तकलाप्रकाशेन सहितः चन्द्रमाः द्वितीयाचन्द्रमा इव बभौ ॥

इति सम्भवे अष्टसप्ततितमोऽध्यायः ।

## ॥ एकोनाशीतितमोऽध्यायः ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यतीत्यत्र अद्भ्यः ब्रह्माण्डोदरे गर्भोदकरूपाद्भ्यः अग्निः स्थितः । 'तस्मिन्वाय्वम्बुसङ्घर्षे दीप्ततेजा महाबलः । प्रादुर्बभूवोर्ध्वशिखः कृत्वा वितिमिरं नभ' इति मोक्षधर्मे नव(मा)मेऽध्याये उक्तवायुना इतस्ततः संघृष्यमाणगर्भोदकादग्निसृष्टेर्वक्ष्यमाणत्वादद्भ्योऽग्निरित्युक्तम् । अण्डाद्बहिश्चतुर्विंशतितत्त्वसृष्टौ तु अग्नेराप इति श्रुत्युक्तक्रमेण सृष्टिरिति विवेकः । तेषामग्न्यादीनां सर्वत्रगं तेजः स्वासु योनिषु जलादिषु शाम्यति अकिञ्चित्करं भवति । एवं क्षत्रे क्षत्राद्‌न्यूनसूतादिजातेः सामर्थ्यं नास्तीति कृपोक्तं वाक्यं सत्यम् । मयाऽपि कर्णस्याङ्गराज्यं दीयते । तदा क्षत्रियसाम्यं भविष्यतीति[1] भावेनाह—यद्ययमिति ॥

उवाच वचनं राजेत्यत्र राजा राजपट्टं प्राप्तः वृषा कर्णः ॥

इति सम्भवे कर्णाभिषेको नाम एकोनाशीतितमोऽध्यायः ।

---

## ॥ अशीतितमोऽध्यायः ॥

प्रतोदोऽयं प्रगृह्यतामित्यत्र प्रतोदः रथवाजिताडनाय कृततोत्रविशेषः ॥

क्षत्रियासु च ये जाता ब्राह्मणा इत्यत्र क्षत्रियासु जाताः विश्वामित्रसुकन्यापुत्राद्या ऋषयः ॥

मृगी व्याघ्रं प्रसूयत इत्यत्र व्याघ्रं व्याघ्र्येव प्रसूयते, न तु मृगी । एवमेतादृशलक्षणभरितकर्णस्य माता क्षत्रियैव भवेदिति भावः ॥

यस्य वा मनुजस्येदं न क्षान्तमित्यत्र यच्छब्दः किंशब्दार्थे । इदं मद्विचेष्टितं पट्टाभिषेककरणादिकं क्षान्तं कर्तुं क्षमां कर्तुं योग्यं न । मदङ्गीकारेण कर्णः सर्वैरपि सोढव्य इति भावः ॥

इति सम्भवे अशीतितमोऽध्यायः ।

---

[1] भवतीति.

## ॥ एकाशीतितमोऽध्यायः ॥

अलातचक्रवत्सर्वानित्यत्र अलातमुल्मुकम् । 'अङ्गारोऽलातमुल्मुक-' मित्यमरः । सर्वतोप्युल्मुकमुद्गिरचक्रवाणवदित्यर्थः ॥

सबालवृद्धाः काम्पिल्या इत्यत्र काम्पिल्याः कम्पिलनगरस्थाः । कम्पिलमिति द्रुपदनगरस्य नाम ॥

आददानः शरावरमित्यत्र शरान् आ समन्ताद्वारयतीति शरावरं चर्म ॥

आसन्दीमित्यत्र आसन्दीं आसन्दीसंज्ञां सीमाम् ॥

इति सम्भवे एकाशीतितमोऽध्यायः ।

---

## ॥ द्व्यशीतितमोऽध्यायः ॥

अभितः सोऽथ कल्माषीमित्यत्र कल्माषीं ऋष्याहारोचितवनमाषलताटवीम् । कल्माषीति आश्रमस्यैव नामेति केचित् ॥

बुद्धा तयोर्बलं बुद्धिं कनीयांसमुपह्वर इत्यत्र तयोर्याजोपयाजयोर्मध्ये बलं तपोबलं बुद्धिं च बुद्धा कनीयांसं उपयाजं उपह्वरे रहसि ॥

तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन् । विमर्शं सङ्करादाने नायं कुर्यात्कथञ्चनेत्यत्र असाम्प्रतमिति पदस्य अयुक्तं कर्मेत्यर्थः । सङ्करादान इति पदस्य सङ्करे अशुद्धवस्तुसम्मिश्रणे सत्यपि आदाने स्वाभीष्टफलादेः सङ्ग्रहे इत्यर्थः ॥

यो नापश्यत्फलं दृष्ट्वा दोषांस्तस्यानुबन्धिकान् । विविनक्ति न शौचार्थी सोऽन्यत्रापि कथं भवेदित्यत्र फलं दृष्ट्वा तस्यानुबन्धिकान् दोषान् यो नापश्यत् न विविनक्ति च क्षालनादिना विवेकं न करोति च सोऽन्यत्रापि शौचार्थी कथं भवेदिति योजना ॥

भैक्षमुञ्छेन सहितमित्यत्र उञ्छेन सस्यखण्डनानन्तरं भूमौ पतितव्रीह्यादिधान्येन ॥

अघृणी यो मुहुर्मुहुरित्यत्र अघृणी जुगुप्सारहितः । 'गर्हा निन्दां घृणा जुगुप्सा च' इति हलायुधः ॥

ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेदित्यत्र ब्रह्मबन्धौ प्रकर्षेण निहितं क्षत्रं अस्त्रशस्त्रकौशलाख्यक्षत्रबलं क्षत्रियो न जयेत् ॥

षडरत्निधनुश्चास्येत्यत्र मुष्टीकृताङ्गुलिरेको हस्तः रत्निरित्युच्यते । प्रसृताङ्गुलिस्तु हस्तः अरत्निरित्युच्यते, सम्पूर्ण एको हस्त इति यावत् । माने क्रियमाणे षट् अरत्नयो यस्य तत्तथोक्तम् । सम्पूर्णषड्हस्तप्रमाणमिति यावत् । 'बद्धमुष्टिः स्मृतो रत्निररत्निः प्रसृताङ्गुलि' रिति हलायुधः ॥

तथेत्युक्त्वा तु तं याज इत्यत्र याज्यस्य याजयितुं योग्यस्य द्रुपदस्य अर्थः प्रयोजनं यस्मात्तद्वाक्यमिति योजना ॥

गुर्वर्थं योजयन् कर्मेत्यत्र गुर्वर्थे गुरोरग्रजस्य प्रीत्यर्थम् ॥

आचख्यौ कर्म वैतानमित्यत्र वैतानं यज्ञसम्बन्धि । 'वितानं यज्ञ उच्यत' इति वागुरिः ॥

कोकिलानामतां तस्य चक्रे वै पुत्रगृद्धिन इत्यत्र 'कुक आदाने' इति धातोः लोकेऽपि परैः काकैः पुष्टसुतानामादात्री हि कोकिलेत्युच्यते । पुत्रगृद्धिनस्तस्य द्रुपदस्य कोकिलानामतां कोकिला इति नाम यस्यासौ कोकिलानामा तस्य भावः कोकिलानामता तां चक्रे । अग्निदत्तपुत्रस्य त्वमेवादाता, न तु तव पत्नी इत्यागामिकार्यसूचनाय पत्नीसहायं विना त्वत्कर्मवीर्यात्त्वय्येवाग्नौ प्रसूतं अग्निनैव पुष्टत्वात्परपुष्टं सुस्वरकण्ठत्वात्कलकण्ठशिशूपमं तन्मिथुनं तवैव स्यान्न तु तव पत्न्याः । अतः मातृस्थानीयोऽपि त्वमेवेति सूचनाय च प्रागेव कोकिलानामतां चक्र इति भावः । अनेन होतुर्याजस्य आगामिसर्वज्ञता सूचिता ॥

सौत्रामणिं तां तु पत्नीं ततः कालेऽभ्यधात्तदा । याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदेत्यत्र तदा तस्मिन् समये याजः सवनस्यान्ते देवीमाह्वापयत् । ततः आह्वापनानन्तरं काले यागावसानकाले सौत्रामणिं सूत्रसम्बन्धिनः सौत्राः कण्ठादावा समन्ताद्ध्रियमाना मणयः हारमङ्गलसूत्रमण्यादिरूपाः

---

[1]गुर्वर्थेऽयाजयत्कर्मेत्यत्र गुरोरग्रजस्य प्रीत्यर्थं ॥

सौत्राः आमणयः यस्याः सा तां सौत्रामणिं सर्वालङ्कारभरितामित्यर्थः । उपरि क्रियमाणाहङ्कारसूचनाय हेतुगर्भमिदं विशेषणम् । मद्यपानोपेतसौत्रामण्याख्य-यागसूचकपदमहिम्ना मधुपानमत्तेति च ध्वनयितुमप्रसिद्धपदोपादानम् । तां पत्नीं तदा तदैव अभ्यधादिति योजना ॥

नालिप्तं वै मम मुखं पुण्यान् गन्धान् बिभर्मि च । न पत्नी तेऽस्ति सूत्यर्थं तिष्ठ याज मम प्रिये इत्यत्र मम मुखं आलिप्तं कुङ्कुमरसा-द्यालेपैरलङ्कृतं न । पुण्यान् गन्धान् कस्तूरीतिलकादिभिः कृतान् गन्धान् न बिभर्मीति नञावृत्त्या योजना । मुखादिकमलङ्कृत्य तिष्ठेति भर्ता नोक्तवानिति कोपादिदं वचनम् । अतः मुखालङ्कारानन्तरमायास्यामि, नेदानीमिति भावः । ते तपस्सामर्थ्यवतस्तव पत्नी नास्ति लौकिकवदपेक्षिता नास्ति । पत्नीं विनाऽपि त्वं पुत्रं जनयितुं समर्थोऽसीति भावः । यद्वा अहं ते तव पत्नी न, किन्तु सूत्यर्थं ते पत्नी पृथगेवास्तीति । मम प्रिये भर्तरि आह्वानकर्तरि सति हे याज त्वं तिष्ठ तूष्णीं तिष्ठ । आलिप्तं वै मम मुखमिति पाठे मुखमालिप्तम् । पुण्यान् गन्धान् बिभर्मि च । एतादृशालङ्कारभरितायाश्च मम आह्वानं कर्तुं मम प्रिये भर्तरि विद्यमाने सति हे याज तिष्ठ त्वं तूष्णीं तिष्ठ । सूत्यर्थं ते पत्नी नास्ति अपेक्षिता नास्ति । भर्त्राऽपि प्रागेव नाहूता, होत्रा त्वयाऽपि नाहूतेति कोपा-दिदं वचनम् ॥

द्वितीयायां च होत्रायामित्यत्र जुहोत्यनयेति होत्रा आहुतिः तस्याम् ॥

न चैनान् हर्षसम्पूर्णानित्यत्र यथा भूमेर्भारो भवति तावान् जन-सम्मर्दो जात इति भावः ॥

धृष्टत्वादतिधृष्णुत्वादित्यत्र धृष्टत्वात् स्वयं धैर्यवत्त्वात् अतिधृष्णुत्वा-च्छत्रूणामतिशयेन धर्षणशीलत्वाच्च धृष्टः । धर्मात् यज्ञजनितपुण्यवशात्, द्युस-म्भवात् कान्त्याख्यद्रविणसम्भवात्, नामैकदेशे नामग्रहणमिति न्यायात् द्युपदे-नैव सर्वालङ्काराख्यद्रव्य[1]त्वाद्वा द्युम्नः । 'द्युम्नं द्रव्यं द्रविण'मिति हलः ॥

इति सम्भवे धृष्टद्युम्नोत्पत्तिर्नाम द्व्यशीतितमोऽध्यायः ।

---

[1]द्रव्यवत्त्वलाभाद्वा.

## ॥ त्र्यशीतितमोऽध्यायः ॥

राजा वभूव पाञ्चाल इत्यत्र पाञ्चालः पृप(द)तनामको द्रुपदपिता ॥

व्यत्ययात्सुतकारणादित्यत्र व्यत्ययात् विशेपेण अत्ययात् गतोऽभूत् ॥

तस्यां च विलपन्त्यां वै इत्यत्र विशेपेण लपन्त्यां, पुनः पुनः क्रीडन्त्यां च सत्याम् ॥

तस्मात्तु द्रुपद इत्यत्र तस्मात्पदा द्रुतत्वात् ॥

इति सम्भवे द्रुपदजन्मकथनं नाम त्र्यशीतितमोऽध्यायः ।

---

## ॥ चतुरशीतितमोऽध्यायः ॥

पित्र्यामन्तर्दधे कीर्तिमित्यत्र अन्तर्दधे अन्तर्हितामकरोत् । 'पुत्रादिच्छेत्पराभव'मिति वचनात् स्वकीर्तेरधिकत्वेन सा कीर्तिस्तिरोहिताऽभूदिति भावः । यद्वा अन्तः स्वहृदये दधे पाण्डोः कीर्तिं दधारेत्यर्थः ॥

लक्षवेधे च मोक्षे चेत्यत्र लक्ष्यस्य वेधे वेदनयोग्ये कौशले, छायां दृष्ट्वा लक्षदर्शनादिचमत्कार इत्यर्थः । क्षुरनाराचविपाटाद्याः शरजातिविशेपाः ॥

तीर्थात्तीर्थगतमित्यत्र 'निपानागमयोस्तीर्थमृपिजुष्टजले गुरौ' इत्यभिधानात् तीर्थात्प्रागेकस्माद्गुरोः तीर्थगतं पुनर्गुर्वन्तरे प्रापितं अस्त्रं मया त्वयि सङ्क्रामितम् ॥

सर्वां तामखिलां नीतिं पातालाधिपतेस्तथेत्यत्र पातालाधिपतिः शेपः तद्रूपाद्बलरामादित्यर्थः ॥

विभियुर्दुष्टबुद्धय इत्यत्र विभियुः विभ्युरित्यर्थः ॥

इति सम्भवे पाण्डवदिग्विजयो नाम चतुरशीतितमोऽध्यायः ।

---

## ॥ पञ्चाशीतितमोऽध्यायः ॥

मन्त्रिणं सौबलस्य चेत्यत्र मन्त्रिणं दुर्मन्त्रदातारं कलिङ्गमित्यर्थः ॥

भारद्वाज तदाचक्ष्वेत्यत्र भारद्वाज (भा)भरद्वाजकुलोत्पन्न इति कलिङ्गस्य सम्बुद्धिः ॥

अच्छिद्रः आच्छादितस्वदोषः ॥

रक्षेद्विवृतमात्मन इत्यत्र विवृतं विचारम् ॥

हन्यात्त्रीन् पञ्च सप्तेति परपक्षस्य सर्वश इत्यत्र परपक्षस्य इति नीतिशास्त्रोक्तप्रकारेण त्रीन् उत्साहशक्तिमन्त्रशक्तिप्रभुशक्त्याख्यान् त्रीन्, इति नीतिशास्त्रोक्तप्रकारेण पञ्च सामदानभेददण्डसेनासन्नाहाख्यान् पञ्च । यद्वा 'सहायः साधनोपायो विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमित्यपि' इति वचनात् सहायाद्यङ्गपञ्चकं (वा) । इति नीतिशास्त्रोक्तप्रकारेण सप्त स्वाम्यमात्यजनपददण्डदुर्गकोशमित्राख्यान् सप्त च हन्यादिति सम्बन्धः ॥

ततोऽन्यानन्तरानित्यत्र अन्ते समीपे रमन्त इत्यन्तराः तान् सहायभूतानित्यर्थः ॥

आपदामथ कालेष्वित्यत्र सुविस्तीर्णं सुविक्रान्तं सुयुद्धकुशलमपलायिनमपि पुरुषं आपदां कालेषु तस्यापदां कालेषु, अथ तस्मिन्नेव क्षणे हन्यादिति योजना ॥

कुणात्तृणमयं चाश्रित्यत्र कुणादिति ल्यब्लोपनिमित्ता पञ्चमी । कुणं कृमिविशेषं दृष्टान्तीकृत्य तृणमयं स्वाच्छादकतृणप्रधानो यथा भवति तथा मृतशायिकां मृतस्य शायिकां शयनप्रकारं आश्रित्य शयीत; नानोपायैः स्वमरणं परिहरेदित्यर्थः ॥

एकाग्राच्चापि वसत इत्यत्र एकाग्रात् एकाग्रभावात् वसतः पुरुषस्य आत्मनि च्छिद्रं यथा न भवति तथा विचार्य तिष्ठतोपि पुरुषस्येत्यर्थः ॥

लोकं प्रस्तावयित्वैवमित्यत्र एवं छद्मकृतपूर्वोक्तजटाजिनाग्निहोत्रादिभिः लोकं प्रस्तावयित्वा विश्वासयित्वा ततः स्वावसरे सति लुप्येत् नाशयेत् ॥

¹स्ववधो.

अङ्कुशं शौचमित्याहुरित्यत्र शौचं छद्मना कृतशौचं अङ्कुशं परवशी-करणहेतुत्वात् अङ्कुशमित्याहुः ॥

पक्कं पक्कं प्रशातयेदित्यत्र शातयेत् छिन्द्यात् ॥

धिग्बलं मृगराजस्येत्यत्र मृगराजस्य व्याघ्रस्य ॥

मृगो हत इत्यत्र मृगः सिंहः ॥

मृगमांसं न खादेयमित्यत्र खादितुं योग्यं खादेयं, अस्मद्विधस्य परमुत्तममपि तन्मृगमांसं खादेयं न ॥

अर्थे पर्यवतिष्ठेरन्नित्यत्र यथा अर्थे पर्यवतिष्ठेरन् तथा कर्तव्या इति योजना ॥

यदा विचलितः पथीत्यत्र विगतं चलितं चलनं यस्य स तथोक्तः पथि चलनासमर्थो यदा तदा प्रहरेदित्यर्थः ॥

त्रिवर्गे त्रिविधा पीडेत्यत्र त्रिवर्गे धर्मार्थकामे त्रिविधा पीडा अस्ति । यद्वक्ष्यति— 'धर्मोतिचरितः पीडाम्' इत्युत्तरश्लोके । त्रिवर्गे अनुबन्धाः सहकारिणश्च सन्ति । धर्मे स्नानशौचाद्याः । अर्थे कृषिवाणिज्याद्याः । कामे पुत्रमित्रकलत्राद्याः । धर्मः अतिचरितः अत्यन्तमाचरितः सूर्योदयमारभ्यास्तमयपर्यन्तमाचरित इत्यर्थः । द्वाभ्यां अर्थकामपीडाभ्यां सह पीडां शरीरपीडां प्रयच्छति । शरीरं कृशं स्यात्, अर्थोपि न सिध्येत्, कामोपि न सिध्येदित्यर्थः ॥

गर्भमश्वतरी यथेत्यत्र अश्वतर्याः गर्भे एव नास्ति । यदृच्छया गर्भे मरणमेव भवतीति भावः ॥

अग्निस्तोकमिवात्मानमित्यत्र आत्मानं क्रमेण व्यापनशीलं अग्निस्तोकमिव शत्रुस्तोकमपि पण्डितः सन्धुक्षयति नाशयति ॥

इति सम्भवे पंचाशीतितमोऽध्यायः ।

---

## ॥ षडशीतितमोऽध्यायः ॥

न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं तु समारुह्य यदी जीवति पश्यतीत्यत्र बहुतरनदीप्रवाहे बहुतरवैरिकटके चागते सति तर्तुं शक्यते

न वा जेतुं शक्यते न वेति संशयमनारुह्य तरणजयाद्युपायमनालोच्य च औद्धत्यादेव गच्छन् नरो भद्राणि न पश्यति । गदी व्याधिग्रस्तः संशयमजीर्यादिसंशयमारुह्य तत्परिहर्तुमगदं च स्वीकुर्वन् जीवति, भद्राणि पश्यति च । सर्वकार्येष्वपि विचारपरो भवेदिति भावः ॥

यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् । अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितमित्यत्र यस्य अज्ञस्य बुद्धिः उपरितनकार्यात्परिभवेत् निवृत्ता भवेत् कृतेऽपि फलं भविष्यति न वेति भीत्या प्रागेव कुण्ठिता स्यात् तं अतीतेन अतीतकृतकर्मफलेन सान्त्वयेत् । दुर्बुद्धिं पूर्वकृतकर्मणां क्वचित्फलादर्शनात् निष्फलमेवेदमिति दुर्बुद्धिमन्तं कुतर्किणं अनागतेन फलेन सान्त्वयेत् यथा पुत्रेष्टिकृतः एकपुत्रनाशेऽपि पुनर्जीवत्पुत्रान्तरं जायते तथा तवापि अनुकूलकालाद्यभावेन सकृत्फलाभावेऽपि कालान्तरे फलं भविष्यतीति सान्त्वयेत् । स्वानिष्टं स्वकृतपापफलमिति जानन्तं पण्डितं तु प्रत्युत्पन्नेन तात्कालिकफलेनैव सान्त्वयेदित्यर्थः ॥

प्रच्छन्नो मूलवापीत्यत्र मूलवापी मूलस्यैव वपनकर्ता छेत्तेत्यर्थः ॥

इति सम्भवे षडशीतितमोऽध्यायः ।

---

## ॥ सप्ताशीतितमोऽध्यायः ॥

(जतुगृहपर्व ७)

क्षत्ताऽऽर्तबन्धुस्त्वस्माकं प्रच्छन्नस्तु यतः पर इत्यत्र आर्तबन्धुः अस्माकं आर्तः हृदयेन क्लेशसहितो बन्धुः, परे युधिष्ठिरे प्रच्छन्नः प्रकर्षेण छन्नः मानसस्नेहो यस्य स तथोक्तः बन्धुरिति योजना ॥

इति सप्ताशीतितमोऽध्यायः ।

---

## ॥ अष्टाशीतितमोऽध्यायः ॥

ते ताता यदि मन्यध्वमित्यत्र ते यूयमिति योग्यपदाध्याहारेण योजना ॥

तेऽभ्यवर्धन्त पाण्डवानित्यत्र अभ्यवर्धन्त अभ्यवर्धयन्त । पाण्डवानामभिवृद्धिः स्वशक्त्यैवेति सूचनाय अणिजन्तप्रयोगः ॥

इत्यष्टाशीतितमोऽध्यायः ।

## ॥ एकोननवतितमोऽध्यायः ॥

वैश्वासिकतरस्त्वयेत्यत्र अतिशयेन विश्वासयोग्यो वैश्वासिकतरः ॥

सपत्नांश्च ममोद्धरेत्यत्र उत् उत्कर्षेण हर संहरेत्यर्थः ॥

आग्नेयान्यत्र कुड्येष्वित्यत्र आग्नेयानि अग्निसम्बन्धे सति शीघ्रं दाहयोग्यानि वस्तूनि ॥

वल्वजेन च संमिश्रमित्यत्र 'उलपा वल्वजाः प्रोक्ता इपीका काश उच्यते' इत्यभिधानात् वल्वजं इपीकातृणम् ॥

यथा च तन्न शङ्केरन्नित्यत्र तत् गृहं परीक्षन्तोपि पाण्डवाः आग्नेयमिति यथा न शङ्केरन्, अन्येऽपि मानवाः यथा न शङ्केरन् तथा तद्गृहं कार्यमिति योजना ॥

इति एकोननवतितमोऽध्यायः ।

## ॥ नवतितमोऽध्यायः ॥

स तस्मिन् पुरुषव्याघ्रेऽदृष्टभावमित्यत्र अदृष्टभावं मरणम् ॥

प्राज्ञः प्राज्ञप्रलापज्ञ इत्यादिविदुरनिगूढोक्तिरूपपद्यानामयं भावः—प्राज्ञः स्वयं कुशलः प्राज्ञप्रलापज्ञः प्राज्ञस्य संज्ञया वदतः कुशलस्य प्रलापं यो जानाति स तथोक्तः । इदं उपरि वक्ष्यमाणं संज्ञावचनं विज्ञाय आपदं स्वपीडारूपसङ्कटं यथा निस्तरेत्तथा कुर्यात् इति नीतिकथनव्याजेन धर्मराजं प्रत्येव बुद्धिकथनम् । ये पुरुषाः अलोहं लोहव्यतिरिक्तं निशितं शरीरपरिकृन्तनं शस्त्रं कपटगृहादिरूपशस्त्रम् । शरीरं परितः कृन्ततीत्युक्त्या स्वोक्तशस्त्रस्य सर्वाङ्गव्रणकारित्वं सूचयति । तान् प्रतिघातविदः स्ववैरिनाशककपटतन्त्रवेत्तॄन् तथा स्वचिकीर्षितप्रकारेण न घ्नन्ति । 'यो वेत्ति न च तं घ्नन्ति प्रतिघातमिमं द्विष'

इति पाठे इमं प्रतिघातं यो वेत्ति तं द्विपः न घ्नन्तीति योजना। कक्षघ्नं वन-नाशकं, शिशिरघ्नं हिमनाशकं, [1]महाकुक्षेः बलं ओजश्च यस्मात्तत्तथोक्तम्। वन-नाशकत्वतुहिनौषधत्वभुक्तान्नपाचकत्वरूपलिङ्गेन तच्छस्त्रं अग्निरूपमिति सूचयति। ईदृग्रूपं शस्त्रं मानुषदेहो न सेहेतेति मत्वा आत्मानं स्वदेहं यो रक्षति स जीवति। अचक्षुः अन्धः पन्थानं मार्गं न वेत्ति। अचक्षुर्दिशोऽपि न वेत्ति। अधृतिरधैर्य-वान् भूतिं ऐश्वर्यं नाप्नोति। एतत्प्रमेयं मया बोधितस्त्वं बुध्यस्वेति भीमं प्रति [2]क्षित्वाऽऽह। अनेन चक्षुष्मता त्वया दाहकगृहान्निर्गमनमार्गः गन्तव्या दिक् च बोद्धुं शक्यत इति, तमोनिबिडगुहान्तर्गमने धीरेण च भवितव्यमिति च सूचि-तम्। धीरः अनाप्तैर्दत्तं अलोहजं शस्त्रं विषदूषितभक्ष्यादिरूपशस्त्रं नादत्ते। अनेन भवद्वैरिणः विषान्नादिकं दास्यन्ति, तन्न भोक्तव्यमिति सूचितम्। श्वा-विट् शल्यकः। 'शललः शल्यकः श्वाविट्' इति हलः। शरणं [3]रक्षकम्। 'शरणं गृहरक्षित्रोः' इत्यमरः। स्वपक्षद्वयमासाद्य हुताशनात् वनानलात् प्रमु-च्येतेत्युक्त्या स्वबाहुबलेनाग्निं निस्तरेति सूचितम्। धीर इत्युक्त्या इदं सर्वं भीमेनैव कर्तव्यमिति सूचयति। चरन्मार्गान्विजानातीत्यनेन अन्धकारेऽपि अग्रे अग्रे चरणं सञ्चारयित्वा गुहामार्गो ज्ञेय इति सूचयति। नक्षत्रैर्विन्दते दिश इत्यनेन गुहानिर्गमनानन्तरं नक्षत्रवीथीं ज्ञात्वा हास्तिन[4]पट्टणव्यतिरिक्त-मार्गेणैव गन्तव्यमिति सूचयति। आत्मना बुद्ध्या पञ्च आत्मनः स्वप्रतिनिधि-भूतान् पञ्चजीवान् पुरोचनस्य स्वीयान् पीडयन् सः मदुक्तकारी न पीड्यते। अपि च आत्मना चित्तेन आत्मनः स्वस्य पञ्च पञ्चेत्यावृत्त्या योजनीयम्। ज्ञा-नेन्द्रियाणि कर्मेन्द्रियाणि च पीडयन् जयन् सः मदुक्तकारी न पीड्यते शत्रु-भिर्न पीड्यते। शत्रून् जित्वा वसुधां प्राप्स्यतीति भावः। 'जितेन्द्रियश्च वसुधां प्राप्स्यसीति वचोऽब्रवीत्' इति वक्ष्यमाणत्वादियमपि योजना आवश्यकी॥

इति नवतितमोऽध्यायः।

---

[1]महतः कुक्षेः. [2]कटाक्षः. [3]रक्षितारं. [4]पत्तन.

## ॥ एकनवतितमोऽध्यायः ॥

यदि तच्छक्यमस्माभिः श्रोतुं न च न दोषवदित्यत्र अस्माभिः श्रोतुं शक्यं नेति न । दोषवच्च नेति योजना ॥

स्वहितैराप्तैरित्यत्र स्वस्य पुरोचनस्य हितैरित्यर्थः ॥

आपदं तेन मां पार्थेत्यत्र तेन कपटकृतत्वकारणेन दुर्योधनेन कृतामापदं वा मां विदुरः तदा आगमनकाले बोधितवानिति योजना ॥

इह यत्तैर्निराकारैर्वस्तव्यमिति रोचते । तुष्टैरिव विचिन्वद्भिर्गतिमन्यां ध्रुवामित इत्यत्र यत्तैः सन्नद्धैः निराकारैर्निर्गतकुपिताकारैः तुष्टैरिव सन्तुष्टैरिव विद्यमानैः इतः अन्यां ध्रुवां गतिं निस्सरणमार्गं विचिन्वद्भिः विचारयद्भिरस्माभिः इह इहैव वस्तव्यमिति रोचत इति योजना ॥

उपपन्नं तु दग्धेषु कुलवंशानुकीर्तिताः । कुप्येरन्यदि धर्मज्ञास्तथाऽन्ये कुरुपुङ्गवा इत्यत्र कुले सत्कुले वंशे क्षत्रवंशे च अनुकीर्तिताः प्रसिद्धाः अन्ये कुरुपुङ्गवाश्च दग्धेषु वंशप्रवर्तकेष्वस्मासु दग्धेषु सत्सु यदि कुप्येरन् तर्हि उपपन्नं तु उपपन्नमेवेति योजना ॥

इति एकनवतितमोऽध्यायः ।

---

## ॥ द्विनवतितमोऽध्यायः ॥

भवितास्मो यथा तस्येत्यत्र तस्य विदुरस्य वयं यथा भवितास्मः भविष्यामः । कविः स विदुरः यथा अस्मान् पालयति तथा अस्मान् त्वं पालयेति योजना ॥

परिखामुत्किरन्नामेत्यत्र नाम लोकप्रसिद्ध्या परिखां उत्किरन् कुर्वन् ॥

मध्ये नातिमहन्मुखमित्यत्र नातिमहत् सूक्ष्मं मुखं गुहामुखं चक्रे ॥

इति द्विनवतितमोऽध्यायः ।

## ॥ त्रिनवतितमोऽध्यायः ॥

पट् प्राणिनो निधायेहेत्यत्र एकां पुरोचनस्वसारं पञ्च तस्याः पुत्रान् इह दीप्यमानगेहे ॥

इति जतुगृहदाहो नाम त्रिनवतितमोऽध्यायः ।

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

परासुत्वं न पश्यामीत्यत्र परासुत्वं मृतत्वम् ॥

सर्वथा विकृतं तत्तु यदि[1] ते निधनं गता इत्यत्र तत् मृतत्वं विकृतं विरुद्धतया कृतं विरुद्धमित्यर्थः ॥

कथं त्वत्प्रमुखाः सर्वे इत्यत्र त्वं प्रमुखं प्रधानपुरुषो येषां ते त्वत्प्रमुखाः ॥

सुरङ्गं वै विलं तदेत्यत्र सुरङ्गमिति भूम्यन्तःक्रियमाणबहुजनगमन-योग्यविलस्य नाम ॥

इति पंचनवतितमोऽध्यायः ।

---

## ॥ षण्णवतितमोऽध्यायः ॥

परं पारं भुजप्लवा इत्यत्र नौकादण्डग्राहिभिर्भुजैर्नावं प्लावयन्तीति भुजप्लवाः ॥

इति षण्णवतितमोऽध्यायः ।

---

## ॥ सप्तनवतितमोऽध्यायः ॥

दूरपारं भुजप्लवैरित्यत्र दूरे पारं अपरतीरं यस्य तादृशं मध्ये मध्ये जल-प्रवाहं भुजप्लवैः भीमसेनस्य भुजाख्यप्लवैः ॥

वातैरासन्ननार्तवैरित्यत्र वातयोग्यऋतुसम्बन्धिनो न भवन्तीत्यनार्तवाः तैः वातैः अकालिकवातैरित्यर्थः ॥

---

[1]यदितो.

बहुगुल्मक्षपद्रुमैरित्यत्र बहुगुल्मानि क्षपा निबिडान्धकारश्च येषु तै-द्रुमैरित्यर्थः ॥

जागर्तव्ये स्वपन्तीम इत्यत्र जागर्तव्ये जागरणयोग्ये महाकानने ॥

जजागार स्वयं तदेत्यत्र जजागार जागरं कृतवान् । लिटो रूपमिदम् ॥

इति हिडिम्बवनप्रवेशो नाम सप्तनवतितमोऽध्यायः ।

---

## ॥ अष्टनवतितमोऽध्यायः ॥

### (हिडिम्बवधपर्व ८)

ऊर्ध्वाङ्गुलिः सकण्डूय इत्यत्र सकण्डूयः कण्डूयनेन सहितः ॥

मज्जयिष्यन्तीत्यत्र मज्जयिष्यन्ति मज्जिष्यन्ति । स्वार्थिको णिच् ॥

त्रास्येऽहं त्वां महाराजेत्यत्र त्रास्ये रक्षिष्ये । 'त्रैङ् परिपालन' इति धातुः ॥

अनिविष्टश्च तत्राहमित्यत्र निवेशनं विवाहः अनिविष्टः अकृतोद्वाहः। परिवेत्ता 'विद लाभ' इति धातोः स्त्रीपरिग्रहकर्ता ॥

इति भीमहिडिम्बासंवादो नाम अष्टनवतितमोऽध्यायः ।

---

## ॥ एकोनशततमोऽध्यायः ॥

दृष्टाप्रदानास्तु मयेत्यत्र इह लोके राक्षसाः मानुषेषु मया दृष्टाप्रदानाः दृष्टमप्रदानं येषां ते तथोक्ताः । राक्षसानां मानुषेषु प्रदानं कुत्रापि न दृष्टम् । किन्त्वप्रदानमेव दृष्टमित्यर्थः । राक्षसो हिडिम्बः मानुषे त्वयि मां न दास्यतीति शङ्कया भीताऽसीति भावः ॥

इति हिडिम्बागमनं नाम एकोनशततमोऽध्यायः ।

---

[1]स्वार्थे.

## ॥ शततमोऽध्यायः ॥

विशेषतो नापकृत इत्यत्र परेण कामेन अपकृते अपकारे कृते सति इयं विशेषतः तव अपकृते अपकारं न कर्त्री न । एतदेव विशदयति— न हीयं स्ववशेत्यादिना ॥

मयाऽऽत्मानं बलाधिकमित्यत्र आत्मानं माम् । बल्हीनं तथा ब्रुवीति पाठे स्पष्टोऽर्थः ॥

इति भीमहिडिम्बयुद्धं नाम शततमोऽध्यायः ।

## ॥ एकाधिकशततमोऽध्यायः ॥

अपनेतुं व्यवसित इत्यत अपनेतुं त्यक्तुं व्यवसितः तदुपरि मया नैव कथितश्च ॥

पुरा मायां विकुरुत इत्यत्र पुरा उपरि बाहुयुद्धायासामर्थ्ये सति मायां मायायुद्धं विकुरुते विविधतया करिष्यति । अतः शीघ्रं जहीति भावः ॥

इति हिडिम्बवधो नाम एकाधिकशततमोऽध्यायः ।

## ॥ द्व्यधिकशततमोऽध्यायः ॥

सा त्वामेवानिरुन्धतीत्यत्र निरोधं प्रतिकूलं कुर्वाणा न भवतीत्यनिरुन्धती, सेवमानेति यावत् ॥

अहं शुश्रूषुरिच्छेयमित्यत्र शुश्रूषुः परिचर्यां कुर्वती अहं तव गात्रं निषेवितुमिच्छामि, अङ्गसङ्गमिच्छामीति यावत् ॥

पृष्ठेन वो वहिष्यामि विमानं सुकृतानिवेत्यत्र सु शोभनं कृतं कर्म येषां ते सुकृताः पुण्यात्मानः तान् विमानमिव ॥

न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी । ईशा रक्षस्सुता याऽस्मि राज्ञि सालकटङ्कटी ॥ पुत्रेण तव संयुक्ता युवतिर्देववर्णिनीत्यत्र हे राज्ञि कुन्ति ईशा सर्वेश्वरेण, ईट्शब्दस्य तृतीयान्तं रूपमिदम् । ईश्वराज्ञयेत्यर्थः । या अहं सालकटङ्कटी सालवनेषु सञ्चरणे सति अयस्सारोपमस्वाङ्ग-

शिलासङ्घट्टनेन कटङ्कटध्वानो येभ्यस्ते सालकटङ्कटाः, वनसञ्चारिणो राक्षसा इति यावत्, तेषां सम्बन्धिनी सालकटङ्कटी । यद्वा सालेन सालवृक्षेण कटस्य वन्यकरिकुम्भस्थलस्य कटं सङ्कटं येभ्यस्ते राक्षसाः सालकटङ्कटाः तेषां सम्बन्धिनी सालकटङ्कटी रक्षस्सुता हिडिम्बमातुरुदराज्जाता अस्मि । हे आर्ये सा अहं यातुधानी यातूनि यातनास्तीव्रवेदनाः धीयन्तेऽस्यामिति यातुधानी अत्यन्तमोयोग्या जातिराक्षसी नास्मि । रजनीचरी रजनीचरस्येयं रजनीचरी राक्षसपत्न्यपि इतः पूर्वं नास्मि । किन्तु देववर्णिनी देववर्णवती[1] युवतिः, देवनारीत्यर्थः । अस्मि । अतस्तव पुत्रेण संयुक्ता भवामीति योजना । ईश्वराज्ञया शापवशाद्राक्षसयोनौ जाताऽप्यहं स्वभावाद्देवाङ्गनैव । अतो भीमस्य सङ्गमयोग्यैवेति भावः ॥

**एवं ब्रुवन्तीह तथा प्रत्याख्याता क्रियां प्रति । भूम्यां दुष्कृतिनो लोकान् गमिष्येऽहं न संशय** इत्यत्र एवं उक्तविधया भवत्सङ्गयोग्या भवामीति ब्रुवन्ती अहं तथा तथापि मया यथोक्तं तथा क्रियां भवत्सेवादिक्रियां प्रति प्रत्याख्याता निराकृता सती भूम्यां दुष्कृतिनः आत्महत्याख्यपापकारिणः लोकान् गमिष्यामि; संशयो न । भवद्भिरनङ्गीकारे देहमेव त्यजामीति भावः । विवाहावसरत्वात् ध्वनिनैवात्महननं सूचितं; न तु स्पष्टमुक्तम् ॥

तव कामादापदस्तु, अस्माकं का साऽऽपदित्यत आह— **व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते । पुण्यात्प्राणान्धारयति पुण्यं वै प्राणधारणमिति ।** अयमर्थः— धर्मिणां भवादृशानां धर्मिष्ठानां धर्मस्य मम पाणिग्रहणेन मयि स्थितकामाख्यापत्परिहाररूपधर्मस्य व्यसनं विशेषेण निरसनमेव आपत् । यद्यपि भवतामन्या आपन्नास्ति । मदभीष्टप्रदानाख्यपरोपकाररूपभवद्योग्यधर्मत्याग एव भवतामापदिति भावः । अपि च भवादृगुत्तमाधिकार्यपि पुण्यादेव प्राणान् धारयति । भवत्प्राणधारणकारणत्वेन मयोच्यमानं तच्च पुण्यं अस्मदादिवत्प्राचीनपुण्यमात्रं न । प्राचीनपुण्यमात्रेण उदरभरणस्य खरसूकरादिहीनयोनिसदृशत्वेन उत्तमत्वासम्पादकत्वात् । किन्तु कृपणाना-

[1] देववद्वर्णवती.

मस्मदादीनामभीष्टफलदानेन अस्मत्प्राणस्य यद्धारणं परिपालनं तदेवाधिकारिकपुरुषाणां युष्माकं पुण्यम् । तत्तज्जीवकृतकर्मफलदानेन तांस्तान् जीवाननुगृह्णीध्वमिति भवतां या हरेराज्ञा तत्करणरूपतया हरेः परमानुग्रहहेतुत्वेन महापुण्यरूपत्वात् अस्मिन् पुण्ये सत्येव यत्प्राणधारणं तदेव भवतां प्राणधारणमित्युच्यते । नो चेद्भगवदाज्ञोल्लङ्घयितृत्वेन जीवन्मृतत्वमेव स्यादिति भावः । तस्माद्भवदुचितधर्माभावाख्यभवदापत्परिहाराय भवदुचितपुण्यसम्पादनाय च मम परिग्रहः कार्य इति हिडिम्बीहृदयम् ॥

धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधव इत्यत्र धर्मार्थकाममोक्षेषु स्वाधीनतया सत्स्वपि साधवो हीनेषु[2] दयामेव कुर्वन्तीति योजना ॥

इति द्व्यधिकशततमोऽध्यायः ।

## ॥ त्र्यधिकशततमोऽध्यायः ॥

गताऽहनि निवेशेषु भोज्यं राजार्हमानयदित्यत्र निवेशेषु गृहेषु गता इतस्ततो गता राजार्हं भोज्यं अहनि आनयदिति योजना ॥

समाप्ते चैव मे सर्वे यूयं चैव न संशय इति क्वाचित्कपाठे[3] यूयं सर्वे मे मम समाप्ते 'नपुंसके भावे क्त' इति वचनात् सम्यगाप्तौ विद्यमानाः न संशयः । सर्वे मम भक्ता इति भावः ॥

दीनतो बालतश्चैवेत्यत्र दीनतो बालतश्चेति भावप्रधानो निर्देशः । दीनत्वाच्च बान्धवाः स्वपुत्रादिषु स्नेहं कुर्वन्ति । तस्माद्भवतां शिशुत्वेन बालत्वात् दुर्योधनकृतोपद्रवेण दीनत्वाच्च सम्प्रतीदानीं मम युष्मास्वभ्यधिकः स्नेहोऽस्ति । बान्धवा इति वदता पौत्रत्वाख्यबन्धुत्वेनापि युष्मास्वभ्यधिकः स्नेहोऽस्तीति सूचितम् ॥

वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिण इत्यत्र मम अगमनकाङ्क्षिणः गमनकाङ्क्षिणो न भवन्तीत्यगमनकाङ्क्षिणोपि इहैव वसतेति सम्बन्धः । इतो मद्ग-

[1] कृतपुण्यकर्म. [2] दीनेषु. [3] क्वचित्पाठे.

मनमसहमानैर्मया सह नागन्तव्यमिति भावः । यथाश्रुतार्थे तु अस्मिन्वने पुन-र्व्यासस्यागमनाभावाद्विरोधः स्यात् ॥

इह मासं प्रतीक्षध्वमा गमिष्याम्यहं पुनरित्यत्र इह वने प्रागुक्त-षण्मासादुपरि पुनर्मासं एकं मासं च प्रतीक्षध्वमित्यर्थः । अतः, कार्यार्थिनस्तु षण्मासानिति वाक्यस्य एवं भ्रातॄन् सप्तमासानिति वाक्यस्य च न विरोधः। आ आशब्दवाच्यः अहं गमिष्यामि । 'अ आ अं अः पुराणर्षिः व्यासः शाखासहस्रकृत्' इति व्यासनामसु पाठात् । अन्यथा अस्मिन्वने पुनरागमना-भावेन प्रतिज्ञाविरोधः स्यादिति ज्ञेयम् ॥

इति त्र्यधिकशततमोऽध्यायः ।

---

## ॥ चतुरुत्तरशततमोऽध्यायः ॥

प्रणम्य विकचः पादावगृह्णात्स पितुस्तदेत्यत्र तदा तदाऽपि पाद-प्रणामसमये विकचः अनुत्पन्नकेशपाशः ॥

घटोऽहमुत्कचोऽस्मीति मातरं सोऽभ्यभापतेत्यत्र दर्पणे विकचं रक्त-घटोपमं स्वशिरः प्राक् पश्यन् तत्क्षण[1] एव तत्र ऊर्ध्वीभूतकेशोत्पत्तिं च पश्यन् स बालः बाल्यादेव स्वशिरः रक्तघटं मन्वानः तत्रैव कचोत्पत्तिं च मन्वानः अहं उत्कचः घटोसीति मातरमभ्यभापत । अस्य बालस्य घटः उत्कच इति मातुर्वचनादुक्तश्च । तेनास्य घटोत्कच इति नामाभवदित्युत्तरेणान्वयः ॥

इति चतुरुत्तरशततमोऽध्यायः ।

---

## ॥ पञ्चोत्तरशततमोऽध्यायः ॥

### (बकवधपर्व ९)

तदा तव वशं भूय आगन्तासीत्यत्र आगन्तासीति लुटो रूपमिदम्॥

कुम्भकारेण स[2]म्बन्धं कृत्वेत्यत्र सम्बन्धं हस्तेनोद्धृत्य दह्यमानगृहरक्ष-णाख्यसम्बन्धम् ॥

---

[1]ततः क्षण एव. [2]सम्बन्धादित्यत्र सम्बन्धात् हस्तेनोद्धृत्य दह्यमानगृहरक्षणाख्यसम्ब-न्धात् ।

एकात्मना हि धर्मार्थौ कामं च न निषेवत इत्यत्र एकात्मना नियमेन ॥

तदिदं जीवितं प्राप्य कल्पकालमित्यत्र एतावानिति कल्पितः कालः कल्पकालः तम् । त्यागः जीवितत्यागः ॥

तत्र वासो न कारित इत्यत्र तत्र तथापि वासः अन्यत्र वासः ॥

न भोजनं विरुद्धं स्यादित्यत्र यत्र गते सति भोजनं विरुद्धं न स्यात् यः देशः नितरां बध्नातीति निबन्धनः, स्त्रीदेशोपि न, सुदूरमपि तं देशं भोजनानुकूलदेशं गरुडहंसवत् व्रजेदिति योजना ॥

सदा मातृसमां तथेत्यत्र मातृसमां मातृवत्पोषणकर्त्रीम् ॥

न्यासं धात्रा महात्मनेत्यत्र न्यासं स्वगृहे निक्षिप्तपरधनस्थानीयाम् ॥

इति पंचोत्तरशततमोऽध्यायः ।

---

॥ षडुत्तरशततमोऽध्यायः ॥

अहं कृतावलेपैश्चेत्यत्र कृतावलेपैः कृतगर्वैः तव सम्बन्धे अयुक्तैर्नीचैः ॥

नानुरूपमिवात्मन इत्यत्र अनुरूपं यथा न भवतीति क्रियाविशेषणम् ॥

अनिष्टमिह पुत्राणां विषये परिवर्तितुमित्यत्र इह लोके भर्तुर्मरणानन्तरं पुत्राणां विषये पोषणादौ परिवर्तितुं अनिष्टम् ॥

धर्मज्ञान् राक्षसानाहुर्न हन्यात्स च मामपीत्यत्र राक्षसान् धर्मज्ञानप्याहुः । स च बकः तेष्वेकश्चेत् मां न हन्यादिति योजना ॥

धर्मतश्चरितो मयेत्यत्र सार्वविभक्तिकस्तसिरिति वचनात् धर्मतो धर्मः ॥

पुरुषेणोपसर्पिणेत्यत्र पुरुषेण मया उपसर्पिणा परसमीपं गच्छता कारणेन स्त्रियं रक्षेदिति योजना ॥

इति षडुत्तरशततमोऽध्यायः ।

## ॥ अष्टोत्तरशततमोऽध्यायः ॥

तयोर्दुःखितमाकर्ण्येत्यत्र तयोः [1]मातापित्रोः ॥

हरतं व्यसनं मयेत्यत्र इदं व्यसनं मया युवां हरतम् । [2]हृञिति धातोर्लोटि मध्यमपरुषद्विवचनमिदम् ॥

श्रृतान् श्रृतान् पानकुम्भानित्यत्र श्रृतान् श्रृतान् 'श्रृ पाक' इति धातोः पक्वान् पक्वानित्यर्थः ॥

कस्य नाच्छन्दचारिण इत्यत्र ब्राह्मणाः कस्य अच्छन्दचारिणः स्वेच्छाधीनसञ्चाररहिताः न । सर्वस्यापि स्वेच्छाधीनसञ्चाररहिता एव । सर्वोऽपि जनः दुर्बलत्वाद्ब्राह्मणं स्ववशं करोत्येवेति भावः ॥

इत्यष्टोत्तरशततमोऽध्यायः ।

---

## ॥ नवोत्तरशततमोऽध्यायः ॥

न त्विदं केषुचिद्ब्रह्मन् व्याहर्तव्यं कथञ्चन । विद्यार्थिनो हि मे पुत्रान् विप्रकुर्युः कुतूहलात् ॥ गुरुणा चाननुज्ञातो ग्राहयेद्यः सुतो मम। न स कुर्यात्तथा कार्यं विद्ययेति सतां मतमित्यत्र हे ब्रह्मन् इदं मत्पुत्रेण करिष्यमाणं महत्कार्यं केषुचिन्न व्याहर्तव्यम् । व्याहृतं चेत् विद्यार्थिनो मे पुत्रान् कुतूहलात् एतद्बलं द्रष्टव्यमिति कौतुकात् सर्वेऽपि क्षणे क्षणे विप्रकुर्युः महाकार्योपदेशादिना विद्याभ्यासप्रतिबन्धात्स्यमपकारं कुर्युः । यः मम सुतः गुरुणा अननुज्ञातः किञ्चित्कार्यं ग्राहयेत् ग्राहयितुं शक्यः सः विद्यया गुरोर्ज्ञानेन गुरुणा ज्ञाते सतीत्यर्थः । तथा [3]अननुज्ञादशायां यथा तथा कार्यं न कुर्यात् । इति प्रमेयं सतां मतं सम्मतं च । अत इदं केषुचिन्न व्याहर्तव्यमिति पूर्वेणान्वयः ॥

इति नवोत्तरशततमोऽध्यायः ।

---

[1]पितापुत्रयोः. [2]हृञ् धातोः. [3]अज्ञानदशायां.

## ॥ दशाधिकशततमोऽध्यायः ॥

न शेते वसतीः सर्वा इत्यत्र वसति यस्यां सत्यां गृह इति वसतयो रात्रयः ॥

इति दशाधिकशततमोऽध्यायः ।

## ॥ एकादशाधिकशततमोऽध्यायः ॥

वेत्रकीयनिवासिन इत्यत्र वेत्रकीयमिति एकचक्रानगरस्यैव नामान्तरम्॥

इत्येकादशाधिकशततमोऽध्यायः ।

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

जनस्तस्याथ रक्षस इत्यत्र तस्य रक्षसो जनः सेवकजनः ॥

न वै न सम्भवेत्सर्वमित्यत्र महात्मसु ब्राह्मणेषु सर्वं कार्यं न सम्भवेदिति न, सर्वमपि सम्भवेदेवेति योजना ॥

भीतास्समनुबोधना इत्यत्र सं सम्यक् अनु वरदातृवचनादनन्तरं बोधनं अनेन बहुभोजिना ब्राह्मणेन इदं कृतमिति बोधनं येषां ते तथोक्ताः ॥

पशुमद्धिमदित्यत्र पशुमत् भक्षणयोग्यमृगादिपशुमांसवत् ॥

अगच्छन्नेकचक्रां त इत्यत्र ते बहिस्स्थिताः पाण्डवाः ऐकचक्रानगरीमगच्छन् ॥

इति जनावबोधनं नाम द्वादशाधिकशततमोऽध्यायः ।

## ॥ पञ्चदशाधिकशततमोऽध्यायः ॥

(चैत्ररथपर्व १०)

प्रतिश्रयार्थं तद्वेश्मेत्यत्र प्रतिश्रयार्थमावासार्थम् । ब्राह्मणस्य पाण्डवानुकूलब्राह्मणस्य ॥

धृष्टद्युम्नो महेष्वासः कथं द्रोणस्य मृत्युतेत्यत्र यो धृष्टद्युम्नः, द्रोणस्य मृत्युता तस्य कथमिति य(त्व)च्छब्दाध्याहारेण योजना ॥

[1]वसती रात्रिः । 'वसती रात्रिवेश्मनोः' इत्यमरः । [2]एकचक्रां नाम नगरीं.

द्रुपदो नाम वेत्रवत्यां नरेश्वर इत्यत्र वेत्राणि परितो वर्तन्ते यस्यां सा वेत्रवती नगरी तस्याम् ॥

समानीय ततः शिष्यान् द्रुपदस्यासुखाय वै इत्यत्र तत्र पाञ्चालपुर्यां शिष्यान् समानीय सम्यङ्नीत्वा द्रुपदस्यासुखायाब्रवीदिति पूर्वेणान्वयः॥

महेन्द्रमिव दुर्धर्षमित्यत्र महेन्द्रमिव दुर्धर्षं पाञ्चालमिति सम्बन्धः॥

अतः प्रयतितं राज्य इत्यत्र राज्ये तादर्थ्ये सप्तमी । राज्यार्थं प्रयतितं प्रयत्नः कृतः ॥

प्रभावं विनयं शिष्यान् द्रोणस्य चरितानि च । क्षात्रेण च बलेनास्य पराजेतुं हि नाशकदित्यत्र स द्रुपदः द्रोणस्य प्रभावं विनयं शिष्यान् चरितानि च क्षात्रेण क्षत्रसंम्बन्धिना बलेन स्वबलेन अस्य निरस्य पराजेतुं पराभावयितुं नाशकदिति योजना ॥

स बुद्ध्वा बलबुद्धिं त्वित्यत्र बलबुद्धिं तपोबलबुद्धिमन्तं कनीयांसं कनिष्ठं उपयाजं उप समीपे ह्वरे नम्रीभूय तिष्ठामि । 'ह्वर अङ्गकौटिल्य' इति धातुः । इति बुद्ध्वा निश्चित्येति योजना ॥

सोऽहं क्षात्राद्बलाद्धीन इत्यत्र क्षात्रात् केवलं क्षात्रात् ब्रह्मतेजः तव ब्रह्मतेजः प्रपेदिवानिति सम्बन्धः ॥

गुर्वर्थ इति चाकाम इत्यत्र गुरोर्ज्येष्ठस्य याजस्य अर्थः प्रयोजनमिति मत्वा ॥

इति पंचदशाधिकशततमोऽध्यायः ।

---

## ॥ षोडशोत्तरशततमोऽध्यायः ॥

तथा याजेन मे श्रुतमित्यत्र श्रुतं प्रतिश्रुतम् ॥

गच्छेद्वाऽन्यतमं पतिमित्यत्र अन्यतमं तव पुत्रेष्वन्यतमम् ॥

इति ब्राह्मणवचनं नाम षोडशोत्तरशततमोऽध्यायः ।

---

## ॥ सप्तदशोत्तरशततमोऽध्यायः ॥

बृहस्पतिमतेनाथ पौलोम्या च पुरा श्रुतम् । नष्ट इन्द्रो विसग्रन्थ्यामुपश्रुत्या ह दर्शितः ॥ उपश्रुतिर्महाराज पाण्डवार्थे मया श्रुतेत्यत्र वृत्रवधानन्तरं ब्रह्महत्याभयात् विसग्रन्थ्यां कमलनाले नष्टः 'नश् अदर्शन' इति धातोः अदर्शनं प्राप्तः, अत एवेन्द्रो नास्तीति लोके अपवादे च जाते उपश्रुत्या इन्द्रः क्वचिदस्तीत्यशरीरवाण्या दर्शितो ह । इदमुपश्रुतिवचनं बृहस्पतिमतेन पौलोम्या च पुरा श्रुतम् । एवं हे महाराज पाण्डवार्थे जतुगृहे नष्टपाण्डवार्थे उपश्रुतिर्मया श्रुतेति सार्धश्लोकस्य योजना ॥

तत्राप्युत्सवसङ्काश इत्यत्र उत्सवः अस्मन्मनसामुत्सवः तस्य सङ्काशः सदृशः उत्सवो विवाहोत्सवः ॥

ते तत्र विविधादाना विजयार्थं नरर्षभा इत्यत्र विजयार्थं विविधानि आ समन्ताद्दानानि येषां त इति विग्रहः ॥

इति द्रौपदीस्वयंवरे व्यासागमनं नाम सप्तदशोत्तरशततमोऽध्यायः ।

---

## ॥ अष्टादशाधिकशततमोऽध्यायः ॥

लोकनदीं गङ्गामित्यत्र लोकनदीं लोकपावननदीम् ॥

तीर्थं सोमाश्रयायणमित्यत्र सोमाश्रयो रुद्रः स एवायनं शिरसि धर्ता यस्य तत्तथोक्तम् ॥

सन्ध्या संरज्यते घोरा पर्वरात्रागमेषु या । अशीतित्रुटिभिर्हीनान् त्रीन्मुहूर्तान् प्रचक्षत इत्यत्र पर्वरात्रागमेषु अमाष्टम्यादिपर्वरात्रागमेषु घोरा क्रूरा सन्ध्या पूर्वार्धरात्रोत्तरार्धरात्रसन्धौ विद्यमाना या वेला संरज्यते सम्बद्धा भवति । तस्यां निशीथरूपसन्ध्यायां ये त्रिमुहूर्ताः षड्घटिकारूपाः तान् अशीतित्रुटिभिः, त्रुटिपदेन पाणिवादाः कथ्यन्ते । षष्टित्रुटिभिर्मध्यस्था एका घटिका तस्याः पूर्वं दश त्रुटयः पश्चाच्च दश त्रुटयः, एवमशीतिसंख्याकत्रुटिकालैः करणैः हीनान् अत्यन्तहीनान् त्रीन् मुहूर्तान् प्रचक्षते । घटिकाषट्क-

मध्ये आदौ घटिकाद्वयं विंशतित्रुटयः, अन्तेऽपि घटिकाद्वयं विंशतित्रुटयश्च घोरा एव। तत्रापि मध्ये उर्वरिता या अशीतित्रुटिपरिमिता वेला सा त्वत्यन्तं घोरेति भावः। यदा अशीतित्रुटिभिर्हीनान् न्यूनान् त्रीन्मुहूर्तान् पादत्रयाधिक-घटिकाचतुष्टयात्मकान् ॥

न कौणपाः शृङ्गिणो वेत्यत्र कौणपाः राक्षसाः। 'नक्तञ्चरा नैर्ऋतकाः कौणपकाः कैकसेयाः स्युः' इति हलः ॥

कस्य कूसः परिग्रह इत्यत्र परिग्रहः कस्य कूसः अस्यैवेति नियमितः न कस्यापि। किन्तु सदा सर्वेऽपि सञ्चरन्तीत्यर्थः ॥

अनाश्चर्यमसम्बाधमित्यत्र न विद्यते आश्चर्यं यस्मात्तदनाश्चर्यम्। असम्बाधं केनापि नेति सम्बाधयितुमशक्यम् ॥

जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारवर्णताम्। यशोहीनं न च श्लाघ्यं स्वनाम्ना जनसंसदि ॥ साधिदं लब्धवान् लाभं यो मे दिव्यास्त्र-धारिणम्। गान्धर्व्या मायया योद्धुं दिशाम्यस्त्रं परावरमित्यत्र त्वया जितः अहं जनसंसदि न श्लाघ्यं यशोहीनं च चित्ररथ इति पूर्वकं नाम मुञ्चामि। त्वदस्त्रेण दग्धरथस्य मम चित्ररथत्वं हास्यमिति भावः। स्वनाम्ना अङ्गारवर्णतां अङ्गारवर्णाख्यतां न मुञ्चामीत्यर्थानुसारा(न्नञ)न्नाध्याहारेण क्रियावृत्तिः। साधिदं आधिना सहितं सुखं साधि तत्प्रदमित्यर्थः। लाभं लब्धवानसि। तमेव लाभं विशिनष्टि। दिव्यास्त्रधारिणं गन्धर्वादिकं गान्धर्व्या मायया योद्धुं परावरं पराण्यस्त्राण्यवराणि यस्मात्तत्परावरं तादृशमस्त्रं तुभ्यं दिशामीति यो मे लाभः तं लाभं लब्धवानसीति पूर्वेणान्वयः। इच्छामीति पाठे अस्त्रं दातुमिच्छामीति यो लाभ इति योजना ॥

तत्पश्येद्यादृशं रूपं तादृशं द्रष्टुमर्हतीत्यत्र तत् त्रिषु लोकेषु द्रष्टुमभीप्सितं वस्तु। पश्येदित्युक्तं दर्शनं मर्त्यादीनां घटादिदर्शनमिव न सामान्यतः; किन्तु पल्परिमाणादिना यादृशं रूपं तत्तद्वस्तुस्वरूपं तादृशं द्रष्टुमर्हतीति योजना ॥

'तादृशं द्रष्टुं वस्तुस्वरूपं द्रष्टुमर्हतीति योजना

समानपादः षण्मासानित्यत्र समानौ पादौ यस्य स तथोक्तः तादृशः सन् स्थितः तपसि स्थितः ॥

क्षीणे क्षीणे भवन्त्यन्य इत्यत्र अन्ये वाहाः एतेषामग्रे क्षीणे क्षीणे वेगे भवन्ति । एते तु रंहसः न हीयन्ते ॥

लोके यत्साधनं किञ्चिदित्यत्र साधनं श्रेयस्साधनम् ॥

वैश्यवज्रं तु वै सीरमित्यत्र सीरं लाङ्गलम् ॥

इति अंगारवर्णविजयो नाम अष्टादशाधिकशततमोऽध्यायः ।

---

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥

स्त्रीसकाशे च कौरव्य न पुमान् क्षन्तुमर्हति । धर्षणामात्मनः पश्यन् बाहुद्रविणमात्मन इत्यत्र आत्मनः धर्षणां धिक्कारं आत्मनः स्वस्य बाहुद्रविणं बाहुपराक्रमं च पश्यन् न क्षन्तुमर्हतीति पूर्वेणान्वयः ॥

सोऽहं त्वयेह विजितः सखे तापत्यनन्दनेत्यत्र तपती नाम सूर्यतनया संवरणपत्नी, तस्याः पुत्रः कुरुः तापत्यः, तस्य नन्दन तापत्यनन्दन कुरुनन्दनेत्यर्थः ॥

तस्मात्तापत्य यत्किञ्चिदित्यत्र तापत्यकुलोत्पन्नत्वात्तापत्येत्यर्जुनस्य सम्बुद्धिः ॥

इति अंगारवर्णधर्षणनिमित्तकथनं नाम एकोनविंशत्यधिकशततमोऽध्यायः ।

---

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

स सोममति कान्तत्वादित्यत्र कान्तत्वात्कान्त्याख्यगुणवत्त्वात् सोममति अतिक्रम्य वर्तते ॥

श्रीमानुरुहयो भुज इत्यत्र 'अर्श आदिभ्योऽच्' इति वचनात् भुजः प्रशस्तभुजवान् ॥

---

¹तपतीकुलोत्पन्नत्वात्.

ससवृक्षलतागुल्महिरण्मय इवाभवदित्यत्र सवृक्षलतागुल्मैः सह हिरण्मये गिरिप्रस्थे स्थितेचाभवदिति योजना । सुवर्णोपमतदङ्गकान्त्या वृक्षलतादिकमपि सुवर्णोपममासीदिति भावः ॥

न च भोगवतीं मन्य इत्यत्र भोगवतीं देवैः सह भोगवतीमप्सरस्त्रियम् ॥

इति तापत्याख्याने तपतीदर्शनं नाम विंशत्यधिकशततमोऽध्यायः ।

---

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

यथा हि ते मया प्राणाः सम्भृताश्च नरेश्वर । दर्शनादेव भूयस्त्वं तथा प्राणान् ममाहरेत्यत्र यथा दर्शनात् (एव) ते प्राणा मया सम्भृताः तथा मम प्राणान् त्वमप्याहर रक्ष । त्वदुत्कामोद्रेकेण मरणाभावेऽपि पितुराज्ञोल्लङ्घने सति ममापि मरणं स्यात् । अतः पितुराज्ञां सम्पादयेति भावः ॥

इति एकविंशत्यधिकशततमोऽध्यायः ।

---

## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

नक्तं दिनमथैकस्थ इत्यत्र एकस्थे एकस्मिन् तपतीलाभ एव स्थित एकस्थः तस्मिन् । स्थिते सूर्यप्रार्थनां कृत्वा गिरिशृङ्गे स्थिते सतीत्यर्थः ॥

योजनानां तु नियुतमित्यत्र नियुतं लक्षम् ॥

इति तापत्योपाख्याने आदित्योपस्थाने द्वाविंशत्यधिकशततमोऽध्यायः ।

---

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

दुहितुस्ते विहङ्गमेत्यत्र विहायसि गच्छतीति विहङ्गमः सूर्यः ॥

किमन्यत्रापसर्जनादित्यत्र अपसर्जनाद्दानात् ॥

कृच्छ्राद्द्वादशरात्रेषु तस्य राज्ञः समाहिते इत्यत्र द्वादशरात्रेषु गतेषु सत्सु तस्य राज्ञः समाहिते समाधानाय । तादर्थ्ये सप्तमी ॥

तत्क्षुधार्तैर्निरानन्दैरित्यत्र तत् पुरमित्यर्थः ॥

ततः प्रहृष्टस्तत्रासीद्यथाकालं सुरारिहेत्यत्र ततः राज्ञः पुरप्रवेशात् प्रहृष्टः सुरारिहा इन्द्रः तत्र राष्ट्रे यथाकालं कालमनतिक्रम्य आसीत् । यस्मिन् काले वृष्टिर्देया तस्मिन्नेव काले ददाविति भावः ॥

ततस्तु राष्ट्रं मुमुद इत्यत्र ततस्तस्माद्राज्ञ इत्यर्थः ॥

इति त्रयोविंशत्यधिकशततमोऽध्यायः ।

॥ तापत्योपाख्यानं समाप्तम् ॥

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

अजितावेतौ नरव्याघ्रेत्यत्र यैः एतावजितौ तेषां ते पूर्वोक्ताः अरिप्रभृतयः सर्वे अजिता एव ॥

इति पुरोहितान्वेषणं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ।

## ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

बाष्पाढ्यस्येत्यत्र बाष्पाढ्यस्य उष्णेन सहितस्य । 'ऊष्मा बाष्पः स्फुलिङ्ग' इति हलायुधः । ओदनस्येति सम्बन्धः ॥

निष्ठानानि च सूपांश्चेत्यत्र नितरां स्थानानि पात्राणि येषां तानि निष्ठानानि । बहुपात्रेषु बहुधा रचितानि व्यञ्जनानीति यावत् । सूपान् केवलं मुद्गादिभिरेव कृतशाकान् ॥

गौड्यान्नानि सहस्रश इत्यत्र गौड्यान्नानि गुडमिश्रपरमान्नादीनि ॥

षडुन्नतां सुपार्श्वोरुं त्रिपृथुं पञ्चसंवृताम् । मण्डूकनेत्रां स्वाकारां पीनौधसमनिन्दिताम् ॥ सुवालधिं शङ्कुकर्णीं चारुशृङ्गां मनोरमाम् । अष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य तामित्यत्र 'उरुः पृष्ठं ललाटं च ककुच्छ्रोण्यथ नासिका । गवां षडुन्नतानि स्युः' इति वचनात् उर्वादिषडवयवैरुन्नताम् । त्रिपृथुं 'ललाटपृष्ठनेत्राणि त्रिविस्तीर्णानि वै गवाम्' इति वचनात्

ललाटपृष्ठनेत्राख्यावयवत्रये विस्तीर्णाम् । 'जिह्वादशननासाश्च योनिस्तद्वत्खुराणि च । संवृतानीह शस्तानि पञ्चस्थानानि वै गवाम्' इति वचनात् नातिविस्तृतजिह्वादशननासायोनिखुराख्यस्थानपञ्चकाम् । मण्डूकनेत्रां मण्डूकनेत्रवत् उत्तुङ्गनेत्राम् । 'घोणा सास्ना मुखं पुच्छं शस्तानि चरणानि च । गुह्यं ग्रीवा तथाऽऽकार आयतान्यष्ट वै गवाम्' इति वचनात् अष्टायताङ्गसहितशिरोग्रीवावतीम् । उत्तमगोलक्षणपूर्णामित्यर्थः ॥

विश्वामित्रतपोद्विग्नेत्यत्र विश्वामित्रेण क्रियमाणस्तपः सन्तापः तेन उद्विग्ना ॥

इति नन्दिनीमाहात्म्यं नाम पंचविंशत्यधिकशततमोऽध्यायः ।

---

## ॥ षड्विंशत्यधिकशततमोऽध्यायः ॥

ततो याज्यनिमित्तं तु इत्यत्र याजयितुं योग्यो याज्यो यजमानः त्रिशङ्कुः ॥

तं तु विश्वामित्रोऽन्वविन्दतेत्यत्र तं शक्तिना शप्तं कल्माषपादम् ॥

ददर्श स द्विजः कश्चिद्राजानं पुनरागतम् । अयाचत्क्षुधितश्चैनं समांसं भोजनं तदेत्यत्र आगतं तमेव राजानं सः तेनैव मार्गेणागतः पुनः कश्चिद्द्विजः ददर्श । समांसं मांसेन सहितं भोजनं अयाचत् ॥

एवमुक्तस्तदा सूदः संस्थानं वध्यघातिनः । गत्वा जहार त्वरितं नरमांसमपेतभीरित्यत्र वधयोग्यानां चोरादीनां घातिनः पुरुषस्य यत्संस्थानं चोरशिक्षाभूमिः, तद्गत्वेति योजना ॥

भविष्यत्यत्र लोलुप इत्यत्र अत्र नरमांसे लोलुपः स्वभावो भविष्यतीति योजना ॥

इति षड्विंशत्यधिकशततमोऽध्यायः ।

---

## ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

पुरुः कस्यैष साङ्गस्येत्यत्र पुरुः सम्पूर्णः । 'पुरुहः पुरु भूयिष्ठं स्फीतं भूयश्च भूरि च' इत्यमरः ॥

राक्षसाद्भक्षितुं यावद्यत्नमेतच्चिकीर्षतीत्यत्र एतच्छब्दस्य रक्ष इत्यर्थो ग्राह्यः ॥

एतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितमित्यत्र यस्माद्भयमुपस्थितं, एतद्रक्षो न पश्यसीति सम्बन्धः ॥

ऋतावथ महर्षिस्तु सम्बभूव तया सहेत्यत्र सम्बभूव सङ्गतो बभूव ॥

परासुत्वमयन् येन वसिष्ठस्थापितस्तदा । गर्भस्तेन ततो लोके पराशर इति स्मृत इत्यत्र येन कारणेन परासुत्वं मृतत्वं अयन् कल्माषपाद-भयेन प्राप्नुवन् स गर्भः वसिष्ठस्थापितः वसिष्ठेन स्थापितः, तेन कारणेन तत आरभ्य पराशर इति स्मृतः । परेण उत्तमेन वसिष्ठेन 'शृ हिंसायाम्' इति धातोः अशरः अहिंसा रक्षणं यस्य । परासुः सन् रक्षित इति वा पराशरः । निरुक्तत्वात्सकारस्य शकारः उकारलोपश्च ॥

मा तात तात तातेतीत्यत्र हे तात पुत्र पितामहेऽस्मिन् तात तातेति शब्दो मा माऽस्तु इति योजना ॥

इति औरर्वोत्पत्तिर्नाम एकोनत्रिंशदधिकशततमोऽध्यायः ।

---

## ॥ त्रिंशदधिकशततमोऽध्यायः ॥

मनप्रवणमात्मन इत्यत्र आत्मनः परमात्मनः मने मनने प्रवणं नम्रं मन इति पूर्वेणान्वयः । 'मनु अवबोधन' इति धातोः पचाद्यचि कृते मनमेव मननम् ॥

नानीशैर्हि तदा तातेत्यत्र अनीशाः असमर्थाः न भवन्तीति नानीशाः तैः अतिसमर्थैरित्यर्थः ॥

आयुषा हि प्रकृष्टेन यदा नः खेद आविशत् । तदाऽस्माभिर्वधो घोरः क्षत्रियैरीप्सितः स्वयमित्यत्र यदा प्रकृष्टेन मृत्युना प्रकर्षादाकृष्टेन आयुषा कारणेन नः अस्मान् खेदः धनाभावनिमित्तकदुःखं आविशत् । आयुः-क्षयकाले निराशानामप्यस्माकं धनाभावनिमित्तकदुःखाद्धनेष्वाशा जातेति भावः । तस्मादस्माभिर्निमित्तैः अस्मदर्थमिति यावत् । क्षत्रियैः स्वयं स्वकरणैव

अत एव घोरः वधः ईप्सितः । सधनानस्मान् हत्वा असद्धनमाहराम इति बुद्धिर्जातेति भावः ॥

निखातं तद्धि वै वित्तमित्यत्र निखातं सत् चिराय न्यस्तमिति सम्बन्धः॥

यदा हि मृत्युरायाति न शक्नोति च सर्वश इत्यत्र यदा मृत्युरायाति तदा सर्वशः सर्वो जनः न शक्नोति मृत्युदत्तां बुद्धिमत्येतुं न शक्नोतीत्यर्थः ॥

उपायस्तात धर्मत इत्यत्र धर्मतः मृत्युरूपयमात् तत्प्रेरणयेत्यर्थः । अयमुपायः धननिक्षेपाख्योपायः दृष्टः । अन्यथा 'आत्महा तु पुनस्तात न लोकान् लभते शुभान्' इत्युत्तरार्धविरोधः ॥

ततोऽस्माभिः समीक्ष्यैवमात्मनाऽऽत्मा विनाशित इत्यत्र ततः कारणात् अस्माभिरेव आत्मना स्वप्रयत्नेन आत्मा देहो विनाशितः । एवं इदं समीक्ष्य पापात्मनो नियच्छेत्युत्तरेणान्वयः ॥

न हि निःक्षत्रिया इत्यत्र निःक्षत्रियाः राजरूपक्षत्रियरहिता इत्यर्थः॥

दूषयन्ति च नस्तेज इत्यत्र क्षत्रियाभावे चोरराक्षसादिभिराक्रम्यमाणा लोकाः नस्तेजः तपस्सामर्थ्यं धिगिति दूषयन्तीति भावः ॥

इति त्रिंशदधिकशततमोऽध्यायः ।

---

## ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥

राजभिश्चेतरैश्चैव यदि वै पितरो मम । शक्तैर्न शङ्कितास्त्रातुमिष्टमवेह जीवितमित्यत्र मे पितरः शक्तै राजभिरितरैर्वा त्रातुं यदि न शङ्किताः शङ्काविषया न भवन्ति, किन्तु निश्शङ्कं रक्षिता एव भवन्ति तर्हि इह लोके मम जीवितमिष्टम्; अन्यथा नेष्टमिति भावः ॥

न चैव सामरा लोका भविष्यन्ति पराभवमित्यत्र 'भू प्राप्तौ' इति धातोः पराभवं न भविष्यन्ति न प्राप्स्यन्तीत्यर्थः ॥

इति और्वकोपाग्निविसर्जनं नाम एकत्रिंशदधिकशततमोऽध्यायः ।

## ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥

द्वितीयामस्य मा जघ्न इत्यत्र अस्य पराशरस्य द्वितीयां लोकसंहारकालीनप्रतिज्ञोत्तरकालीनां स्वपितृद्रोहिराक्षससंहारप्रतिज्ञां मा जघ्ने न हन्मि। कर्तरि लिट आत्मनेपदे उत्तमपुरुषस्य रूपमिदम् ॥

शक्तिनं चापि धर्मज्ञेत्यत्र शक्तेः शक्तीत्यपि नामास्तीति ज्ञेयम् ॥

शापाद्धि शक्तेर्वासिष्ठेत्यत्र तदा स्वस्य मार्गाप्रदानसमये कल्माषपादं प्रति पुरुषादो भवेति शापे शक्तेरपि पुरुषत्वान्नृपतिस्तमेव भक्षितवान्। हे धीमन् पराशर त्वयैव केचिद्राक्षसाः सत्रेण[1] निहताः। अतस्तव पितरस्ते ऋषयः अशक्ता न हि। तस्मात्त्वतपसा तव[2] पितरि शापं स्वभक्षणसमये त्वमेव नष्टो भवेति शापं न कुर्वेति सति तदा तद्रक्षः यान् मुनीन् भक्षयते ते मुनयः वैगस्यात्[3] नरवारणा हि नरान् वारयन्तीति नरवारणाः। पुरुषादो भवेति प्राक् शक्तिना कल्माषपादस्य शापे दत्तेऽपि न तेन पुरुषा भक्षिताः। किन्तु विश्वामित्रप्रेपितरक्षसैव भक्षिताः। अतस्तत्र स्वस्य हिंसादोषाभावात् कशाताडनदुःखमूर्च्छितस्तं शापं दैववशाद्दत्तवान्। इह तु त्वं मे नष्टो भवेति शापे साक्षात्स्वस्यैव हिंसादोषप्राप्तेः शक्तिरपि न शशाप। तदनुजाश्च वसिष्ठपुत्रा न शेपुरिति हृदयम् ॥

क्षमावन्तमित्यत्र मुनिः देहं क्षमावन्तं कृत्वा अहंमन्युं अहङ्कारजनितं कोपमेव ध्रुवं दहेदिति मत्वा शक्तौ शापं न कुर्वेति सति ततः अनन्तरं आत्मनैव स्वहन्तरि क्षमाकरणाख्यात्मापराधेनैव आत्मनः तेन राक्षसेन[4] तदा मृत्युर्मरणमभवदित्यन्वयः ॥

रक्षसां च समुच्छेद इत्यत्र एष यागः तपस्विनां रक्षसां च समुच्छेदः। सर्वराक्षसाह्वाने राक्षसयोनौ जातानां सज्जीवानामपि आगमनेन नाशः स्यादिति भावः ॥

इति राक्षससत्रं नाम द्वात्रिंशदधिकशततमोऽध्यायः।

---

[1] सत्रे. [2] भवत्पितरि. [3] वाग्बलात्. [4] राक्षसेनैव न तदा मृत्युर्मरणमभवदित्यन्वयः.

## ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

(स्वयंवरपर्व ११)

पार्था योज्या इत्यत्र योज्या नियोज्याः शिष्याः वृताः शिष्यत्वेन वृता इत्यर्थः। तेनैव सहिताश्च पाण्डवा राज्यं प्राप्तं मेनिर इति योजना ॥

[1]येन वैतालिकास्तत्रेत्यत्र वैतालिकाः वेतालवद्विनोदं कुर्वन्तो जना वैतालिकाः ॥

इति द्रौपदीस्वयंवरे पंचत्रिंशदधिकशततमोऽध्यायः।

---

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

द्रुपदक्षयं 'निवेशः शरणं क्षय' इत्यभिधानात् क्षयं गृहम् ॥

स्कन्धावारं च पाण्डवा इत्यत्र स्कन्धावारं चित्रकम्बलपटकुड्यादिभिर्विरचितं राज्ञां [2]सेनासन्नाहम् ॥

अनायम्यं आ सम्यक् ईषदपि वा यमयितुं नम्रीकर्तुमशक्यं अनायम्यम् ॥

वैहायसं आकाशे रचितं काञ्चनं 'अञ्चु गतिपूजनयोः' इति धातोः के जले अञ्चति गच्छतीति काञ्चनं मत्स्यम्। गत्यर्थानां च ज्ञानार्थत्वात् के उदके अञ्चनं अवगतिर्यस्येति काञ्चनमित्यर्थः ॥

समाजवाटः शुशुभ इत्यत्र समाजस्य स्वयंवरद्रष्टृराजसमुदायस्य वाटः स्थानम्। 'अस्त्री वितानमुल्लोच' इत्यभिधानात् वितानेन उल्लोचेन उपरिकृतपटालङ्कारेणेत्यर्थः ॥

अग्राम्यसमवच्छन्नैरित्यत्र ग्राम्याः स्त्रीलम्पटाः ते न भवन्तीत्यग्राम्याः तैः सम्यगवच्छन्नैः आच्छादितैः पूर्णैरित्यर्थः ॥

ससम्बाधपथद्वारैरित्यत्र गन्त्रागन्तृगजतुरगादिभिः सम्बाधसहिता मार्गा द्वाराणि च येषां ते तथोक्ताः ॥

---

[1] ये च [2] सेनासंस्थानम्.

वीरकांस्यमुपादायेत्यत्र काञ्चनं सुवर्णमयं वीरकांस्यं वीरा एव वीरकाः अध्यवसितान्तगामिनः, स्वयंवरकृतलक्ष्यवेधिन इति यावत्। तेषामंसस्य योग्यं माल्यं वीरकांस्यं उपादाय कराभ्यां गृहीत्वा ॥

खगमैरित्यत्र खं आकाशं गच्छन्तीति खगमाः शराः तैः दशार्धैः पञ्चभिः ॥

एतत्कृत्वेत्यत्र सुखेन कर्तुमशक्यं सुदुष्कृत् कर्म अत्र राज्ञां मध्ये यः कर्तेति सम्बन्धः ॥

इति द्रौपदीस्वयंवरे षट्त्रिंशदधिकशततमोऽध्यायः।

॥ अष्टत्रिंशदधिकशततमोऽध्यायः ॥

सङ्कल्पजेनेत्यत्र सङ्कल्पजेन कामेन ॥

व्यायच्छमाना इत्यत्र व्यायच्छमानाः विशेषेण आ समन्ताद्द्रव्यदातारः ॥

इति द्रौपदीस्वयंवरे सज्यकर्मप्रतिवर्तनं नाम अष्टत्रिंशदधिकशततमोऽध्यायः।

॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

इन्द्रकेतुमित्यत्र इन्द्रकेतुं इन्द्रध्वजम् ॥

विद्विषतामित्यत्र लोके विद्विषतां महीक्षितां मध्ये न गमिष्यामः। गन्तुं च न शक्नुम इति योजना ॥

हीनलोकमिव द्विजा इत्यत्र सूर्यचन्द्राभ्यां हीनं लोकं द्विजाः नक्षत्राणीव ॥

स्वभावरूपाऽपि न[1] चेव नित्या विनाऽपहासं हसतीव कान्त्येत्यत्र स्वभावरूपाऽपि नित्या तेन रूपेण नित्या नेव न भवतीव तिष्ठति। स्वलावण्यमाच्छाद्य स्थितेत्यर्थः ॥

[1]च नेव.

वरमाल्यदामेत्यत्र वरमाल्यदाम श्रेष्ठमाल्यस्य तन्तुम् ॥

क्षत्रमहीयतेत्यत्र अहीयत हीनं बभूव ॥

इति द्रौपदीस्वयंवरे लक्ष्यनिपातनं नाम एकोनचत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥

नेह किञ्चिदित्यत्र किञ्चिदुद्दिश्येति शेषः ॥

यमराष्ट्राणीत्यत्र प्रेषयाम इति योग्यपदाध्याहारः ॥

नैष वध्यः कथञ्चनेत्यत्र एष ब्राह्मणः कथञ्चन वध्यो न वर्द्धयितुं योग्यो न । किन्तु घातनीय इत्यर्थः ॥

ब्राह्मणार्थं च नो राज्यमित्यत्र अस्माकं राज्यं ब्राह्मणार्थं नो न भवतीत्यादियोजना ॥

अवमानभयादित्यत्र अवमानभयात् अस्माकं सम्बन्धी यो ब्राह्मणावमानः तस्य भयात्, अस्माकं रोषाद्वा । स्वधर्मपरिरक्षणात् स्वेषां ब्राह्मणानां यो धर्मः स्वयंवरार्थमुद्योगाकरणं तस्य परिरक्षणात् । अस्मदवमानभीत्या वा अस्मद्रोषभीत्या वा ब्राह्मणैः स्वयंवरार्थमुद्योगे अकृते सतीति भावः ॥

पार्थस्य पार्थ इत्यत्र पृथापुत्रत्वात्पार्थो भीमः ॥

मत्तर्षभगजेन्द्रगामीत्यत्र ऋषः ऋषभः ॥

राज्ञां विकार इत्यत्र विकारे विविधाकारे अस्त्रशस्त्रप्रहारे तरसा वेगेन वृक्षं विरुज्य उत्पाट्य सहसा सहनशक्त्या अनिवृत्तः पराङ्मुखो नाभूत ॥

योऽसौ पुरस्तादित्यत्र कमलायताक्ष्याः द्रौपद्याः धनुर्महात् धनुर्व्यापारस्योपरि क्रियमाणमालादानाख्योत्सवात् पुरस्ताद्विनिस्सृतः विनिर्गतः ॥

तमब्रवीत्तोयदनिर्मलाभ इत्यत्र तोयदः प्राग्दत्तोदकः शुभ्रो मेघः ॥

इति द्रौपदीस्वयंवरे चत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

करकान् मृण्मयकमण्डलून् । 'कमण्डलौ च करक' इत्यमरः ॥

शुल्कावाप्तमहारथ इत्यत्र शुल्केन वीर्यशुल्केन अवाप्तः आनीय दत्तो महारथो यस्य स तथोक्तः । यद्वा लक्ष्यवेधस्य समये कृतवीर्यशुल्केन अवाप्ताः प्रतिभटत्वेनागताः महारथाः राजानो यस्य स तथा ॥

वासिताहेतोरित्यत्र प्रथमर्तुमती करिणी वासिता ॥

कृते प्रतिकृतं पश्येत्यत्र कृते त्वया कृते कर्मणि मया तत्प्रतिकृतं कर्म पश्येत्यर्थः ॥

सैन्यास्तमभिपूजयन्नित्यत्र सेनायां समवेताः सैन्याः ॥

त्वं धनुर्वेदः किं धनुर्वेद एव मूर्तिमानेवागत इत्यर्थः ॥

कुन्तीसुतौ तौ परिशङ्कमान इत्यत्र परितः शङ्का येषां ते परिशङ्काः सर्वे राजानः तान् मानः मानयन्, प्रियोक्त्या रञ्जयन्नित्यर्थः ॥

रौरवाजिनवासिभिरित्यत्र 'सारङ्ग ऋष्यः पृषतो रुरुश्च' इत्यभिधानात् रुरोः कृष्णमृगस्याजिनेषु वासो येषां ते तथोक्ताः तैः ब्राह्मणैः कृष्णा हृता इति ब्रुवन्तः प्रययुरिति सम्बन्धः ॥

कृच्छ्रेण जग्मतुस्तत्रेत्यत्र कृच्छ्रेण पुनरपि युद्धं नाभूदिति मनःकृच्छ्रेण तत्र ब्राह्मणसमीपे ॥

इति द्रौपदीस्वयंवरे पाण्डवविजयो नाम एकचत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

भार्गवकर्मशालामित्यत्र 'भार्गवस्य निवेशनम्' इत्यादिना सर्वज्ञेन ग्रन्थकृता व्यासेन बहुशः कुम्भकारे भार्गवपदप्रयोगात् भार्गवः कुम्भकारः । बिभर्ति भाण्डभारं, गच्छति, गृहे गृहे वापयति प्रापयति च तत्तदपेक्षितपात्राणीति च योगेन वा भार्गवः कुम्भकारः । 'कुलालो भार्गवश्चैव कुम्भकारो निगद्यत' इत्यनुशासनाच्च ॥

कुटीगता सेत्यत्र 'गेहं कुटी मन्दिरम्' इत्यनुशासनात् कुटीगता गृहान्तस्स्थिता ॥

इति द्रौपदीस्वयंवरे द्विचत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

मा मां नरेन्द्र इत्यत्र हे नरेन्द्र मा इदं वाक्यं माऽस्तु । मां अधर्मराजं कृत्वा त्वमेव धर्मः धर्मराजो न न भव । अयं उपरि वक्ष्यमाणः पक्षः अन्यैः सर्वैः ईप्सितः । निवेश्यः विवाह्यः ॥

भवतश्च सर्वे इत्यत्र सर्वे वयं भवतः [1]भवदधीनाः ॥

ज्येष्ठस्य भ्रातुरिति सम्बन्धः ॥

भारतमुख्य जनमेजय ! ॥

निहितं यद्गुहायामित्यत्र गुहायां हृदयगुहायां निहितं यद्वस्तु नारायणाख्यं तस्माद्भद्रं वः अस्त्वित्यर्थः ॥

अतोऽग्र्यमादायेत्यत्र अतः भिक्षान्नात् अग्र्यं अग्र्यभागं आदाय बलिं श्वचण्डालपतितभूतवायसादीनां बलिं कुरुष्व । विप्राय भिक्षां च देहीति योजना ॥

ततस्तु शेषमित्यत्र शेषमन्नं अर्धं समस्तान्नादर्धं चतुर्णां चतुर्धा; मम, आत्मनस्तव च द्वेधा; एवं षोढा विभागं कृत्वा षण्णां [2]ददीहि । उर्वरितमर्धं एकस्मै भीमाय देदीहि ॥

इति चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

अगस्त्यकान्तां दिशं दक्षिणां दिशमित्यर्थः । कुन्ती निद्रार्थिनी बभूव । सा पाण्डुपुत्रैः सह पुरस्तात् तेषां दक्षभागे अशेत शयनं कृतवती । तत्रैव या कृष्णा बभूव साऽपि पादोपधानेव तेषां पादा एव उपधानमुपबर्हणं यस्याः

---

[1]त्वदधीनाः　[2]ददाहि

सा। पादोपर्येव शिरो न कृतवती। किन्तु तत्समीप इति सूचनाय इवशब्दः। कुशेषु कृता कृतास्पदा सती अशेत। गार्हस्थ्यधर्मशिक्षणार्थमिदमुक्तमिति ज्ञेयम्॥

न तत्र दुःखं च समाससादेत्यत्र स्वगृहे राजान्नभोजनपर्यङ्कशयनादिना हृष्टाऽपि तत्र कुम्भकारशालायां भिक्षान्नभोजनकुशशयनादिना दुःखं नाप। दरिद्रा मे पतय इति तान् कुरुपुङ्गवान्नावमेने च॥

इति पंचचत्वारिंशदधिकशततमोऽध्यायः।

---

## ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥
### (वैवाहिकपर्व १२)

धृष्टद्युम्नः सोमकानामित्यत्र हे राजन् ते चित्तं यथा तथैव तेन लक्षवेधिना पुरुषेण कृष्णा हृतेति योजना। वृत्तं यथेति पाठे स्पष्टोऽर्थः॥

प्रहृष्टमारुज्येत्यत्र प्रहृष्टं पल्लवितमित्यर्थः। आरुज्य उन्मूल्य॥

भिक्षां च तत्रैव निवेद्य कृष्णामित्यत्र कृष्णां भिक्षां कृष्णारूपभिक्षाम्॥

ब्राह्मणसाच्च कृत्वेत्यत्र ब्राह्मणसात् ब्राह्मणाय योग्यं भागम्॥

वैश्यशूद्रौपयिकीः वैश्यशूद्रोपयुक्ताः। 'युक्तमौपयिकं लभ्यम्' इत्यमरः॥

तथाऽवदन्नेवेत्यत्र तथैव अवदन्निति योजना॥

विद्याम युष्मानित्यत्र हे पाण्डुसुताः युष्मान् वयं विद्याम वेदितुमाशास्महे। यूयं पाण्डुसुताः स्थ कच्चित् इति भाषमाणः त्वं गच्छेति पुरोहितं प्रेषयामासेति पूर्वेणान्वयः॥

हर्षस्य नान्तं परिवस्यते हेत्यत्र हर्षस्यान्तं न परिवस्यते न पर्यवस्यते, न निश्चिनोतीत्यर्थः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनात् अत्राप्यकारलोपः॥

तस्यैष कामो दुहिता ममेयमित्यत्र इयं दुहिता यदि तस्य कौरवस्य

स्नुषा स्यात्तर्हि इयं मम दुहितैव, एष मम कामः । सङ्कल्पोऽपि काम एव। अन्यथा उभयमपि व्यर्थमिति भावः ॥

भीमस्तथा च कृतवानित्यत्र हे ब्राह्मण त्वं पूजां गृहाण गृहाण इत्युक्त्वा तां पूजां तथा ज्येष्ठोक्तप्रकारेण कृतवांश्चेति योजना ॥

पाञ्चालराजेनेत्यत्र स्वधर्मदृष्टेन स्वधर्मतया पूर्वजैर्दृष्टेन स्वयंवरेण यथानुकामं यथेच्छं सुता द्रौपदी निसृष्टा लक्षवेधिना पुरुषेण नेतव्येत्याज्ञप्तेत्यर्थः ॥

प्रदिष्टशुल्केत्यत्र प्रदिष्टं दत्तं शुल्कं द्रुपदोक्तलक्षवेधात्मकं द्रव्यं यस्याः सा । 'निर्दिष्टं वस्तु शुल्कं स्यात्' इति हलः । तेन वीरेण लक्षवेधिना वीरेण तथा यथोक्तं राज्ञा तथा कृत्वा अनुवृत्ता स्वात्मानमनुसृत्य वर्तमाना कृता ॥

तत्र स्वयंवरनिरूपणसमये वर्णेषु ब्राह्मणादिवर्णेषु विवक्षा क्षत्रिय एव भवेदिति वक्तुमिच्छा न कृता । जीवशिल्पे लक्षवेधिना जीवेन कर्तव्ये कार्यान्तरे विवक्षा न कृता । कुले च न कृता । गोत्रे च न कृता इति सम्बन्धः ॥

सुप्राप्तरूपां सुष्ठु प्राप्तः रूपः अनुरूपः वरो यया सा ताम् ॥

न चापि तत्पातनमन्यथेत्यत्र अन्यथा द्रौपदीवरणयोग्यं समर्थं क्षत्रियं विना ॥

इति षट्चत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

जन्यार्थमन्नमित्यत्र वरेण सहागतजनानां निवासयोग्यं गृहं जन्यं, जन्यार्थं जन्यगृहे स्थितजनभोजनार्थम् । मध्यमपदलोपी समासः ॥

एतान् समारुह्येत्यत्र यूयं सर्वे पुरा पुरतः इत गच्छत ॥

इति सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

ब्राह्मेण ब्राह्मणयोग्येन परिग्रहेण पूजोपयुक्तद्रव्येण परिगृह्य पूजयित्वा ॥

देवसन्दर्शनार्थिन इति पाठे देवो देवनं विवाहक्रीडा । अबलान् स्वयमेव ज्ञातुं युक्तिबलरहितान् ॥

इष्टापूर्तं न च तथेत्यत्र तथा सत्यवत् इष्टापूर्तं च न शोभते । अतः अनृतमवक्तव्यं भवेत् । वक्तव्यमनृतं न त्विति पाठे स्पष्टोऽर्थः ॥

यत्र कृष्णा प्रतिष्ठितेत्यत्र यत्र येषु कृष्णा प्रतिष्ठिता ते वयमिमे इत्यर्थः ॥

सर्वेषामानुपूर्व्येण यातं तैरनुयामह इत्यत्र सर्वेषां पूर्वेषां आनुपूर्व्येणानुकूल्येन तैः पूर्वैर्यातं प्रवर्तितं मार्गं अनुयामहे इत्यन्वयः ॥

इति व्यासागमनं नाम अष्टचत्वारिंशदधिकशततमोऽध्यायः ।

---

## ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

न च धर्मो ह्यनेकस्थ इत्यत्र चरितव्यः सर्वैराचरितव्यः सनातनो धर्मः अनेकस्थः अनेकधा स्थितो न हि । किन्तु एकप्रकारेणैव स्थित इत्यर्थः ॥

इति द्रौपदीस्वयंवरे व्यासद्रुपदसंवादो नाम एकोनपंचाशदधिकशततमोऽध्यायः ।

---

## ॥ पञ्चाशदधिकशततमोऽध्यायः ॥

महिषी पट्टमहिषी ॥

ईर्ष्युं ईर्ष्याशीलम् ॥

स्वधामृतसमाहार इत्यत्र स्वधायाः पित्रन्नस्य, अमृतस्य देवान्नस्य समः आहारो यस्य ॥

महेन्द्रसेनयेत्यत्र महेन्द्रसेनया महेन्द्रस्य चम्वाः तया नालायन्या सह ॥

दमयन्त्याश्च मातुरित्यत्र मातुः दमयन्त्याः ॥

तस्मिंस्तस्या मनः सक्तमित्यत्र पुरा तस्याः नालायन्याः मनः तस्मिन् कुष्ठव्याधियुक्ते मुद्गले सक्तं-कामेनासक्तं न नाभूत् । किन्तु तया पतिसेवया

¹मातुर्दमयन्त्या इत्यत्र-

निमित्तेन प्रणिहितस्तस्या आत्मा देहस्तस्मिन् द्विजोत्तमे शशाक पतिरिति कृत्वा तस्य दुरवस्थां सोढ्वा पतिं सिषेवे । एवञ्च जुगुप्सितदेहेऽपि पत्यौ स्वव्रतमत्यजन्ती अत्र सुतरां पातिव्रत्यं न त्यजति । किन्तु पञ्चद्रौपदीत्वमात्मनि सन्निधाप्य स्वस्वपतिनैव स्वयं रंस्यत इति भावः ॥

---

इन्द्रसेनेति विख्यातेत्यत्र पुरा पूर्वजन्मनि पूर्वोक्तप्रकारेण नालायनीति विश्रुता । पश्चात्सैव इन्द्रसेनेति विख्याता जाता । पूर्वजन्मनि नालायनीति विश्रुता, नलपुत्रीत्वात्सैव नालायनी नलनन्दिनीति च विश्रुता । तस्याः मुद्गलः पतिः । द्वितीये जन्मनीन्द्रसेना । तस्याः मौद्गल्यः मुद्गलपुत्रः पतिः ॥

आदित्यमनुवर्तमानेत्यत्र आदित्यं अनु अनुसृत्य वर्तमाना, आदित्याभिमुखतया तपस्तपन्तीति यावत् ॥

जन्मन् जन्मनि ॥

बहुपत्नीकृतः पुंस इत्यत्र बहुपत्नीः करोतीति बहुपत्नीकृत् तस्य पुंस इति सम्बन्धः ॥

धर्मभृतां भर्तुरित्यत्र धर्मभृतां मध्ये ॥

गच्छेत या तृतीयमित्यत्र तस्याः निष्कृतिः प्रायश्चित्त (इति) उच्यते। बन्धकी पुंश्चली । 'पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी' इत्यमरः ॥

सकृदुक्तं त्वया नैतदित्यत्र एतत् पतिं देहीति वाक्यं सकृदुक्तं न। किन्तु पञ्चधोक्तम् । अतस्ते अधर्मो न भविष्यति । त्वमेकाकिनी चेत् एकमेव प्रार्थनमलम् । बहुधा प्रार्थनं तु त्वय्यपि बहुनारीसद्भावसूचकम् । अत एकस्मिन् देहेऽपि स्वस्वपतिना तत्तत्पत्न्या रमणे सति पञ्चपतित्वेऽपि नाधर्म इति भावः । अन्यथा पञ्चवारं जारप्रार्थनेऽपि दोषाभावप्रसङ्गात् गूढाभिसन्धेः शिवस्य इदमेव हृदयम् ॥

वरानिच्छामीत्यत्र तैः पतिभिः सह, परस्परं स्त्रियाः पतीनां चेत्यर्थः। वरान् त्वत्तः इच्छामि ॥

रतिश्च भद्रे सिद्धिश्चेत्यत्र हे भद्रे रतिः सदारमणं सिद्धिः पुण्यसिद्धिः यौवनसिद्धिश्च परस्परं न भजेते न घटेते । दुर्भगा एकपतित्वाख्यपुण्यहीना क्रमेण ह्रसितयौवना च सिद्धिं स्वमनोभीष्टसम्भोगसिद्धिं लप्स्यते; न तु पुण्यसिद्धिम् । योगेन सदारमणं विहाय एकपतित्वादिरूपतपसा, यौवनसौन्दर्यादीनां रक्षणोपायेन च महत्त्वतां महत्त्वस्वभावं, पुण्येन महत्त्वं सौन्दर्यादिगुणेन महत्त्वं च लप्स्यते । बहुपतित्वे [1]रतावेवाशया (च) पुण्यसौन्दर्यादावाशा न कर्तव्येति लोकधर्मसंरक्षणार्थं शिवेनोक्तम् ॥

द्रौपद्यास्तु सदारमणं, सौन्दर्यादिगुणं, पञ्चपतीनां करणेऽपि पापाभावं घटयन्नाह— अन्यदेहान्तरे त्वं च रूपभाग्यगुणान्विता । पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसीत्यत्र अन्यदेहान्तरे इदानीं तव विद्यमानदेहादन्यो यो देहो द्रौपदीदेहः तस्य अन्तरे अभ्यन्तरे अन्तर्हृदीति यावत् । पञ्चभिः त्वया सह पञ्चभिर्देवीभिः सहिता कौमारं कुमारीभावं कन्यात्वमिति यावत् । प्राप्य रूपभाग्यगुणान्विता सती महाभागा भविष्यसि । देहान्तः पञ्चानां कन्यात्वप्रापणं पञ्चद्रौपदीनामेव शोभते । न तु बाह्यभर्तृपञ्चकस्य । अतो न कुचोद्यावकाशः । महाभागा महान् भागो यस्याः सा । भाग्यस्य रूपभाग्यगुणान्वितेत्यनेनैवोक्तत्वात् अत्र भागः अंश एव । देहस्येतरस्त्रीभ्योपि महांशवती भविष्यसि । एकस्मिन्नेव देहे एकया त्वयैव पञ्चभिर्भर्तृभिः सह रमणे क्रियमाणे पातिव्रत्याख्यगुणः, महत्त्वरूपं भाग्यं, अतिविषयासक्त्या रूपं लावण्यं च गमिष्यति । त्वया धर्मादीनां पत्नीत्रयेण 'कृष्णारूपा पार्वत्यनिन्दिता' इति वचनात् पार्वत्या च सह पञ्चदेवीभिरेकदेहान्तःप्रदेशे कृते एकैकस्मिन् दिने एकैकेन सह एकैकस्या भोग इति भागे च कृते त्वया सह वायोः, श्यामलया धर्मस्य, शच्या इन्द्रस्य, उषया अश्विनोश्च नियमेन [2]भोगे तत्साक्षितया पार्वत्याश्च सत्त्वात्, पञ्चपाण्डवानां स्वस्वपत्नीभिः पूर्णत्वेन पार्वत्यनपेक्षत्वाच्च नैकस्या अपि पातिव्रत्याख्यगुणहानिः । नापि महत्त्वाख्यभाग्यहानिः । एकस्या एव पञ्चभिः सह सदाभोगाभावेन अतिविषयासक्तेरभावाद्रूपयौवनयोश्च न हानिः ।

---

[1]रतावेवाशायां च. [2]भोगे.

इतरासां दिनेऽपि तव ईषत्सन्निधानसत्त्वेन तच्छत्रैन्तर्गतवायुना सह परकीय-देहेनैव भोगस्य च सत्त्वेन तव सदारमणं, तस्मिन् तस्मिन् दिने कृताभिमानया देव्या नवीकृत्य रक्षिते देहे सौन्दर्याहानिः, तद्भागादपि उक्तविधया तवैवाधिकभागवत्त्वेन महाभागवत्त्वं चेति सर्वमवदातमिति भावः । एवमव्याख्याने पूर्वश्लोकोक्तपातिव्रत्याख्यगुणहानेरपरिहारेण अत्रोच्यमानं रूपभाग्यगुणान्वितत्वं च विरुद्धं स्यादित्यपि ज्ञेयम् । एवञ्च वक्ष्यमाणमिन्द्रसेनारोदनं वस्तुस्थित्या दोषाभावेऽपि अज्ञलोकापवादभयादेव; न तु शोकात् । शोकजत्वे उष्णत्वस्य अश्रुणः शोपकत्वेन वक्ष्यमाणजगद्भिसापनजनकपद्मोदयहेतुत्वविरोधात् । अत एव साऽपि कथा प्रस्ताविततेति ज्ञेयम् ॥

इति द्रौपदीस्वयंवरे पंचाशदधिकशततमोऽध्यायः ।

---

॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥

शामित्रमकरोत्तदेत्यत्र शमितुः शान्तस्य भावः शामित्रं शान्तत्वमित्यर्थः ॥

व्यापृतः व्यापारवान् कृतः ॥

वैवस्वतस्यैव तनुर्विभूत्वेत्यत्र विभूत्वा विशेषेण भूत्वा सामर्थ्यवती भूत्वेत्यर्थः । अन्तः अन्तकः ॥

पूर्वजदेववाक्यमित्यत्र पूर्वजदेवो ब्रह्मा ॥

आनीयतामेष यत इत्यत्र एष इन्द्रः यतः यत्र प्रदेशे तिष्ठति ततः अक्षं अक्षक्रीडां आरात् समीपे आनीयतां त्वया हस्तं गृहीत्वा आनीयताम् ॥

विवर्तयैनं च महाद्रिराजमित्यत्र विवर्तय शृ(स)ङ्गमुत्क्षिप्य विवृतद्वारं कुरु । अस्य गिरेः ॥

अनिलेन तुन्नमित्यत्र गिरिराजमूर्ध्नि अनिलेन तुन्नं अश्वत्थपत्रं अश्वत्थपत्रमिव अभिपञ्जाङ्गयात् सस्तैरङ्गैः दरीं प्रवेशमानः ।

खलिः सन् विनतेन विनम्रेण आननेन प्रवेपमानः अभिपञ्जाङ्गयात्

प्रवेपमानश्च सहसैव मुक्तः प्रवेशान्मुक्तः बहुरूपं उग्रं शेषं शेषरूपिणं देवं दृष्ट्वा हे भगवन् त्वं अद्य नः भवेत्युवाचेति योजना ॥

एवंविधाः कृतकिल्बिषाः शेषं शेषरूपिणं मां नाप्नुवन्ति[1] । मुक्तिमार्गभूतः शेषोऽहं निर्दोषाणामेव लभ्य इति भावः । विष्णोरतिप्रियशेषपदवीयोग्यं मां माऽवमंस्था इति सूचनाय शेषरूपं दर्शितवानिति ज्ञेयम् । अनेन रुद्रस्यैव शेषपदवी भविष्यतीति मध्वमुनिनोक्तं तत्वं स्पष्टीकृतमिति ज्ञेयम् । पुरस्तात्पूर्वं यस्मात् एते चत्वारः एवं त्वद्वत् इन्द्रपदवीप्राप्त्या अहङ्कारिणः, तस्मात् एतां दरीं प्रविष्टाः । अतः परं भवन्तः सर्वे भवितारः भूलोके भवितारः । श्वो वा परश्वो वा अवतरिष्यन्ति ॥

एषा देवी च वः भविता भार्या भविष्यति । अतः यूयं मानुषीं योनिं आविशध्वमिति योजना ॥

दुरावरो विहितो यत्र मोक्ष इत्यत्र आ सम्यग्वरयितुमशक्यः दुरावर. मोक्षः यत्र भूलोके श्रवणमननादिना साध्यतया विहितः ॥

श्रियं देवलोकस्य श्रीरूपां भार्यां भर्तुं योग्यां व्यदधा इति इन्द्ररूपार्जुनेनैव प्राक् लब्धत्वादिन्द्रं प्रत्येव वचनम् ॥

स हरिः ॥

लक्ष्मीः सल्लक्षणवती ॥

इति पंचद्रौपद्याख्याने एकपंचाशदधिकशततमोऽध्यायः ।

## ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

मन्निबोध च भूमिपेत्यत्र मत् मत्तः ॥

इति द्विपंचाशदधिकशततमोऽध्यायः ।

---

[1] न अवाप्नुवन्ति.

## ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

द्रुपदैषा ततो जज्ञे सुता ते देवरूपिणी । पञ्चानां सहिता कृष्णा रूपा पार्वत्यनिन्दितेत्यत्र तसेः सार्वविभक्तिकत्वात् ततः तदर्थम् । अपरिहार्य वरप्राप्तपञ्चपतिसम्बन्धेऽपि स्वपातिव्रत्याप्रच्युत्यर्थमित्यर्थः । पञ्चानां पञ्चभिः आत्मना सह पञ्चभिर्देवीभिः सहिता सती, सहयोगे तृतीयाया आवश्यकत्वात् तृतीयार्थे षष्ठी । पार्वती गङ्गासम्बन्धेन गङ्गाशब्दवाच्यतीरवत् पार्वतीसम्बन्धेन पार्वतीशब्दवाच्या, देवीचतुष्टयस्य प्रसिद्धत्वात् पंञ्चमदेवीस्फोरणायेदमुक्तम्। अनिन्दिता पञ्चदेवीसाहित्येन जननात् पञ्चपतित्वप्राप्तनिन्दारहिता कृष्णारूपा द्रौपदीरूपा देवरूपिणी एषा ते सुता यज्ञवेद्यां जज्ञे । जननसमये पञ्चसाहित्यं देवीपञ्चकसाहित्यादेव घटते । न तु स्वभर्तृभूतपाण्डवसाहित्येन । तथा सति देव्यास्तत्सहोदरीत्वप्रसङ्गेन भार्यात्वायोगात् । तेषां पृथगेवोत्पत्तेः श्रुतत्वाच्च। सर्वथा सहिता जज्ञ इत्युक्त्या अन्यैः सह जननमावश्यकम् । ततश्च साकाङ्क्षसहितपदार्थपूरणायोक्तपञ्चपदार्थस्यापि सह जननमपरिहार्यमेव[1] । अतः स्वसहोदरीत्वयोग्यदेवीपञ्चकमेव पञ्चपदवाच्यं, नान्यत् । पञ्चभिः प्राप्य कौमारमिति प्रागुक्तसमाख्यया सहितपदार्थघटनाय च अत्रापि पञ्चपदे तृतीयाया आवश्यकत्वान्न कुचोद्यावकाशः । लौकिकविभक्त्युल्लङ्घनं तु अस्यार्थस्यालौकिकत्वस्फोरणार्थमिति सर्वमवदातम् ॥

इति त्रिपंचाशदधिकशततमोऽध्यायः ।

---

## ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

मया पूर्वमित्यत्र इदं कार्यं नेति वर्जयित्वा यतितं प्रयतितम् ॥

दिष्टस्य ग्रन्थिरित्यत्र ग्रन्थिः तत्कृतकार्यघटना । वरैकहेतोः एको वरः मुख्यवरः तद्धेतोः तत्प्राप्त्यर्थं विहितेष्वेव स्वयंवरोपायेषु मयाऽपि स्वकर्मणा किञ्चिन्निमित्तं कृतम् । तच्चार्जुनेन कृतम् । तत्तस्मात्कारणात् बहूनां पाणिग्रहण-

---

[1] पंच.

मुपपन्नम् । एतत् कृष्णावाक्यं वरं श्रेष्ठं इत्यब्रवीत् ॥

अत्र लोके यथाजोषं यथेच्छं, अस्याः पाणिं गृह्णन्तु ॥

जन्यर्थमुक्तं बहुरत्नमग्र्यमित्यत्र जनी बहुपरिजनवान् धर्मराजः तदर्थमुक्तं अग्र्यं श्रेष्ठं बहुरत्नं रत्नपदोपलक्षितनानापारिबर्हद्रव्यं समर्पयामासेत्यन्वयः ॥

इदं च तत्राद्भुतमुत्तमं तदा दधाति कृष्णा वपुषाऽतिमानुषम् । महानुभावा किल साधुमध्यमा बभूव कन्यैव गते गतेऽहनीत्यत्र अन्यस्य भर्तुरहनि गते गते सति, उपलक्षणं चैतत् । स्वभर्तुरहनि आगते च सति पूर्वपूर्वपत्न्या त्यक्ताभिमाने तस्मिन्नेव देहे उत्तरोत्तरपत्न्या अभिनवाभिमानोत्पत्त्या तदा तदा जातत्वात् स्वस्वदिने सा सा कन्यैव, तदा तया तया सह भर्तुर्मानसो विवाहश्च भवतीति सूचितम् । अस्य चरित्रस्य मानुषेष्वघटितत्वात् अद्भुतमित्युक्तम् । अतो न दोषलेशोऽपि पञ्चद्रौपदीनां पञ्चपाण्डवानां चेति भावः ॥

चतुर्युजां चतुस्तुरगयुजामिति रथानां विशेषणम् ॥

गजानामभिपद्मकानामित्यत्र पद्मकानां पद्मशोभिमस्तकानाम्[1] । अभिपद्मजानामिति पाठे अभितः पद्माख्यलक्षणेन सह जातानामित्यर्थः । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । अभिपद्मकानामिति पाठे 'अन्तर्मदसमायुक्तो बहिर्मदविवर्जितः । अभिपद्मः स विज्ञेयो गजो गजविशारदैः' इत्यभिधानात् स्पष्टोऽर्थः ॥

इति द्रौपदीस्वयंवरे चतुःपंचाशदधिकशततमोऽध्यायः ।

---

॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

नाम स्वं स्वं नाम कीर्तयन् अकीर्तयन् ॥

वध्वद्येत्यत्र हे वधु इति सम्बुद्धिः ॥

---

[1]शोभितमस्तकानाम्.

तथैव कृतकं वह्वित्यत्र कृतकं केवलं द्रवीकृतसुवर्णेनैव रचितमाभरणादिकं कृतकम् । विचित्ररत्नखचितं सौवर्णमाभरणं कृताकृतमित्युच्यते ॥

इति पंचपंचाशदधिकशततमोऽध्यायः ।

---

## ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

(विदुरागमनपर्व १३)

चारः समुपनीयतेत्यत्र चारः द्रुपदनगरे जातो विचारः उपनीयत उपानीयत ॥

योसावत्यक्रमीद्युध्यन्नित्यादिना धर्मराजनकुलसहदेवानामपि युद्धकथनात् प्रागपि किञ्चिद्युद्धं कृत्वैव कुम्भकारशालां प्रति गता इति सूच्यते ॥

स कृत्वा संविदं काश्चिदत्रायास्यत्यसंशयमित्यत्र सः धर्मराजः । अत्र हस्तिनापट्टणे ॥

पाण्डवोद्धरणाय न इत्यत्र पाण्डवानां उत् उत्कर्षेण हरणं संहारः तस्मै ॥

हन्त धृ(कृ)तप्रगृहीतानीत्यत्र पाण्डवान् धारयतीति धृ(कृ)त् द्रुपदः तेन प्रगृहीतानि बलानि, बलिनः स्वयं पाण्डवाश्च सर्वाभिहारेण सर्वेषामस्मदीयानां अभिहारेण द्रुपदपुरं प्रत्यभित. प्रहारेण एतत् यत्र पाण्डवाः सन्ति एतत्पुरं विनाश्यतामिति सम्बन्धः ॥

गुणान् सन्धिविग्रहादीन् । परं शत्रुम् ॥

यद्बभूव मनःकान्तमित्यत्र यत् मनःकान्तं सर्वेषां मनःप्रियं बभूव, सः कर्मणा तच्चकारेति सम्बन्धः ॥

प्रकृतिप्रियानित्यत्र स्वकृतैः स्वकर्मभिः ॥

असत्यं सत्यरहितम् । अनृतं कपटोपेतम् ॥

उपकल्पशतैरपीत्यत्र उप उपपन्नतया कल्पः कल्पना येषां ते उपकल्पाः तेषां शतैः गुप्तमिति सम्बन्धः ॥

गलकर्षकवाटैश्चेत्यत्र कर्षः रिपुभटानां कण्ठाकर्षणाय कृतो रज्जुविशेषः॥

ऐष्टकः इष्टकाकारी । दारुकः दारुकर्मकर्ता कारुः । वप्रमानुपः भित्तिकर्ता ॥

नृगर्भस्तत्र पूजित इत्यत्र धीरैः प्राकारकर्तृभिः सहितः नृगर्भः नॄन् गर्भीकरोतीति नृगर्भः सेनानायक इत्यर्थः । सोऽपि पूजितः धनकनकादिना सत्कृतस्तत्कालो ॥

इति षट्पंचाशदधिकशततमोऽध्यायः ।

## ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

वृषा श्रेष्ठः ॥

संप्रयाणासनाभ्यामित्यत्र आसनं परपुरं स्वसेनया आवृत्य प्राप्तिपर्यन्तमवस्थानम् । आक्रन्दः बहिष्ठधनधान्यनिरोधेन पुरान्तस्स्थितानां आक्रोशकरणम् ॥

दुश्शासनसरिन्मध्ये अन्यैः शास्तुमशक्यसेनासरिन्मध्ये ॥

'क्रुश आह्वान' इति धातोः चुक्रुशुः स्वभटानाहूतवन्तः ॥

धन्विनः भरतर्षभा इति सम्बन्धः । धन्विनः बहुधनुस्सङ्ग्रहवन्तः । रथान्वा ॥

प्रमोदश्च बलं प्रतीत्यत्र बलं परबलं प्रति गन्तुं प्रमोदः । व्यतिकरः मिश्रणम् ॥

तस्मिन् दशरथे युद्धे प्रवृत्ते[1] इत्यत्र पाण्डवचतुष्टयं द्रुपदपुत्रो धृष्टद्युम्नश्चेति पञ्च द्रुपदसेनायां, कर्णजयद्रथसोमदत्तशकुनिदुर्योधनाश्चेति पञ्च कौरवसेनायां, एवं दश महारथानां रथा यस्मिन् तत्तथोक्तम् ॥

वधात्कर्णस्य पाण्डव इत्यत्र वधादिति ल्यब्लोपनिमित्ता पञ्चमी । वधमुद्दिश्येत्यर्थः ॥

सुवृत्तं चक्रिरे सर्व इत्यत्र सम्यग्युद्धकरणेन शोभनं वृत्तं चरित्रं यस्य तत्सुवृत्तं भीमार्जुनादिरिपुकटकं चक्रिरे ॥

[1] प्रवृद्धे.

प्रेपिता गच्छतारिष्टानस्मानाख्यात शौरय इत्यत्र अरिष्टान् अन-ष्टान् आख्यात ब्रूत ॥

हे अन्धकवृष्णयः पाण्डवाः सर्वान् वः कुशलमाहुः । आत्मनः स्थान। अत्र सभायामिति सम्बन्धः ॥

वधात्तस्य तु रक्षस इत्यत्र रक्षसः हिडिम्बस्य बकस्य चेत्यर्थः ॥

इति पुनर्युद्धं नाम सप्तपंचाशदधिकशततमोऽध्यायः ।

## ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥

ब्राह्मणः ब्राह्मणवेषधारी असौ अर्जुनः यदि न स्यादिति सम्बन्धः ॥

उवाच कुरव इत्यत्र कुरव इति सामान्यवचनात् स्वपुत्रविवाह इति धृतराष्ट्रस्य भ्रम इति भावः ॥

वृतिर्विदुर मे मतेत्यत्र वृतिः द्रौपद्याः वरणम् ॥

को हि द्रुपदमासाद्येत्यत्र हे क्षत्तः सबान्धवं मित्रं द्रुपदमासाद्य कः न बुभूषेत् । कथं तत्कथमिव । गतश्रीः पूर्वं गतश्रीः अर्थी पुनर्लब्धबह्वर्थवान् पार्थिव इति उक्तेऽर्थे दृष्टान्तः ॥

विविक्तं यथा भवति तथा, एकान्ते इत्यर्थः । इति वक्ष्यमाणप्रकारेण। अभिष्टौपि अभितः स्तौपि ॥

परित्यजेयू राजानमित्यत्र अस्मद्रहस्यं श्रुत्वा निराशास्ते कुन्तीपुत्रं परि-त्यजेयुः । अतस्ते वञ्चनीया इति पूर्वेण सम्बन्धः । दोषवत् यथा भवति तथा अस्मदीयैः कीर्त्यमानं कर्णयन्तु आकर्णयन्तु ॥

अथवाऽकुशलानित्यत्र अकुशलान् पाण्डवानित्यर्थः ॥

व्युत्थापयन्तु तां कृष्णामित्यत्र बहुत्वात् पतीनां बहुत्वात् तत् तैः सह रमणं सङ्करं जातिसङ्करमाहुरित्युक्त्वा तां कृष्णां व्युत्थापयन्तु विरुद्धतया तेभ्य उत्थापयन्तु ॥

दर्पं वावदतामित्यत्र तेषां पाण्डवानां दर्पं स्वदर्पं वावदतां अतिशयेन

वदतां सतां अत्र केचिन्मनस्विनः ते द्रुपदात्मजाश्च ततः दर्पकथनान्निमित्तात् परैः शत्रुभिः पाण्डवैः भिद्यन्ति भेदं प्राप्नुवन्तीति योजना ॥

राजेन्द्रेति स्वपुत्रं प्रति सम्बुद्धिः ॥

लोप्त्रहारैरित्यत्र लोप्त्रहारैः वञ्चनेनापहृतद्रव्यनेतृभिः चोरैः, 'द्रव्यं त्वपहृतं लोप्त्रं स्तेयं चौर्यमिति स्मृतम्' इति हलः । तैः पथि सन्धाय वध्यन्तामित्यन्वयः ॥

पुरा कालोऽतिवर्तेत इत्यत्र पुरा कार्यान्तरारम्भात्पूर्वम् ॥

यदा एकस्यां पत्न्यां न भिद्यन्ते तदेति सम्बन्धः ॥

इत्येकोनषष्ठ्यधिकशततमोऽध्यायः ।

## ॥ षष्ठ्यधिकशततमोऽध्यायः ॥

न ह्युपायेन शक्यास्त इत्यत्र शक्याः जेतुं शक्याः ॥

परिन्यूनान्वृतवतीत्यत्र परिन्यूनान् परिजनैर्न्यूनान् भिक्षुकानित्यर्थः ॥

प्रजावृतः सेवकजनवृतः ॥

इति कर्णवचनं नाम षष्ठ्यधिकशततमोऽध्यायः ।

## ॥ एकषष्ठ्यधिकशततमोऽध्यायः ॥

त्वामप्यकीर्तिः सकला भविष्यतीत्यत्र भूधातोः प्राप्त्यर्थकत्वात् भविष्यति प्राप्स्यति ॥

दिष्ट्या धरन्ति ते वीरा इत्यत्र धरन्ति प्राणान् धारयन्ति ॥

न सकामोऽत्ययं गत इत्यत्र अत्ययं गतः स पुरोचनः दिष्ट्या सकामः कामसंसिद्धिमान्न नाभूत् ॥

न चापि दोषेणेत्यत्र दोषेण युक्तमिति योग्यपदाध्याहारः । इदानीं राज्यार्धे त्वया दत्ते सति तत्र स्नेहं दृष्ट्वा एवं स्नेहवान् दुर्योधनः तदाऽपि तद्वा-

हार्थं न प्रेरितवान् । किन्तु मनुष्यस्यैव दोष इति लोको वदेत् । अतस्तज्जीवन-मेव तवापि हितमभूदित्याह— तदिदमिति ॥

इत्येकषष्ट्यधिकशततमोऽध्यायः ।

## ॥ द्विषष्ट्यधिकशततमोऽध्यायः ॥

**मिथः कृत्यं च तस्मै स** इत्यत्र मिथः कृत्यं तैरस्माकं कर्तव्यं, अस्मा-भिस्तेषां कर्तव्यं च बहुप्रमेयं तस्मै धर्मराजाय वक्तुं आदाय स्वमनसा सङ्गृह्य गच्छत्विति सम्बन्धः ॥

**तत्सुयोगोद्भवां तदे**त्यत्र तस्य धर्मराजस्य अस्मासु सुयोगमुद्भावयतीति तत्सुयोगोद्भवा ताम् ॥

**भीष्मेण सह भारते**त्यत्र भीष्मेण सह अहं मन्य इति योजना ॥

**सर्वकार्येष्वनन्तरा**वित्यत्र अनन्तरौ व्यवधानरहितौ अन्तरङ्गावित्यर्थः ॥

**ब्रूयान्निःश्रेयसं नामे**त्यत्र प्रच्छन्नेनान्तरात्मनेत्युक्तत्वात् अश्रेय एव निःश्रेयसं नाम ब्रूयादिति योग्यपदाध्याहारेण योजना ॥

**न मित्राण्यर्थकृच्छ्रेष्वि**त्यत्र मित्राणि न दुर्योधनस्य मित्राणि न सन्ति सर्वस्य जनस्य दुःखं वा यदि सुखं वा विधिपूर्वं हि विधिः शिरसि लेखको विधाता तत्पूर्वं तन्निमित्तं हि ॥

**सर्वः सर्वत्र विन्दती**त्यत्र सर्वो जनः सर्वत्र विन्दति विधिविहितं प्रागुक्तं सुखं वा दुःखं वा विन्दति ॥

**मन्यमानोऽवमन्यत** इत्यत्र अवमन्यते राजानमवमन्यते ॥

**यतमानो न शक्नोती**त्यत्र यतमानो राजा विनन्दः ॥

**किमन्यविहिता नूनं तस्य सा पुरुषेन्द्रते**त्यत्र तस्य मन्त्रिणः सा पुरु-षेन्द्रता पुरुषस्वामिता राज्यस्वामितेति यावत् । नूनं अन्यविहिता विधेरन्येन केनचिद्विहिता किम् । नैवेत्यर्थः ॥

**अतोऽन्यथा चेदि**त्यत्र विहितं विधिविहितं, अतः तव राज्यलाभात्

अन्यथा चेत् यतमानः न लप्स्यसे राज्यं न लप्स्यसे ॥

दुष्टः पाण्डवहेतोस्त्वमित्यत्र पाण्डवहेतोः दुष्टः दुर्वचनाख्यदोषवां-स्त्वं, त्मनः आत्मनः दोषं हीनकुलजत्वदोषं ख्यापयसे । अकुलीन एव कुलीन-निन्दक इति भावः ॥

अतोऽन्यथा चेत्क्रियत इत्यत्र अतः अस्मदुक्तसन्धिकार्यात् ॥

इति द्विषष्ट्यधिकशततमोऽध्यायः ।

## ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥

नोचतुर्विवृतं किञ्चिदित्यत्र विवृतं स्पष्टं नोचतुः तव पुत्रदोषं नोचतुः ॥

इदं निर्दग्धमयश इत्यत्र नितरां दग्धाः पाण्डवा इति वार्ता यस्मि-न्नयशसि तन्निर्दग्धम् ॥

वृद्धस्तेषां राजन् कुरु प्रियमित्यत्र वृद्धः कुलवृद्धस्त्वं तेषां प्रियं कुर्विति सम्बन्धः ॥

इति विदुरवचनं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ।

## ॥ चतुःषष्ट्यधिकशततमोऽध्यायः ॥

पुरं च विषयं च न इत्यत्र एते पाण्डवाश्च नः पुरं च विषयं च द्रष्टु-कामा इति पूर्वपदावृत्त्या योजना ॥

एतदागमनं ममेत्यत्र मम एतदागमनं एतेषां पाण्डवानामागमनमेव उद्देश्यं यस्य तत्तथोक्तमित्यावृत्त्या योजना ॥

इति विदुरप्रेषणं नाम चतुःषष्ट्यधिकशततमोऽध्यायः ।

## ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥

गृहं गृहं प्रति । तावत् गमनकालपर्यन्तम् ॥

[1]हेतोस्त्वित्यत्र. [2]दोषवांस्तु.

परवन्त इत्यत्र परवन्तः नाथवन्तः । 'परवान्नाथवानपि' इत्यमरः ॥

न तद्ध्यायतीत्यत्र यचस्मात्कारणात् एषां पाण्डवानां केशवः श्रेयो धास्यति, तत्तस्माद्धर्मपुत्रः न ध्यायतीति योजना ॥

त्वद्भक्त्या भरतर्षभेत्यत्र त्वद्भक्त्या त्वदङ्गीकारेण ॥

अरिष्टेत्यत्र अरिष्टः काकः । 'अरिष्टः करटः काक' इति हलः ॥

दुःखास्तु बहवः प्राप्ता इत्यत्र दुः दुःखितानि खानीन्द्रियाणि याभ्यस्ता इति व्युत्पत्त्या दुःखाः विपदः ॥

सविहारं सुखं जग्मुरित्यत्र सविहारं विहारेण सहिता यथा भवन्ति तथा ॥

सुवर्णकक्ष्याग्रैवेयानित्यत्र कक्षयोः पार्श्वयोः सम्बन्धिनी अलङ्कृतिः कक्ष्या । 'बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरध' इत्यमरः । ग्रैवेयं कण्ठभूषा । सुवर्णकक्ष्याश्च ग्रैवेयाणि च येषां ते तथोक्तास्तान् ॥

पुनः सुवर्णबर्हाणामित्यत्र सुवर्णबर्हाणां सुष्ठुवर्णोपेतबर्हालङ्कृतानां, आहो सुवर्णखचितबर्होपेतानां वा ॥

जन्यर्थे प्रददौ धनमित्यत्र जनी परिजनवान् धर्मराजः, तत्प्रीत्यर्थम् । 'व्रीह्यादिभ्यश्च' इति सूत्रात् स्वस्माज्जनिरस्या वर्तत इति जनी जननवान् स्त्रीदायादः, तत्प्रीत्यर्थम् । 'जनी प्रादुर्भाव' इति धातोः कर्त्रर्थे औणादिके ङि प्रत्यये कृते जनिरेव वा पुत्री ॥

हरणमित्यत्र हरणं हरति परिहरति येन कन्या स्वमनोव्यथां तद्धरणं पारिबर्हधनम् ॥

तैस्तैः परिवृता इत्यत्र तैः सहागतस्वसैन्यैः, तैः अभ्यागतकौरवसैन्यैश्च ॥

इति पंचषष्ट्यधिकशततमोऽध्यायः ।

## ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥

### (राज्यलाभपर्व १४)

सवधूः सपरिच्छदेत्यत्र सवधूः सस्नुषा । 'वधूर्जाया स्नुषा स्त्री तु' इति रत्नमाला ॥

श्रेणिमुख्याश्च सर्वश इत्यत्र श्रेणिषु सेनासमूहेषु मुख्याः श्रेष्ठाः सेनानायका इत्यर्थः ॥

औपवाह्योपरिगतमित्यत्र 'औपवाह्यो राजवाह' इत्यनुशासनात् राजवाहनोपरिगतम् ॥

प्रतिक्रियाकृतमित्यत्र प्रतिक्रियाकृतं प्रतिक्रियार्थं कृतम् । अभापतां द्वौ द्वौ परस्परमभापतामिति लङः परस्मैपदे द्विवचनम् ॥

चातुर्वेद्या पुरस्कृता इत्यत्र चातुर्वेद्या चतुर्वेदसम्बन्धिन्या मन्त्रर्चा पुरस्कृताः ॥

विनाशितं मुनिगणैरित्यत्र बुधसुतस्य पुरूरवसः लोभात् स्त्रीलोभाद्विनाशितं शापं दत्त्वा विनाशितम् ॥

शूद्राश्च कृतलक्षणा इत्यत्र इह खाण्डवप्रस्थे कृतलक्षणाः कृतशङ्खचक्रलाञ्छनाः जन्तवः पश्वादिप्राणिनः ॥

नगरं मापयामासुरित्यत्र मापयामासुः मानदण्डेन आयानुसारात्प्रमाणीचक्रुः ॥

द्विपक्षगरुडप्रख्यैरित्यत्र गरुडस्य पक्षद्वयसदृशकवाटोपेतैः द्वारैरिति सम्बन्धः ॥

तथा जगतिपर्वतैरित्यत्र जगती मणिकुट्टिमा भूमिः तया, पर्वतैः क्रीडापर्वतैश्च ॥

विद्युत्सौदा(म)मिनीवृतमित्यत्र विशेषेण द्योतमाना सौदा(म)मिनी तटित् तया वृतम् ॥

जयेति ब्राह्मणा वाच इत्यत्र ब्राह्मणाः ब्रह्मसम्बन्धिन्यः वाचः श्रूयन्ते ॥

[1]येषां पाण्डवानां आवसतां सतां राष्ट्रमवर्धत तेषु जनानां राज्ञः प्रीतिरवर्धत ॥

धर्मप्रणयिनस्तदेत्यत्र पाण्डवाः सौबलादिभिर्निमित्तैः खाण्डवप्रस्थवासिनः सन्तः धर्मप्रणयिनः समपद्यन्त दुर्जनसंसर्गाभावात्केवलं धर्मरता अभवन्निति भावः ॥

प्रसादादेव ते वीरेत्यत्र हे वीर तव प्रसादादेव प्राक् शून्यं राज्यं इदानीं विश्वकर्मनिर्मितप्राकारपरिखादिना अतिमहता चतुरङ्गसैन्येन च परैः सुदुर्गममासीत् । सुष्ठु दुः दुःखस्य गमो गैमनं यस्मात्तत्सुदुर्गममासीदिति वा ॥

त्वत्प्रसादान्महाराज राज्यं प्राप्तं स्वधर्मत इत्यत्र 'प्रसादस्तु प्रसन्नता' इत्यभिधानात् त्वत्प्रसादात् अजातशत्रोस्तैव[3]प्रसन्नतालक्षणलौकिकदिव्यगुणात् स्वधर्मतः स्वकृतधर्माख्यालौकिकगुणाच्च राज्यं प्राप्तमित्यन्वयः ॥

धर्मोपदेशं सङ्क्षेपादित्यत्र सं सम्यक् 'क्षिपु निरसन' इति धातोः क्षेपं धर्मविरोध्यधर्मनिरसनं सम्पाद्य, इयमपि ल्यब्लोपनिमित्ता पञ्चमी । धर्मोपदेशं धर्मशास्त्रं ब्राह्मणांश्च भर इति योजना ॥

मया प्राप्तमित्यत्र मया प्राप्तं यद्गृहागमनादिकं तत् तव आज्ञातं सर्वज्ञत्वात् सम्यक् ज्ञातम् । अत एव अज्ञानादिदोषराहित्यसूचनाय अनघेति सम्बुद्धिः । आर्येण मम ज्येष्ठेन वसुदेवेन कुन्तिभोजेन वा अज्ञातं च न । चशब्देन वैपरीत्येनैव ज्ञातमिति योजना । हे गोविन्द त्वत्सनाथानां विशेषतः दरिद्राणामस्माकं त्वया नाथेन सुखं प्राप्तमिति किं पुनः किं वक्तव्यम् ॥

प्रसादमिति चेत्यत्र चशब्देन कुर्विति योग्यक्रियाभियोगं समुच्चिनोति । साक्षादनुक्तिः स्वस्य परप्रसादनिरपेक्षत्वात्, प्रसादं करोमीति स्वगूढाभिसन्धेर्घटनाय चेति ज्ञेयम् ॥

इति षट्पञ्चाधिकशततमोऽध्यायः ।

---

[1]तेषां. [2]मोचनं. [3]स्तत्प्रसन्नता.

॥ सप्तपञ्चाधिकशततमोऽध्यायः ॥

भूतधरां भूतधात्रीं भूमिम् ॥

ब्राह्मेण तपसा व्रत इत्यत्र ब्राह्मेण ब्रह्मसम्बन्धिना तपसा 'तप आलोचन' इति धातोः तपसा आलोचनेन ॥

अयोनिजश्च गदित इत्यत्र ब्रह्मणोऽङ्कजातत्वात् अयोनिज इति श्रुतिभिर्गदितः । परादुत्तमाद्ब्रह्मादिजीवसमूहात् परतरं अतिशयेनोत्तमं नारायणं प्राप्तः प्रकर्षेण जानन्नित्यर्थः ॥

धर्मेणाधिगतः सर्वैरित्यत्र इत्थम्भूतलक्षणे तृतीया । धर्मेण संहितं सत् देवदानवमानवैः अभिगतः प्राप्तः ॥

भक्ष्येषु विविधेषु चेत्यत्र पापेषु कर्मसु क्षीणः, विविधेषु पापेषु भक्ष्येषु च क्षीण इति योजना ॥

ऋजुरारोहवानित्यत्र ऋजुः ऋजुगण इव आरोहवान् मोक्षमार्गारोहणवान् । 'शल्को मधुरभाषण' इत्यभिधानात् शल्को मधुरवचनः । भूयिष्ठपथिकः बहुतरशास्त्रमार्गपान्थः ॥

गण्डूपदमुखे इत्यत्र 'गण्डूपदः किञ्चुल्को निहाका गोधिका समे' इत्यभिधानात् गण्डूपदवत् मकराकारगोधिकावत् मुखं ययोस्ते कुण्डले बिभ्रदिति योजना ॥

चित्रं राजतमुच्छ्रित्येत्यत्र चित्रं विचित्रं परगवर्चसं स्वाङ्गकान्ति राजतं रजतमयं छत्रं छत्रमिव उच्छ्रित्य उच्छ्रितं कृत्वा अन्येन दुष्प्रापं ब्रह्मवर्चसं च प्राप्य भूमिपालस्य भवने बृहस्पतिरिव आप्लुतः अवप्लुतः प्राप्त इत्यर्थः ॥

संहितायां च सर्वेषामित्यत्र सर्वेषां वेदानां संहितायां स्थितस्य द्विपदस्य 'अग्निमीळे, यज्ञस्य देवं' इत्यादिरूपेण असमस्तपदद्वयाश्रितस्य सर्वस्य क्रमधर्मस्य, उपस्थितस्य समस्तपदात्मकत्वात् सदा अन्योन्यपदसमीप एव स्थितस्य 'पुरोहितं, रत्नधातमं' इत्याद्याकारकद्विखण्डसंज्ञकस्य सर्वस्य क्रमधर्मस्य च पारगः॥

[1]सहितः सन्.

साम्नां परमवल्गुनेत्यत्र परमवल्गुना आत्मना स्वस्वभावेन सर्वमोक्षिभ्यः सर्वमोक्षयोग्यजीवेभ्यः तदुद्धारायेति यावत् । कृतिमान् प्रयत्नवान् कृत्यवित् कार्यवित् साम्नां गाथाः समनुसंजज्ञे सं सम्यक् अनु तत्तल्लक्षणमनुसृत्य सञ्ज्ञे अन्तर्णीतो णिच्, सम्यक् जनयामास श्रावयामासेत्यर्थः ॥

च्छेत्ता निगमसंशयानित्यनेन कर्ममीमांसायां देवमीमांसायां ब्रह्ममीमांसायां निपुण इति सूचितम् । मीमांसानैपुण्यं विना संशयच्छेदायोगात् ॥

अर्थनिर्वचने नित्यं संशयच्छिदसंशय इत्यत्र अर्थानां पृथिव्याद्यर्थानां निर्वचने 'गन्धवती पृथिवी, सांसिद्धिकद्रवत्ववत्य आपः, शुक्लभास्वरं तेज' इत्यादिनिर्वचने नित्यं असंशयः संशयरहितः परेषां संशयच्छिच्चेत्यर्थः । अनेन ब्रह्मतर्कोक्तलक्षणशास्त्रे च निपुण इति सूचितम् ॥

प्रकृत्या धर्मकुशल इत्यत्र प्रकृत्याः जडप्रकृतेः धर्माः विकाराः चतुर्विंशतितत्वानि तेषु कुशलः । अनेन पुराणप्रक्रियायां च निपुण इति सूचितम् । नानाधर्मविशारदः नानाधर्माः चतुराश्रमधर्माः चतुर्वर्णधर्माश्च तेषु कुशलः विशारदः । अनेन तत्तदाचारकाण्डेष्वपि निपुण इति सूचितम् ॥

लोपेनागमधर्मेण संयमेन च वृत्तिष्वित्यत्र वृत्तिषु सुप्तिङादिभेदेन वर्तयन्ति शब्दानर्थेष्विति वृत्तयो व्याकरणशास्त्राणि । लोपेन ल्युट्प्रत्ययादौ लकारोकारटकारादीनां इत्संज्ञया लोपेन पुनः 'युवोरनाकौ' इति उर्वरितयकारादेः अनाद्यादेशाख्यलोपेन, आगमधर्मेण तुगादीनामागमधर्मेण, संयमेन 'क्ङिति च' इत्यादिना गुणवृद्ध्यादीनां निषेधेन च प्रयोगान् 'प्रमाणं, देवच्छत्रं, कृतं' इत्यादिशब्दप्रयोगान् अन्ववेक्षिता द्रष्टा । एकशब्दान् एकाकारगोहर्यादिशब्दान् नानार्थान् स्वर्गार्कादिबह्वर्थवाचकान्, एकार्थान् घटाद्येकार्थवाचकान् पृथक् श्रुतान् घटः करीरः कलश इत्याद्याकारेण पृथक् पृथगेव श्रुतान् पर्यायशब्दान्, पृथगर्थाभिधानान् पृथक् पृथक् घटपटाद्यर्थानामभिधानं येषु तान् घटपटादिभिन्नभिन्नशब्दांश्च अन्ववेक्षिता द्रष्टा ॥

'स्वस्वभावेन.

प्रमाणभूतो लोकेष्वित्यत्र प्रमाणानि प्रत्यक्षानुमानागमाख्यप्रमाणानि भूतानि लक्षणनिरूपणादिना आविर्भूतानि यस्मात्स तथोक्तः । सर्वाधिकरणेषु ब्रह्ममीमांसादौ स्थितेष्वानन्दमयाद्यधिकरणेषु, सर्ववर्णविकारेषु सर्वेषां वर्णानां विकारेषु 'अचः स्वराः, कादयो मावसानाः स्पर्शाः, यरलवा अन्तस्थाः, शषसहा ऊष्माण' इत्यादिविविधाकारेषु नित्यं कुशलैर्जनैः पूजितः । असाङ्कर्येण सकलाधिकरणानां विभजने वर्णानां जातिविभजने च समर्थ इति भावः ॥

स्वरे स्वरे च विविध इत्यत्र विविधे उदात्तानुदात्तस्वरितप्रचयादिभेदेन नानाप्रकारे वेदाक्षरस्थस्वरे स्वरे, त्रिविधेषु वृत्तेषु समविषमार्धसमभेदेन त्रिविधेषु वृत्तेषु शार्दूलविक्रीडितादिवृत्तेषु, समस्थानेषु 'अकुहविसर्जनीयानां कण्ठः, इचुयशानां तालु, ऋटुरषाणां मूर्धा, विवृतमूष्मणां स्वराणां च' इत्यादिना समस्थानप्रयत्नेषु वर्णेषु, समाम्नातेषु सम्यक् पाणिन्यादिना 'भू सत्तायाम्' इत्यादिना अर्थवत्तया प्रदर्शितेषु धातुषु सर्वमाख्यातं तिङाद्यादेशसमूहं उद्दिशन् स्वयमुच्चारयन् उद्देशानां उच्चारणप्रकाराणां समाख्याता सम्यक् परेषां व्याख्याता च । अभिसन्धिषु पदानामभितः सन्धिषु दध्यत्र शम्यत्रेत्यादिसन्धिषु तत्त्वं जानातीति स तथोक्तः । पदानि सुप्तिङन्तपदानि, अङ्गानि 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यनेन विहितान्यङ्गसंज्ञकप्रातिपदिकादिशब्दस्वरूपाणि अनुसरन् । कालधर्मेण भूतभवद्भविष्यदाख्यकालधर्मेण निर्दिष्टं भूते लिट् वर्तमाने लट् शेषे लृट् इति निर्दिष्टं यथार्थं अर्थमनतिक्रम्य वर्तमानं अभूत् भवति भविष्यतीत्यादिपदसमूहं अविचारयन् इदमदो वेति विचारो विरुद्धाचारः संशयः तमकुर्वन् । इदमित्थमेवेति निश्चित्य जानन्निति यावत् ॥

चिकीर्षितं च यो वेत्तेत्यत्र चिकीर्षितं प्रत्यययोगेन कर्तुमभीप्सितं शब्दप्रवृत्तिस्वरूपं वेत्ता । चर्करीतेन यङ्लुगन्तप्रयोगेन संयुतं सम्बद्धं बोभवीति नानर्दीति अचीकरत् अनददित्यादिशब्दरूपं, यङ्लुगन्तपदस्य चर्करीतमिति पूर्वाचार्याणां संज्ञा । युतं मिश्रितं अद्यतनकालसम्बद्धमिति यावत् । समयं पूर्वदिनरूपकालं उत्तरदिनरूपकालं वा अपेक्ष्य अकार्षीत् अकरोदित्यादिरूपेण

चा कर्तेत्यादिरूपेण वा भाषितं हृदयङ्गमं शब्दरूपं वेत्ति । आत्मने आत्मनेपदे परस्मै परस्मैपदे च स्वरसंस्कारयोगवित् स्वरसंस्कारस्य अनुदात्तस्वरितादिसंस्कारस्य योगवित् अनुदात्तङितः स्वरितञितश्च योगे आत्मनेपदं, 'शेषं कर्तरि परस्मैपदमित्येवमादिना तदतिरिक्तस्वरयोगे परस्मैपदमिति प्रयोगवैचित्र्यं जानन्नित्यर्थः । एषां स्वराणां अकारादिस्वराणां अकारोकारयोगे ओकार इत्यादिसन्ध्यक्षरप्रकारं स्वयं ज्ञाता । इमानेव स्वरान् शिष्यान् प्रति बोद्धा बोधयिता च । प्रवचनः प्रकृष्टं वचनं यस्य स तथोक्तः, ज्ञात्वा वाक्प्रयोगं कुर्वन्नित्यर्थः। उक्तवाक्यानां श्रुतौ तत्र तत्रोक्तशब्दानां एकतां एकवचनान्ततां बहुतां बहुवचनान्ततां, तथाशब्देन द्विवचनान्ततां च विज्ञाता ॥

बोद्धा हि विविधानर्थानित्यत्र विविधान् मुख्यलाक्षणिकोपचारभेदेन नानार्थान्, विविधान् व्यतिक्रमान् 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन' इत्युक्तव्यत्ययान् बोद्धा । बहुशः 'अस्तेर्भूः' इत्यादिबहुस्थलेषु विधिना वैयाकरणविधिना आदेशानां अभेदतः अभेदं एकत्वं एकस्मिन् स्थानिनि आदेशानामप्येकत्वं समीक्षिता । बहुशः 'लटः शतृशानचौ' इत्यादिबहुस्थलेषु आदेशानां भेदतः भेदं एकस्मिन् स्थानिनि बहुत्वं च समीक्षितेत्यर्थः । विधिना वैयाकरणविधिनैव वञ्चनानां गूढक्रियया वञ्चयन्ति जनानिति वञ्चनपदेन 'देवैरपि दुराधर्षां पुरीं रावणपालिताम् । लक्ष्मणेन सह भ्रात्रा कथं त्वं रघुनन्दनैः' इत्यादिगूढक्रियाः श्लोकाः कथ्यन्ते । अत्र हि हे रघुनन्दन देव कथमैरिति क्रिया निगूढा । एतादृशवञ्चनानां वञ्चकश्लोकानामपि समीक्षिता सम्यगीक्षिता ॥

नानार्थकुशलस्तत्र तद्धितेषु च कृत्सु चेत्यत्र तत्र वैयाकरणशास्त्रे तद्धितेषु 'तद्धिताः' इत्यधिकृत्य विहितेषु प्रत्ययेषु, कृत्सु कृत्संज्ञकप्रत्ययेषु च नानार्थकुशलः नानार्थकथनकौशल्यवान् । वर्णतः स्वरतः अर्थतः वाचां परिभूषयिता अलङ्कर्ता । नियतं प्रतिधातुकं धातून् धातून् प्रति प्रत्ययानां तव्यादि-

[1] शेषात्.

प्रत्ययानां समाख्याता सम्यग्योगं कृत्वा, कर्तव्यं करणीयं कार्यमित्यादिरूपेण व्यवहर्ता ॥

पञ्च चाक्षरजातीनि स्वरसंज्ञानि यानि चेत्यत्र अक्षरजातीनि केवल-हलन्ताक्षराणां जातयो येषु तानि पञ्च कु चु टु तु पु इति पञ्चनामानि, स्वर-संज्ञानि स्वरैः सम्यक् ज्ञायन्त इति स्वरसंज्ञानि क ख ग घ ङ इत्यादिरूपाणि च सम्यगाख्याता देवर्षिर्नारदः यदृच्छया आजगामेति योजना । पदवाक्य-प्रमाणाख्यसकलशास्त्रेष्वपि निपुण इति भावः ॥

इति सुन्दोपसुन्दोपाख्याने सप्तषष्ट्यधिकशततमोऽध्यायः ।

---

## ॥ अष्टषष्ट्यधिकशततमोऽध्यायः ॥

देवा भवन् अभवन् ॥

अन्यद्वृणीतामित्यत्र भवन्तौ अमरत्वादन्यत् अमरैः सह मृत्योर्विधानं वृणीतां वृणुताम् । यच्चस्मात्कारणात् महत्तपः अभ्युदितं युवाभ्यां कृतं तस्मा-त्कारणादिदं अमरत्वादन्यद्भवतामभीष्टं इति भवदुक्तप्रकारेण करिष्यामीति योजना ॥

सर्वस्मान्नौ भयं न स्यादित्यत्र नौ आवयोरित्यर्थः ॥

एतत् मृत्योर्विधानं अमरैः सह मृत्युविधानं यथावत् उक्तप्रकारेण वां युवयोः भविष्यतीति योजना ॥

मौलिनौ 'व्रीह्यादिभ्यश्च' इति वचनात् मौलिमन्तावित्यर्थः ॥

अकालकौमुदीं स्वमुखकान्त्याऽकालचन्द्रिकाम् । सुहृज्जने बन्धुजने, सुहृत्क्षय इति पाठे सुहृत्क्षये सुहृद्गृहे कामिनीः कामिनीः प्रति चक्रतुः । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः ॥

इति सुन्दोपसुन्दोपाख्याने अष्टषष्ट्यधिकशततमोऽध्यायः ।

---

## ॥ एकोनसप्तत्यधिकशततमोऽध्यायः ॥

कालेनैवेत्यत्र कालेन मृत्युना ॥

राजर्षिभिरदृश्यद्भिरित्यत्र अदृश्यद्भिः अदृश्यमानैः शून्यमासीदिति पूर्वेणान्वयः ॥

अस्थिकङ्कालसङ्कीर्णेत्यत्र अस्था शिरःपृष्ठाद्यस्था कङ्कालेन शरीरास्थ्ना चेत्यर्थः । 'शरीरास्थि तु कङ्काल' इत्यमरः ॥

इत्येकोनसप्तत्यधिकशततमोऽध्यायः ।

---

## ॥ सप्तत्यधिकशततमोऽध्यायः ॥

तत्र जिष्णुर्महादेव इत्यत्र जिष्णुरिन्द्रः । 'जिष्णुर्लेखर्षभः शक्र' इत्यमरः ॥

परमेष्ठी तथा बुध इत्यत्र परमेष्ठी भाविब्रह्मा मुख्यवायुः ॥

यथाकृतं यथाचेष्टमित्यत्र यथाकृतं कृतमनतिक्रम्य, यथाचेष्टं कृष्यादिषु कृतचेष्टामनतिक्रम्य सर्वं सर्वशः शशंसिर इति पूर्वेणान्वयः । तयोः कृतं कर्म येन क्रमेण येन केनापि क्रमेण यदा प्रतिषेद्धारो न, तदा निरुद्विग्नौ भयरहितौ, यथा अमरौ तथा विजह्राते इति योजना ॥

दृष्ट्वा च विश्वकर्माणमित्यत्र पितामहः विश्वकर्माणं दृष्ट्वा उपविशेति व्यादिदेश । अथ प्रार्थनीयेन रूपेण स्त्री सृज्यतामित्यब्रवीत् ॥

त्रिषु लोकेषु यत्किञ्चिदित्यत्र त्रिषु लोकेषु यत्किञ्चित् दर्शनीयं स्थावरजङ्गमं भूतं उत्पन्नं अस्ति, तत्तन्निष्ठं लावण्यं ततस्ततः यत्नात् समानयत् ॥

न तस्याः सूक्ष्ममप्यस्तीत्यत्र तस्याः गात्रे सूक्ष्ममपि अङ्गं यत् यस्मात् रूपसम्पदा रहितं नास्ति । निन्दितमिति पाठे निन्दितं नास्ति, तस्मात्कारणात् सर्वगात्रेष्वपि यत्र दृष्टिर्न सज्जते, तादृशं गात्रं नास्तीति योग्यपदाध्याहारेण योजना ॥

प्रीतो भूत्वेत्यत्र तां दृष्ट्वा प्रीतो भूत्वा तस्यै सर्वभूतानां सकाशादनुत्तमं वपुः, स्वश्रिया स्वसन्निधानागतश्रिया, 'ब्रीह्यादिभ्यश्च' इति सूत्रात् कान्तित्वं कान्तिमत्त्वं च वरं ददौ ॥

द्रष्टुकामस्य चात्यर्थमित्यत्र पार्श्वतः दक्षिणपार्श्वतः तस्यां तिलोत्तमायां गतायां सत्यां अत्यर्थं सम्यक् तां द्रष्टुकामस्य स्थाणोः अञ्चितपद्माक्षं अन्यद्दक्षिणमुखं निस्सृतम् । एवमुत्तरत्रापि योजना ॥

पृष्ठोत्तमशिलातल इत्यत्र पृष्ठं उपरिभागः उत्तमं मसृणतया मनोरमं यस्य तस्मिन् शिलातल इत्यर्थः ॥

सर्वेषामेव भूयिष्ठमित्यत्र भूयिष्ठं अत्यन्तम् ॥

इति सप्तत्यधिकशततमोऽध्यायः ।

---

## ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥

अन्योन्यभ्रुकुटीकृतावित्यत्र अन्योन्यभ्रुकुटी'कुरुत इति तौ तथोक्तौ ॥

मम भार्या तव गुरुरित्यत्र ज्येष्ठस्य मम पत्नीत्वात् तव गुरुः मातृस्थानीयेत्यर्थः । मम अनुजस्य मम भार्या तव वधूः स्नुषास्थानीया । 'वधूर्जाया स्नुषा स्त्री तु' इत्यमरः । पितृसमो ज्येष्ठ इति हि प्राचां वाचः ॥

इत्येकसप्तत्यधिकशततमोऽध्यायः ।

॥ सुन्दोपसुन्दोपाख्यानं समाप्तम् ॥

राज्यलाभपर्व समाप्तम् ।

---

## ॥ द्विसप्तत्यधिकशततमोऽध्यायः ॥

### (अर्जुनवनवासपर्व १५)

नामर्पन् कुरवः सर्वे हीनदोषान् सुखान्वितानित्यत्र नामर्षन्निति पाठे स्पष्टोऽर्थः । व्यवर्धन्निति पाठे विरुद्धतया अवर्धन् विरोधमेव वर्धयाञ्चक्रुरित्यर्थः ॥

वोऽस्माद्विषयादित्यत्र वः राज्ये विद्यमानात् अस्माद्ग्रामादित्यर्थः ॥

ब्राह्मणस्वे हृत इत्यत्र ब्राह्मणस्वे ब्राह्मणद्रव्ये ॥

उपप्रेक्षणजोऽधर्म इत्यत्र उपप्रेक्षणजः उपेक्षणाज्जातः अधर्मः ॥

यद्यस्य कुरवो द्वारीत्यत्र असद्गृहद्वारि अस्य ब्राह्मणस्य कुरवः कुत्सित ध्वनिः, रोदनध्वनिरिति यावत्; यद्यस्ति । अस्य कर्षणं नाशनं यदि न करोमि तर्हीत्युत्तरेणान्वयः ॥

प्रमाणमस्ति यदि त इत्यत्र मत्तः प्रमाणमेव वचनं निस्सरतीति ते हृदि यद्यस्ति, तर्हीत्युत्तरेणान्वयः ॥

गुरोरनुप्रवेशेनेत्यत्र गुरोरनुप्रवेशेन गुरो रमणगृहानुप्रवेशेन यवीयसः कनिष्ठस्य उपघातः धर्मोपघातः न । ज्येष्ठस्य पितृसमत्वात् ज्येष्ठपत्न्या मातृसमत्वात् कनिष्ठस्य पुत्रसमत्वात् अनवसरे मातापितृगेहप्रवेशः पुत्रस्य न दोष इति भावः । ज्येष्ठस्य यवीयसोऽनुप्रवेशः यवीयसो रमणगृहानुप्रवेशः ॥

इति द्विसप्तत्यधिकशततमोऽध्यायः ।

## ॥ त्रिसप्तत्यधिकशततमोऽध्यायः ॥

वौक्षाश्च भगवद्भक्ता इत्यत्र वौक्षाः 'वा गतिगन्धनयोः' इति धातोः स्त्रियां टापि कृते वाः सदागमनशीला नद्यः तासु औक्षाः आ समन्तात् उक्ष उक्षणं स्नानं येषां ते वौक्षाः तीर्थस्नानेन शुद्धान्तःकरणा इत्यर्थः ॥

रमणाश्च वनौकस इत्यत्र विनोदपरिहासादिना मनो रमयन्तीति रमणाः ॥

तेषु प्रबोध्यमानेष्वित्यत्र तेषु अग्निषु प्रबोध्यमानेषु अरण्योर्मथनेन प्रबोध्यमानेषु निरन्तरगतेषु अजस्राग्निष्वित्यर्थः ॥

कौरव्यस्याथ नागस्येत्यत्र कौरव्यस्य धृतराष्ट्रसमाननामधेयत्वात् कौरव्यस्य धृतराष्ट्राख्यनागस्येत्यर्थः ॥

नः अस्माकं मध्ये यः मोहादनुप्रविशेदिति योजना ॥

तत्र भूलोके, अत्र नागलोके मया सह रमणेऽपि भूलोके ब्रह्मचर्यस्य न भङ्ग इति भावः ॥

इति अर्जुनतीर्थयात्रायां त्रिसप्तत्यधिकशततमोऽध्यायः ।

## ॥ चतुस्सप्तत्यधिकशततमोऽध्यायः ॥

कृतवाञ्छौचमात्मन इत्यत्र शुचिरग्निः तत्सम्बन्धि कर्म शौचं यज्ञमिति यावत् ॥

प्रसवेनार्थीत्यत्र प्रसवेन सन्तानेन अर्थी प्रयोजनवान् ॥

एकप्रसवजं कुल इत्यत्र एकः प्रसवः सन्तानः जः जायमानो यस्मात्तदिति वरस्य विशेषणम् । एकप्रसवजं ऐकप्रसवोत्पादकमित्यर्थः ॥

पुत्रिका हेति विधिनेत्यत्र 'पुत्रिका ह पुत्र' इति श्रुत्युक्तन्यायेनेत्यर्थः ॥

इति चतुस्सप्तत्यधिकशततमोऽध्यायः ।

## ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥

मैत्रो ब्राह्मण उच्यत इत्यत्र मैत्रीं कुर्वन् मैत्रः ॥

विश्वं शतं सहस्रं च सर्वमक्षयवाचकमित्यत्र विश्वं शतं सहस्रमित्यादिप्रकारेण सङ्ख्यावाचकपदं सर्वमक्षय्यवाचकम् । शतादीनां पुनः पुनर्गुणने क्रियमाणे अनन्तवाचकमित्यर्थः । एतच्छतं परिमाणं एवं पूर्ववत् अक्षय्यवाचकं न । यदा च वः मोचकपुरुषसमागमो भवति तदैव शतकलामादाय वा शतदिनान्यादाय वा शतमासानादाय वा स एव कालः शतपदेन समापदेन च विवक्षित इति भावः ॥

चित्राङ्गदायाः शुल्कार्थमित्यत्र गृह गृहीष्व ॥

अनेन तु महिष्यद्येत्यत्र बभ्रुवाहनवर्धनात् वर्धनमुद्दिश्येत्यर्थः ॥

इति षट्सप्तत्यधिकशततमोऽध्यायः ।

## ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

सोऽपरान्तेषु तीर्थानीत्यत्र अपरान्तेषु पश्चिमसमुद्रप्रान्तेषु ॥

कुण्डी कुण्डिकावान् । 'कुण्डिका च कमण्डलुः' इति हलः । योग-

[1]एकैक.

भारवहः योगोचितदेवपूजादिमालाभारवहः ॥

चारणानां चाराणाम् ॥

इति सप्तसप्तत्यधिकशततमोऽध्यायः ।
अर्जुनवनवासिपर्व समाप्तम् ।

## ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥
(सुभद्राहरणपर्व १६)

ततो हलधरः क्षीव इत्यत्र क्षीवः मत्तः । 'मत्ते शौण्डोत्कटक्षीबा इत्यमरः ॥

गन्धर्वैश्च पृथक् पृथगित्यत्र गन्धर्वैः अश्वैः । 'अर्वा गन्धर्वोऽश्व' इति हलः ॥

कृतमेव तु कल्याणमित्यत्र यदि अस्याः कल्याणमेव कृतं तर्हि मम सर्वमभीष्टं भवेत् ॥

स्वभावस्य निमित्तत इत्यत्र स्वभावस्य संन्यासस्वभावस्य निमित्ततः कारणात् स च स्वयंवरः संशयितः संशयं प्राप्तः ॥

विनिश्चित्येतिकृत्यतामित्यत्र इतिकृत्यतां इतिकर्तव्यताम् ॥

कृतकृत्याः स्म शक्यत इत्यत्र वयं कृतकृत्याः स्मः । अर्जुनः कर्तव्यं[1] इदं कार्यं तेन कर्तुं शक्यते इति अनुजैः सार्धमुक्त्वा प्रीतिमुपेयिवानिति योजना ॥

इति सुभद्राहरणे अष्टसप्तत्यधिकशततमोऽध्यायः ।

## ॥ एकोनाशीत्यधिकशततमोऽध्यायः ॥

अयं देशातिथिः श्रीमानित्यत्र देशे देशे सञ्चरन्नतिथिर्देशातिथिः ॥

परवान् नाथवान् पराधीन इत्यर्थः ॥

इति एकोनाशीत्यधिकशततमोऽध्यायः ।

[1] कर्तव्यं.

## ॥ अशीत्यधिकशततमोऽध्यायः ॥

प्राप्तमज्ञातपूजाभिरित्यत्र अज्ञातस्य पूजाः अज्ञातपूजाः । पार्थमजानमान इव पूजयामासेति भावः ॥

न कृष्णा द्रौपदी रूपमित्यत्र वासुदेवसहोदरा यद्रूपं बिभर्ति, तद्रूपं द्रौपदी इन्द्रसेना वा वरुणात्मजा वा न प्राप्ताऽभूदिति योजना ॥

तोपयिष्यामि ऋण्येणेत्यत्र ऋपेर्योग्यं ऋण्यं तेन ॥

सोदराणां धनञ्जयः । न सस्मारेत्यत्र 'अधीगर्थदयेशां कर्मणि' इति सूत्रात् स्मृत्यर्थधातुयोगे कर्मणिषष्ठीविधानात् सोदराणामिति षष्ठी द्वितीयार्थे । सोदर्यान् सस्मारेत्यर्थः ॥

श्रुत्वा चाशनिनिर्घोषं केशवेनोपसीदता । उपमामर्जुनं कृत्वा मत्सरः कथितः पुरेत्यत्र अशनिनिर्घोषं अशनिसमं अर्जुनधनुर्ज्यानिर्घोषं श्रुत्वा 'मम समीभवितुं त्वमर्जुनः किम्' इति अर्जुनमुपमां कृत्वा राज्ञां यो मत्सर आसीत् सः उपसीदता सुभद्रासमीपे स्थितेन केशवेन कृष्णेन कथितः सुभद्रां प्रति कथितः । अतः सुभद्रायाः अर्जुने बह्वभिमान इति भावः ॥

क्रुद्धमत्तप्रलापश्च वृष्णीनामर्जुनं प्रति । पौरुषं चोपमां कृत्वेत्यत्र पौरुषमुपमां कृत्वा धनुष्मतां वृष्णीनामर्जुनं प्रति यः क्रुद्धमत्तप्रलापः प्रावर्तत, सोऽपि केशवेन कथित इति पूर्वेणान्वयः ॥

'अर्जुनोपि न मे तुल्यः कुतस्त्वमिति तेऽब्रुवन्' इत्यपि केशवेन कथितम् ॥

'अर्जुनस्य समो वीर्ये भव तात धनुर्धर' इति वृष्णयो यदब्रुवन् तदपि केशवेन कथितम् ॥

तस्मात्सुभद्रा चक्रम इत्यत्र तस्मात् आत्मानं प्रति अर्जुनशौर्यस्य कृष्णेन वारं वारं वर्णितत्वात् ॥

चारणातिथिसञ्ज्ञानामित्यत्र चारणाः चाराः तेषां अतिथिसञ्ज्ञानां शठस्य निशठस्य च मुखाच्छ्रुत्वेति योग्यपदाध्याहारः ॥

कीर्तयन् ददृशे यो य इत्यत्र यः यः पुरुषः कुरुजाङ्गलं कीर्तयन् सुभद्रया कथञ्चिद्ददृशे, तं तं बीभत्सुमभिपृच्छति[1] ॥

चरद्भगवतेत्यत्र चरंश्चासौ भगवांश्च चरद्भगवान् तेन ॥

स तद्व्यक्तमित्यत्र व्यक्तं यथा भवति तथा तत् तत्कृतप्रश्नोत्तरमित्यर्थः। आत्मनः स्वस्य चरितमाचरितम् ॥

यथा भगवतो भाव इत्यत्र तव मयि भगवतः पूज्यस्य भावः पूज्यत्वमित्यर्थः ॥

शशास रुग्मिणीमित्यत्र तदा सुभद्रायाश्चिन्तार्तत्वेन भोजनदानासमर्थत्वसमये अर्जुने भोजनानि दिशेति रुग्मिणीं शशास आज्ञप्तवान् ॥

काश्यां विद्यमानः शिवः काश्यः । 'पा पान' इति धातोः चित्तमभिभूय अर्धनारीश्वरं कृत्वा देहस्यार्धमेव पिबन्निव विद्यमानः कामः काश्यः तेन सह विद्यमानः; कामार्त इति यावत् ॥

अन्तर्द्वीपं तु गम्यतामित्यत्र अन्तर्द्वीपं समुद्रान्तर्विद्यमानं कञ्चिद्द्वीपम्॥

वासुदेवसमैरित्यत्र वासुदेवेन समं विद्यमानाः वासुदेवसमाः तैः ॥

यादवाः पानहेतव इत्यत्र पानहेतवः पानं हेतुः मदहेतुर्येषां ते तथोक्ताः ॥

इति सुभद्राहरणे अशीत्यधिकशततमोऽध्यायः ।

---

## ॥ एकाशीत्यधिकशततमोऽध्यायः ॥

प्रभवतां गता इत्यत्र प्रभवाः समर्थाः तेषां भावः प्रभवता ताम् ॥

जायते याऽनुभर्तारमित्यत्र भर्तारमनु अनुसृत्य मां जायां कुर्वित्यनुसृत्य या जायते भार्या जायते सा नामतः जाया; स्वयमेव जातत्वाज्जायेति कथ्यते॥

नारायणोपि धर्मज्ञो नावबुध्येत विश्वकृदित्यत्र धर्मज्ञः आपद्धर्मज्ञः नारायणः नावबुध्येत त्वयि मयि च अवमानं न कुर्यात् ॥

---

[1] पृच्छन्ती.

चिन्तयामास पितरमित्यत्र पितरमिन्द्रम् । लतागृहं लतामध्यगत-गृहम् ॥

क्रियां भद्रे प्रयोजयन्नित्यत्र भद्रे शोभने दिने क्रियां विवाहक्रियाम् ॥

वैवाह्यान् विवाहसम्बन्धिनः, माङ्गल्यान् मङ्गलयोग्यान् शोभनाक्षता-दीन् ॥

वसेस्त्वं रुग्मिणीवृत इत्यत्र रुग्मिणी रुग्मवती सर्वालङ्कारभूषिता सुभद्रा तया वृतः वसेः । रुग्मिणीवृतः जनार्दनः प्रचक्रामेत्युत्तरेण वा सम्बन्धः ॥

द्वादशानां वरस्त्रीणामित्यत्र रूपेणासदृशीं सतीं सुभद्रां 'वागीश्वरी क्रिया कीर्तिर्लक्ष्मीः पुष्टिश्च सन्नतिः । कान्तिर्ह्रीः श्रीः शुचिर्ज्येष्ठा रतिश्च द्वादश स्त्रिय' इति परमसंहितायामुक्तानां द्वादशस्त्रीणां मध्ये ह्रीं श्रियं सन्नतिं क्रियां च जज्ञे ज्ञातवान् ॥

तत्प्रसादमपद्यतेत्यत्र तस्यां सुभद्रायां प्रसादमित्यर्थः ॥

इति सुभद्राहरणे एकाशीत्यधिकशततमोऽध्यायः ।

---

## ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥

व्रतार्थमिव भापित्वेत्यत्र व्रतार्थे मम देवतादर्शनव्रतार्थे इव इतीव ॥

अनुकर्षपताकाश्चेत्यत्र अनु पृष्ठतः कर्ष(आ)माकर्षणं यासां ताः पताकाः ॥

अभीशुः रथरज्जुः ॥

पार्श्वे वामे पुरस्ताच्च सखा तस्याग्रणीरिवेति पार्श्वे दक्षिणपार्श्वे वामे सव्ये पुरस्तादग्रतश्च अग्रणीः सर्वोत्तमः सखा तस्य सखा सारथ्यं कुर्वन् कृष्ण इव सुभद्रा अश्वानचोदयदिति पूर्वेणान्वयः । पार्श्वे चामरहस्ता सा सखी तस्याः सहाभवदिति पाठे चामरहस्ता सा पूर्वं विद्यमाना तस्याः सुभद्रायाः सखी पार्श्वे अर्जुनपार्श्वे चामरहस्ता सती सहाभवदित्यर्थः ॥

विपृथुश्रवा इत्यत्र विपृथुरिति लोके श्रवः श्रवणं यस्य स तथोक्तः विपृथुरित्यर्थः ॥

अन्तरेण सुभद्रामित्यत्र अन्तरेण मध्ये सुभद्रां त्वां च वक्तुं मागेवा-कार्षीत् ॥

गुप्तः सेनानुयात्रेणेत्यत्र सेनामनुसृत्य यात्रा यस्य तेन विपृथुना ॥

तदाऽऽसीत्तुमुलो महानित्यत्र तुमुलः कोलाहलः । 'कोलाहलः कलकल-स्तुमुलो व्याकुलो रव' इति हलः ॥

वनमाली ततः क्षीव इत्यत्र क्षीवः मत्तः वनमाली हलधरः ॥

इति सुभद्राहरणे त्र्यशीत्यधिकशततमोऽध्यायः ।

सुभद्राहरणपर्व समाप्तम् ।

---

## ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥

### (हरणाहरणपर्व १७)
### (हरणहारिकपर्व १७)

अर्थलुब्धान्न वः पार्थो मन्यत इत्यत्र पार्थः वः अर्थलुब्धान्न मन्यते। अयमेकः सन्मानः । एतादृशबुद्ध्यभावे वह्वर्थान् दत्त्वा कन्यां हरेत् । स्वयंवरं अनाधृष्यं कर्तुं शक्यं न मन्यते । द्रौपदीस्वयंवरवत् असाध्ये कस्मिंश्चिदुपाये कृते सति यादवेष्वपि बहुसमर्थाः सन्ति । तेष्वेव अतः स्वयंवरोपि न शक्य इति मन्वानेनार्जुनेन भवत्सु महासामर्थ्यमस्तीत्यङ्गीकृतम् । अयमेकः सन्मानः॥

अर्थेन कन्यावरणे पुनरपि दोषद्वयं वक्ति— प्रदानमिव कन्याया इति । पशुवत् कन्याया निमित्ते प्रदानं अर्थप्रदानं कः अनुमंस्यते ॥

मम शस्त्रा विशेषेणेत्यत्र शस्त्रा शस्त्राणि । 'सुपां सुलुक्' इति सूत्रात् सुपो लोपः ॥

सम्बन्धं नार्हति द्विपामित्यत्र पितृष्वसायाः पुत्रः पार्थः द्विषां मे द्विपामेव सम्बन्धं नार्हति; न त्वस्माकम् । ततः सुहृद्भिर्भवद्भिः सौहार्दमेव कर्तव्यं न तु विरोध इति भावः ॥

---

'सन्धानं.

प्रमदानशुचीन्मूढानित्यत्र प्रमदान् प्रकृष्टमदान् अशुचीन् मूढान् पानशाटीन् सुरापानस्य भाण्डभूतान्, 'शाटीं वस्त्रं विजानीयाच्छाटिं भाण्डं विदुर्बुधा' इत्यभिधानात् । तान् यादवान् शरोत्तमैर्विद्ध्वा वमनं करिष्यामि कारयिष्यामि । शरैर्विद्ध्वा उदरस्थितमद्यस्य वमनं कारयिष्यामीत्यर्थः ॥

जवनैः वेगयुक्तैः । प्रत्यानयार्थं नयो नयनं, प्रत्यानयनार्थं परावृत्यानयनार्थमित्यर्थः ॥

अर्जुनेन कृतं श्रुत्वेत्यत्र दीर्घगतं दीर्घाध्वानं गतं बहुदूरगतमित्यर्थः ॥

इति (सुभद्राहरणे) हरणाहरणे चतुरशीत्यधिकशततमोऽध्यायः ।

## ॥ पञ्चाशीत्यधिकशततमोऽध्यायः ॥

गच्छ त्वं व्रजिनं पुरमित्यत्र प्राकौरवैः पाण्डवोपरि द्वेषेण कुटिलवास्त्वादिभिर्निर्मितत्वाद्व्रजिनं वक्रं, परितो व्रजवन्तं गोष्ठवन्तं वा, परेषां सुखेनाप्रवेशाय कुटिलमार्गोपेतत्वाद्वा व्रजिनं, दुर्जनमनसामसह्यत्वेन च वक्रत्वाद्वा व्रजिनम् । 'वक्रं व्रजिनं भङ्गुरम्' इति हलायुधः । व्रजी नानाविधसेवकव्रजवान् धर्मराजो नेता यस्य तद्व्रजिनं, व्रजिनो गोष्ठवन्तो गोपाः परितः क्षीरनवनीतादिनेतारो यस्येति च योगेन वा व्रजिनं पुरमिन्द्रप्रस्थं गच्छेत्यन्वयः । कामव्याह(र)रिणी कृष्णा द्रौपदी कामेन व्याह(र)रिणी व्याहारवती व्यवहर्त्री, प्रियं निष्ठुरं वा स्वेच्छया वदन्तीत्यर्थः ॥

ओजसा निर्जितेत्यत्र ओजसा सुभद्राया अवष्टम्भशक्त्या, सहनशक्त्येति यावत् । निर्जिता वशीकृतमनाः ॥

हर्षादानर्तयोधानामित्यत्र आनर्तयोधानां अनर्तविषयभटानां यादवानामित्यर्थः ॥

ततास्तन्यनुयात्राणीत्यत्र अर्जुनमनु यात्रा येषां तानि यादवसैन्यानि अनुयात्राणि ॥

इति (सुभद्राहरणे) हरणाहरणे पंचाशीत्यधिकशततमोऽध्यायः ।

## ॥ षडशीत्यधिकशततमोऽध्यायः ॥

राजा विपृथुरित्यत्र हे सखे इति पौराणामन्योन्यं सम्बुद्धिः । पुरस्तात्सङ्कर्षणभये सति पिता वसुदेवेन पुरुषेन्द्रेण कृष्णेन च राजा विपृथुरक्रूरश्च अभिमानितः सुभद्राविवाहे अभिमानवान् कृत इति प्रत्येकं सम्बन्धः ॥

वृष्ण्यन्धकमहामात्रैरित्यत्र 'महामात्रः प्रधानः स्याद्धस्त्यारोहः क्वचिद्भवेत्' इति वचनात् वृष्ण्यन्धकप्रधानैरित्यर्थः ॥

अनाधृष्टिर्महाबाहुरित्यत्र न विद्यते आ समन्ताद्धृष्टिर्धर्षणं बलात्कारेण हरणं यस्य स तथोक्तः ॥

व्यालाजिनपुरस्कृतानित्यत्र व्यालाजिनं गजचर्म । 'व्यालो दुष्टगजः प्रोक्त' इति हलः ॥

स्त्रीणां सहस्रं गौरीणामित्यत्र 'द्वाविंशद्वार्षिका गौरी श्यामा यौवनमध्यगा' इत्यभिधानात् गौरीणां द्वाविंशद्वयस्कानाम् ॥

कृताकृतस्य मुख्यस्येत्यत्र 'हेमरूप्ये कृताकृते' इत्यभिधानात् कृताकृतस्य हेमरूप्यात्मकस्य वित्तस्य । कृताकृतं कृतं केवलसौवर्णं, अकृतं मौक्तिकरत्नादिकं, कृताकृतं रत्नखचितसौवर्णाभरणं तस्य ॥

रामं पादग्रहानीकमित्यत्र पादग्रहाः पादसेवाकारिणः तेषामनीकम् ॥

न्यासेति द्रौपदीमित्यत्र नूतनतया परिग्रहे मातृपक्षीयैर्विन्यस्यमाना कन्या न्यासेत्युच्यते ॥

इति (सुभद्राहरणे) हरणाहरणे षडशीत्यधिकशततमोऽध्यायः ।

---

## ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥

मखे निर्मथ्यमानाद्वा शमीगर्भाद्धुताशन इत्यत्र 'वा विकल्पोपमानयोः' इत्यभिधानात् हुताशनो वा हुताशन इव ॥

चतुष्पादं दशविधं धनुर्वेदमरिन्दम । अर्जुनाद्वेद वेदज्ञात्सकलं

'विजयः. 'रामः

दिव्यमानुपमित्यत्र 'विधिपादो मन्त्रपादः पूजापादस्तथैव च । रहस्यपाद इत्येतदुक्तं पादचतुष्टयम् ॥ शिष्याविधिः प्रयोगश्च मुष्टिर्लक्षनिपातनम् । अस्त्र-मस्त्रतपश्चर्या प्रमोक्षौ दिव्यमानुषौ ॥ मुक्तानामुपसंहारश्चैतद्दशविधं स्मृतम्' इति वचनात् चतुष्पादं दशविधं धनुर्वेदं ऋगादिवेदज्ञादर्जुनाद्वेद 'विदू लाभ' इति धातोः लब्धवानित्यर्थः ॥

शाश्वतः प्रतिविन्ध्यं तमित्यत्र विप्राः युधिष्ठिरं युधि युद्धे स्थिरं तं कुमारं शाश्वतः ज्योतिश्शाश्वात् अधिगम्य प्रतिविन्ध्यं विन्ध्याचलस्य प्रतिभूतं स्थैर्ये विन्ध्याचलोपममिति यावत् । प्रतिभटान् शस्त्रेण विध्यतीति वा प्रति-विन्ध्यमूचुः । निरुक्तत्वाद्विन्दोरागमः । परप्रहरणज्ञाने परेषां प्रहरणं प्रहारः तस्य ज्ञाने स्वयं स्वयमेव दिनेदिने स्वाभ्यासकौशलेनेति यावत् । प्रतिभटे वेधनसमर्थत्वाद्विन्ध्याचलवत्प्रतिभटप्रहाराभीरुत्वाच्च प्रतिविन्ध्योऽभवत ॥

सुतसोमसहस्र इत्यत्र 'षुञ् अभिषवे' इति धातोः सुतः प्रसुतः सोमः यैस्ते यजमाना राजानः तेषां सहस्रे सोमार्कसमतेजसं चन्द्रसूर्याविव शोभ-मानमित्यर्थः । श्रुतसोमोपमत्वाच्छ्रुतसोम इति भावः ॥

श्रुतं कर्म महत्कृत्वेत्यत्र महत्कर्म पुण्यं कर्म कृत्वा निवृत्तेन किरीटिना, तथा तव पुण्यकर्मानुसारेण पुत्रो जात इति यतः श्रुतः; ततः कर्मपरिपाके श्रुतत्वात् श्रुतकर्मा अभवदिति योजना ॥

शतानीकस्येति पद्यं स्पष्टम् ॥

ततस्त्वजीजनत्कृष्णेत्यत्र ततः शतानीकोत्पत्त्यनन्तरं वह्निदैवतनक्षत्रे कृत्तिकानक्षत्रे यतः अजीजनत्, तस्मात्कृत्तिकानक्षत्रोत्पन्नत्वाच्च सहदेवसुतं कृत्ति-कानक्षत्रोत्पन्नसेनानीसाम्याय श्रुतसेन इति तं विदुः ॥

इति सप्ताशीत्यधिकशततमोऽध्यायः ।

हरणाहरणपर्व समाप्तम् ।

---

## ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥
### (खाण्डवदाहपर्व १८)

पुण्यलक्षणधर्माणमित्यत्र देहिनः स्वदेहमिव स्थितं पुण्यलक्षणधर्माणं धर्मराजानमाश्रित्य लोकः सुखमवसदित्येकान्वयः ॥

त्रीनिवात्मसमानित्यत्र इह लोके बन्धुमान् पुरुषः आत्मसमान् त्रीन् बन्धूनिव धर्मकामार्थान् समानयत् सिषेवे । तौ स्वराष्ट्रे देहवतामिव मूर्तिमतामिव विद्यमानानां समविभक्तानां तेषां धर्मकामार्थानां पार्थिवः चतुर्थः मोक्ष इव बभौ ॥

न तु केवलदैवेनेत्यत्र भावेन ऐहिकविषयभोगाख्यविलासेन । मनःकान्तं मनःप्रियम् ॥

कृष्ण कृष्ण (वि) निवर्तन्तामित्यत्र नागरविहारा इति योग्यपदाध्याहारः ॥

कुन्तीमातरित्यत्र कुन्ती माता यस्येति व्युत्पत्त्या कुन्तीमातः कौन्तेयेत्यर्थः ॥

खाण्डवं देशं खाण्डववनप्रदेशम् ॥

माल्यङ्गैः मातुलङ्गैः ॥

निरुद्देशेत्यत्र गजसंस्थितैः गजाः सम्यक् तिष्ठन्ति एभिरिति गजसंस्थितानि गजपदानि तैरावृतं, अत एव निर्गताध्वदेशो यथा भवति तथा समप्रख्यं समभूमिसमानम् ॥

कुलिङ्गाक्षैः वनेक्षुभिः ॥

तं वक्ष्यमाणविनाशम् ॥

इति खाण्डवदहने अष्टाशीत्यधिकशततमोऽध्यायः ।

---

## ॥ एकोननवत्यधिकशततमोऽध्यायः ॥

दावं वनम् । 'दवो दावः कान्तारोऽस्त्री महावनम्' इत्यमरः ॥

चतुर्थं लोकपालानामित्यत्र चतुर्थं स्वापेक्षया चतुर्थम् ॥

सर्वायुधमहामात्रमित्यत्र 'महामात्रः प्रधानः स्यात्' इति वचनात् सर्वायुधप्रधानम् ॥

इति खाण्डवदहने एकोननवत्यधिकशततमोऽध्यायः ।

---

## ॥ द्विनवत्यधिकशततमोऽध्यायः ॥

रथयोराशुविक्रमा इत्यत्र आशु वनाद्बहिः पलायनाय पादविक्षेपो येषां ते तथोक्ताः ॥

तत्राक्षमात्रा विसृजन्नित्यत्र अक्षमात्राः ईषादण्डप्रमाणाः ॥

इति खाण्डवदाहे द्विनवत्यधिकशततमोऽध्यायः ।

---

## ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥

पावको वासुदेवश्चेत्यत्र हे पार्थ तव सहायभूतः पावकः, वासुदेवः, चशब्देन भवांश्च इह लोके अप्रतिष्ठः प्रतिष्ठारहितः प्रकर्षेण स्थितिरहितः भवति भवत्विति प्रत्येकं सम्बन्धः ॥

निष्प्रतीकार इत्यत्र निर्गतः प्रतीकारः इन्द्रकृतोऽन्तरायो यस्य स तथोक्तः । भावप्रधानो निर्देशः । खवनभक्षणस्य निष्प्रतीकारत्वात् हृष्टरूप इत्यर्थः ॥

शिबिकां च धनेश्वर इत्यत्र शिबिकामारुह्य गतः । चशब्देन मुद्गराख्यमायुधं च समुच्चिनोति ॥

इति खाण्डवदाहे त्रिनवत्यधिकशततमोऽध्यायः ।

---

## ॥ चतुर्नवत्यधिकशततमोऽध्यायः ॥

गिरेर्विकीर्यमाणस्येत्यत्र विकीर्यमाणस्य शरैराकीर्यमाणस्य, अत एव (प्र)प्राविशीर्यतः बहुधा शीर्यमाणशृङ्गस्य रूपं, सार्कचन्द्रग्रहस्य अर्कचन्द्रादि-

ग्रहसहितस्य नभसः रूपमिव बभौ। विशीर्णशृङ्गाणां ग्रहाणां चोपमा ॥

तत्पातनादशब्देनेत्यत्र तस्य गिरिशृङ्गस्य पाते सति जातनादेन शक्रे शरैर्विशीर्यमाणकाञ्चनशृङ्गशब्देन च ॥

दानवानां च सर्वश इत्यत्र देवानां दानवानां च मध्ये ॥

रोधस्सु विषमेषु चेत्यत्र रोधस्सु वनतटेषु ॥

एकायनगताः एकमार्गेण गताः पुञ्जीभूय गताः उत्पतन्ति ऊर्ध्वं पतन्ति ॥

दीप्तस्य वसुरेतस इत्यत्र 'हिरण्यरेता हुतभुग्दहनः पावकोऽनल' इत्यभिधानात् वसुरेतसः हिरण्यरेतसः ॥

शार्ङ्कान्[1] शा(र्ङ्ग)र्ङ्कनामपक्षिणः ॥

इति खाण्डववनदाहे मयदर्शने चतुर्नवत्यधिकशततमोऽध्यायः।

---

॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥

शार्ङ्गिकां[2] शा(र्ङ्ग)र्ङ्को भूत्वेत्यत्र जात्या शार्ङ्कां, नाम्ना जरिताम् ॥

जगाम लपितामित्यत्र लपिताख्या अपरा तज्जातिस्था तस्यैव स्त्री। तदन्तिकं जगामेत्यर्थः ॥

तेन त्यक्तानित्यत्र असन्त्याज्यान् त्यागानर्हान् ॥

विदित्वाऽस्येत्यत्र अस्य अग्नेः ॥

त्वामेकमाहुरित्यत्र त्रिविधं त्रेताग्निरूपतया त्रिविधम्। अष्टधा अणिमाद्यष्टैश्वर्यवत्तया ॥

त्वत्तो निष्क्रम्य हायना इत्यत्र हायनाः 'हय गतौ' इति धातोः दिशि दिशि सञ्चरन्त इति जलदानां विशेषणम् ॥

हव्यवाहस्त्वित्यत्र तस्य अमिततेजसः मुनेर्मन्दपालस्य हव्यं वहतीति हव्यवाहः पावक इति सम्बन्धः ॥

इति खाण्डवदाहे मयदर्शने पंचनवत्यधिकशततमोऽध्यायः।

---

[1] शार्ङ्गकान्. [2] शार्ङ्गिकां.

## ॥ षण्णवत्यधिकशततमोऽध्यायः ॥

'सप्तार्चिर्द(म)मुनाः शुक्र' इत्यभिधानात् शुक्रः वह्निः ॥

अवर्हाश्चरणैर्हीना इत्यत्र अवर्हाः पक्षरहिताः ॥

सरणे गमने चेत्यत्र सरणे गमने सरितुं गन्तुम् ॥

जरितारौ कुलं हीदमित्यत्र जरितारिरिति ज्येष्ठपुत्रस्य नाम । सारिसृक्कः स्तम्बमित्रः द्रोण इति क्रमेण त्रयाणामनुजानां नाम ॥

कमुपादाय शक्येतेत्यत्र आपत् कस्य उत्तमा कस्य हितकरी, न कस्यापीत्यर्थः । अतः कमुपादाय मया गन्तुं शक्येत ॥

इति मातापुत्रसंवादो नाम षण्णवत्यधिकशततमोऽध्यायः ।

---

## ॥ सप्तनवत्यधिकशततमोऽध्यायः ॥

संशयं ह्यग्निरित्यत्र संशयो यथा भवति तथा अग्निरागच्छेद्धि । अग्न्यागमनं तु सन्दिग्धमिति भावः । वायोः विपरीतवायोः सकाशात् अग्नेर्निवर्तनं दृष्टं हि ॥

समाकुलेष्वित्यत्र ज्ञानेषु समाकुलेषु सत्सु यत्कृतं, तत् बुद्धिकृतं बुद्ध्या कृतं नैव ॥

अम्बायाः पुनरेव न इत्यत्र हे अम्ब नः प्रति पुनः आयाः आगच्छेः ॥

इति जरितागमनं नाम सप्तनवत्यधिकशततमोऽध्यायः ।

---

## ॥ अष्टनवत्यधिकशततमोऽध्यायः ॥

पुरतः कृच्छ्रकालस्येत्यत्र यः धीमान् कृच्छ्रकालस्य सङ्कटप्राप्तिकालात् पुरतः पूर्वमेव जागर्ति तत्प्रशमोपायं विचार्य तिष्ठति, स इति सम्बन्धः ॥

ज्येष्ठस्तातेत्यत्र मुञ्चति मोचयति ॥

हिरण्यरेता इत्यत्र वः क्षयं गृहम् ॥

आत्मा स वायुरित्यत्र हे पवन पावन शुक्र पावक! आत्मा परमात्मा,

सः प्रसिद्धो वायुः, शरीरं, उत वीरुधः, आपश्च ते योनिः कारणम्। आत्मनः सर्वस्रष्टृत्वात्, फुत्कारवायुना अग्न्युत्पत्तेः, शरीरात् जाठराग्न्युत्पत्तेः लताकाष्ठादिभ्योप्यग्न्युत्पत्तेः योनित्वम्। 'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमात्मनो लोहमुत्थितम्' इति वचनात् प्रलयकाले अपां चाग्नियोनित्वमिति द्रष्टव्यम्। 'अग्नेराप' इति श्रुतेः योनिस्त्वमसि चाम्भस इति तु प्रसिद्धम्॥

माता प्रपन्नेत्यत्र प्रपन्ना दूरं गता। 'पद गतौ' इति धातुः॥

परिधत्स्वैकवीरेत्यत्र परिधत्स्व धारय। 'डुधाञ् धारणपोषणयोः' इति धातुः॥

त्वमेवैक इत्यत्र तपसा तपनशक्त्या त्वमेव एकः प्रधानम्। गोषु किरणेषु तप्ता तापकर्ता अन्यः न॥

हरितच्छदा इत्यत्र हरिताः हरिद्वर्णानि च्छदाः पत्राणि। 'दलं पर्णं छदः पुमान्' इत्यमरः॥

सागरस्य ग्रहानिवेत्यत्र वडवाग्निरूपेण दहन्नपि सागरस्य ग्रहान् प्रसिद्धमकरानिव अस्मान्मुञ्चेति योजना॥

आर्तिसम्भवानित्यत्र आर्तेः सम्भवो येभ्यस्तान् एतान् मार्जारानिति सम्बन्धः॥

इति अष्टनवत्यधिकशततमोऽध्यायः।

---

## ॥ द्विशततमोऽध्यायः ॥

मन्दपालोपि कौरव्येत्यत्र अशीतांशुमग्निं प्रति प्रागुक्तवान् मम पुत्रान् मा दहेत्युक्तवानपि सः मन्दपालः न तप्यते स्म न, नातप्यतेति न। पुत्रस्नेहात्तापमकरोदेवेति भावः॥

नासमञ्जसवेत्तेत्यत्र तेषु पुत्रेषु असमञ्जसममङ्गलं अग्निभयान्मरणमित्यर्थः। वेत्ता शङ्किता न। तेषु मानसं नास्ति। किन्तु तामेवेत्यादि योजना॥

न हि पक्षवतेत्यत्र सुहृज्जने स्वसुहृज्जने निःस्नेहेन स्नेहरहितेन पक्षवता

अन्यत्र पक्षवता पुरुषेण पीड्यमानः आत्मा जीवः उपस्प्रष्टुं उपपन्नतया करेण स्प्रष्टुमपि कथञ्चन शक्यो न । एतत् स्नेहरहितपुरुषकरस्पर्शनं न्याय्यं न हि ॥

भूतं हित्वेत्यत्र भूतं जातमपत्यं हित्वा तथा लोकानन्नमत्य भविष्यत्वे भविष्यदपत्यवान् भविष्यन्, तादर्थ्ये सप्तमी । तद्भावाय ॥

तस्माद्देशादित्यत्र महात्मनि ज्वलने, यत्र शा(र्ङ्ग)र्ङ्गकाः स्थिताः तस्मा-द्देशादतिक्रान्ते अतिक्रम्य गते सति । यत्र शा(र्ङ्ग)र्ङ्गकाः स्थिताः तं देशमप्य-दग्ध्वा पुरतो गते सतीत्यर्थः ॥

अथ ते सर्व इत्यत्र ते सर्वे सुताः चिरोषितत्वात् एकवारं नाभ्यजा-नन्त । पुनः गुरुत्वात्स्वपितृत्वात् तपसः विशेषतश्च अभ्यजानन्त ॥

लालप्यमानेत्यत्र जरिता लालप्यमाना आस' । तैः शिशुभिः साध्व-साधु वा नोच्यत इति सम्बन्धः ॥

कृतवानपीत्यत्र हव्यमश्नातीति हव्याशोऽग्निः तस्मिन् इमान् शिशून् कृतवानप्यहं इतः जीवद्भ्यः शिशुभ्यः परां शान्तिं लभ इति सम्बन्धः ॥

न स्त्रीणां विद्यत इत्यत्र स्त्रीणामन्यत्र देशान्तरे पुरुषान्तरात् पुरुषस्य स्वभर्तुः अन्तरं व्यवधानं सम्पाद्येति ल्यब्लोपनिमित्ता पञ्चमी । यत् सापत्निकं सपत्नीसहितत्वं तद्दते किञ्चिदप्रियं न विद्यत इति योजना ॥

लक्ष्याऽलक्ष्येत्यत्र कदाचिल्लक्ष्या कदाचिदलक्ष्या कदाचिदनुकूला कदाचिन्नानुकूला च निमित्तमिव सेवादिनिमित्तं यथाऽस्ति तथा लक्ष्यते ॥

इष्टमेवमित्यत्र सा अरुन्धती एवं मद्वत् गते स्वभर्तरि इष्टं सख्यं हित्वा यथा त्वं तथैव च वर्तते ॥

हितं कार्यमित्यत्र हितं स्वहितम् ॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यामादिपर्वणि खाण्डववनदाहे (मयदर्शने) कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचित-लक्षालंकाराख्यटीकायां द्विशततमोऽध्यायः ।

॥ आदिपर्व समाप्तम् ॥

# अथ सभापर्व २

## (अथ मन्त्रपर्व १)

## ॥ द्वितीयोऽध्यायः ॥

अहं हि विश्वकर्मा वा इत्यत्र वै इति पदच्छेदः । विश्वानि समस्तानि कर्माणि दारुभिः क्रियमाणकर्माणि[1] यस्य स इति योगेन मयोऽपि विश्वकर्मा॥

यथावेद्येत्यत्र आवेद्येति पदच्छेदः ॥

दशकिष्कुसहस्राणि मापयामास सर्वत इत्यत्र 'किष्कुर्हस्ते वितर्ने च' इत्युक्तत्वात् हस्तपरिमितो देशः किष्कुरित्युच्यते । दशसहस्रकिष्कुपर्यन्तं सभाकरणाय भूमिं मापयामास 'माङ् मान' इति धातोः मानदण्डेन मानं कारयामासेत्यर्थः ॥

अभीशून् प्रति जग्राहेत्यत्र अभीशून् रथरज्जूः ॥

सह भ्रातृभिरच्युत इत्यत्र अच्युतः भक्त्यादिगुणैश्च्युतिरहितः ॥

इति सभापर्वणि द्वितीयोऽध्यायः ।

---

## ॥ तृतीयोऽध्यायः ॥

उत्तरेण तु कैलासमित्यत्र कैलासमुत्तरेण मैनाकपर्वतं प्रति कैलासपर्वतमारभ्य मैनाकपर्वतपर्यन्तं आयतायां बिन्दुसरोवराख्यतीर्थस्याभिमुख्ये विद्यमानायां सभायां यद्भाण्डमासीत्, तद्ब्रूहीति सम्बन्धः ॥

यौवनाश्वेन मुचुकुन्देन ॥

यत्रेष्टं वासुदेवेनेत्यत्र वासुदेवेन नारायणेन । प्रतिपत्तये विश्वासाय॥

इति सभापर्वणि तृतीयोऽध्यायः ।

---

[1]क्रियमाणानि कर्माणि.

## ॥ त्रयोदशोऽध्यायः ॥

तां तु कृत्वेत्यत्र एषा सभा रचिता । ध्वजाग्र्यश्च मया कृतो भविष्यति ॥

तत्र मल्ला इत्यत्र हल्लाः नानावाद्यकुशलाः ॥

निर्विविक्षुरुदारधीरित्यत्र नितरां वेष्टुमिच्छुः निर्विविक्षुः ॥

कच्चिदर्थेन वा धर्ममित्यत्र अर्थेन अर्थार्जनप्रयत्नेन धर्मं स्वविहितधर्मं न बाधसे कच्चित् । धर्मेण सदा स्नानादिव्यसनेन अर्थं राजपदवीयोग्यार्थं न बाधसे कच्चित् । अयं संन्यासिनां धर्मः; न तु राज्ञ इति भावः । प्रीतिरेव सारः श्रेष्ठो यस्मिन् तेन कामेन उभौ धर्मार्थौ न विबाधसे कच्चित् । वनितादि-विषयासक्तो भूत्वा धर्मार्थौ न जहासि किम् ? इति भावः ॥

तथा सन्धायिकर्माणीत्यत्र सन्धायीनि सन्धिं सम्पादयन्तीति सन्धा-यीनि तानि च तानि कर्माणि च । भारतस्त्वं वर्तसे किं नु इति योजना ॥

कच्चिद्राजगुणैरित्यत्र सन्धिविग्रहयानासनद्वैधीभावाश्रयाख्यैः षड्भी राजगुणैः सह सामदानभेददण्डप्रभावोत्साहमन्त्राख्यान् सप्तोपायान्, सम्यग्बलं, सम्यग्बलं; कार्य—बले अबले सति च कर्तव्यं कर्म इति दश सदा निषेवसे किम् ॥

आप्ताश्चैवाव्यवसिन इत्यत्र व्यवसिनः विरुद्धः अवसः अवसायः अध्य-वसायः तद्वन्तो न भवन्तीत्यव्यवसिनः ॥

कच्चिन्न तर्कैरत्यूहैरित्यत्र तर्कैः, एवं चेदेवं भविष्यतीत्यूहैः, दूतैः परेषां दूतैः अपरशङ्किताः परे वैरिण इति शङ्किता न भवन्तीत्यपरशङ्किताः, जात्या-दिक्रमाच्छाद्य तव समीपे सेवकतया स्थिताः वैरिण इत्यर्थः । तैः त्वया वा तव अमात्यैर्वा तव मन्त्रितं अलोचनं न भिद्यते कच्चित् अन्यैर्न ज्ञायते कच्चिदि-त्यर्थः । उदासीनेषु त्वय्युदासीनेषु मध्यमेषु त्वयि च तव शत्रुषु च मैत्रीं दर्श-यत्सु वृत्तिः तत्तदनुसारेण तव वर्तनं उपपद्यते कच्चित् युक्ता जायते कच्चित् । तत्तत्स्वभावाज्ञानात् तेष्ववतिर्भर्त्री न करोषि कच्चिदित्यर्थः ॥

---

*विरुद्धं

कच्चिन्मन्त्रयस इत्यत्र एकः स्वबन्धूनपि विहाय त्वमेक एव न मन्त्रयसे कच्चित् । बहुभिर्ज्ञाताज्ञातैर्बहुभिः ॥

कच्चिन्न सर्वे कर्मान्ता इत्यत्र कर्मान्ताः कर्मकराः, 'कर्मान्तः स्यात्कर्मकरो भुजिष्यः किङ्करो मत' इति हलायुधः । प्रत्यक्षाः कच्चित् स्वयमेव तान् दृष्ट्वा कर्मसु नियोजयसि कच्चित् । अथ वा, परोक्षा वा अत्र प्रत्यक्षपरोक्षयोर्मध्यं केपुचित्प्रत्यक्षं केपुचित्परोक्षं चेति द्वेधाऽपि स्थितिः प्रशस्यते । सर्वस्यापि स्वमुखेनैव करणं मन्त्र्यादिष्वविश्वासद्योतकत्वात् राज्ञो न धर्मः । सर्वं परमुखेनैव करणं स्वस्याप्रौढिसूचकत्वाद्राज्ञो न धर्मः । तस्माद्दानसम्भावनादिकं स्वमुखेनैव कर्तव्यम् । बन्धनशिक्षणादिकं तु परमुखेनैव कर्तव्यमिति भावः ॥

नानवाप्तानीत्यत्र, अनवाप्तानि अनुपगृहीतानि कर्तुमनारब्धानीत्यर्थः । तानि कर्माणि न विदुः कच्चित् । कृतं वा कृतप्रायं वा कर्म सर्वैर्ज्ञातुं शक्यते, करिष्यमाणं तु केनापि न ज्ञेयमिति भावः ॥

कच्चित्कारणिका इत्यत्र 'परीक्षकः कारणिक' इति वचनात् कारणिकाः अस्त्रशस्त्राभ्यासेषु परीक्षकाः आचार्या इत्यर्थः ॥

कच्चित्सूत्राणीत्यत्र सूचयन्ति तन्तमर्थमिति सूत्राणि अश्वगजादिलक्षणशास्त्राणि । ब्राह्मणदोषप्रायश्चित्ताय क्रियमाणद्रव्यदण्डो ब्रह्मदण्डः ॥

कच्चित्ते यास्यत इत्यत्र अनुष्ठिताः त्वामनुसृत्य स्थिताः गुणैर्विनयादिगुणैः समाः त्रयः त्रयस्त्रयश्चाराः परकटके स्थातुं तत्रत्यवार्तामानेतुं तदुक्तवार्तां स्वनिकटे यथावकाशं वक्तुं चेति त्रयस्त्रयश्चाराः यात्रायां दण्डयात्रायां सत्यां पूर्वं यात्रातः पूर्वमेव त्वत्तः साम प्रियवचनं दानं द्रव्यदानं च गच्छन्ति प्राप्नुवन्ति कच्चित् ॥

तत्र विक्रमस इत्यत्र तत् परदलम् ॥

कच्चिदात्मानमित्यत्र आत्मानं स्वचित्तं विजित्य वशीकृत्य ॥

कच्चिदष्टादशान्येषां स्वपक्षे दश सप्त च । त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैरित्यत्र स्वामी अमात्य जनपद दुर्ग दण्ड कोश मित्र

चेति राष्ट्रालङ्कारभूताः सप्त प्रकृतयः। विद्वांसः कवयः सूताः गायकाः परिहासकाः पुराणप(पा)ठकाः धर्मशास्त्रनिर्णेतारश्चेति सप्त सभालङ्काराः। प्रकृतयः—कर्मकराः भिषजः गणकाः सेना चेति सर्वोपकारभूताश्चतस्रः प्रकृतयः। एवमष्टादश तीर्थवत् तत्तच्चिकीर्षितविचाराय सदा सेव्यत्वात्तीर्थानीत्युच्यन्ते। इदं परपक्षे। स्वपक्षे तु स्वस्य स्वचारैरविचार्यत्वात् स्वामिनं राजानं विना सप्तदश प्रकृतयः। सप्तदश तीर्थानि अविज्ञातैः पाषण्डवेषादिना कैरप्यज्ञातैः त्रिभिस्त्रिभिश्चारकैः वेत्सि कच्चित्॥

कच्चिद्विनयसम्पन्न इत्यादिश्लोकत्रयं पुरोहितगुणप्रतिपादकम्॥

अमात्यानुपधातीतानित्यत्र उपध उपाधिः तेनातीतान्॥

उग्रप्रतिग्रहीतारमित्यत्र कामयानं पुरुषमुद्दिश्य स्त्रिय इव अतिकामुकपुरुषं स्त्रिय इवेत्यर्थः। उग्रप्रतिग्रहीतारं उग्रद्रव्यादिकेरप्रतिग्रहीतारं त्वां यज्ञादिसत्कर्मबहिष्कृतत्वात् पतितमिव याजकाः नावजानन्ति कच्चित्॥

हृष्टाः प्रदाना इत्यत्र हृष्टाः दिने दिने हृष्टाः, प्रदानाः 'दो अवखण्डन' इति धातोः प्रकृष्टं दानं परदलखण्डनं येभ्यस्ते कच्चित्॥

भक्तं चेत्यत्र भक्तमन्नम्। वेतनं जीवनार्थं दीयमानं द्रव्यम्। अन्नोपजीविनामन्नं, द्रव्योपजीविनां द्रव्यमिति यावत्॥

भृताः भटाः॥

कुलपुत्राः प्रधावत इत्यत्र प्रधावतः युद्धे परान् प्रति धावतः, कदाचिद्दैववशात्परावृत्य प्रधावतः तव अर्थे इत्यर्थः॥

कच्चिन्नैको बहूनर्थानित्यत्र कामात्मा कामलग्नचित्तस्त्वं एक एव यथाकामं स्वेच्छानुसारेण साम्परायिकान् मोक्षोपयोगिभूतान् बहूनर्थान् शास्त्रार्थान् निरन्तरश्रवणमननादीन्, शासनानि स्मृत्युक्तनित्यनैमित्तिकादिकर्मशासनानि न ...नशाधि कच्चित् न शिक्षसे कश्चिन्नः किमनेनेति न धिक्करोषि कच्चिदिति भावः॥

कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन्। लभते मानमत्यन्तं भृतो वा वेतनं त्वयीत्यत्र त्वयि वेतनं भृतो वा अन्यो वा पुरुषकारेण स्वपौरुषेण

कर्म युद्धकर्म शोभयन् पुरुषः शूरपुरुषः त्वत्तः अत्यन्तं मानं सत्कारं लभते कच्चित् ॥

व्यसने(वा)चाभ्युपेतानामित्यत्र अभ्युपेतानां स्वशरणं गतानां व्यसने सति बिभर्षि कच्चिदित्यन्वयः ॥

विजितं युद्धे जये सति हस्तगृहीतम् ॥

समीक्ष्य त्रिविधं बलमित्यत्र स्वभुजबलं स्वसेनाबलं स्वदैवबलं चेति त्रिविधम् ॥

पार्ष्णिमूले चेत्यत्र पार्ष्णिः पार्ष्णिग्राहकः मूलं मूलभूतधनादिकं ते उभे च विज्ञायेत्यर्थः ॥

कच्चिदष्टाङ्गसंयुक्तेत्यत्र अष्टभिरङ्गैः चतुर्विधसेनाङ्गैः यन्तृसारथिसूतचर्मवर्मशरचापायुधाख्यैः संयुक्ता चतुर्विधबला हस्त्यश्वरथपा(प)दाताख्यचतुर्विधबलवती चमूः बलमुख्या बलेन सत्वेन मुख्या ॥

कच्चिल्लवं च मुष्टिं चेत्यत्र 'व्रीहिशाल्यादिकं धान्यं लूयते यल्लवं तु तत् । कार्पासमाषमुद्गाद्यं मुष्टिं मुष्टिग्रहं यत' इति वचनात् लवं 'लूञ् छेदने' इति धातोः लकुटेन च्छेद्यं व्रीहिशाल्याद्यं लवमित्युच्यते । कार्पासमाषमुद्गाद्य मुष्टिनैवोन्मूल्यत्वान्मुष्टिरित्यभिधीयते । रिपूनभियाय अभितः प्राप्य परराष्ट्रे द्विविधमिदं धान्यं विहंसि कच्चित् ॥

कच्चित्कोशमित्यत्र कोशं गोष्ठं वाहनं परमायुधं चोद्दिश्य योऽयमायः द्रव्यलाभः, सोऽनुष्ठितः कच्चित् ॥

कच्चिदाभ्यन्तरेभ्य इत्यत्र आभ्यन्तराः, सूतसेनापतिसादिनिषादिपुरव्यावहारिकराष्ट्रान्तपालादयो बाह्याः; तेभ्यः अग्रे प्रथमं आत्मानमेव रक्षसि कच्चित् । तेषाम(भ्यु)प्युन्नतावप्यात्मक्षयः । अत्यवमानेऽप्यात्मक्षयः । अतस्तान्मध्यमपरिपथ्या गोपयसि कच्चिदित्यर्थः । तान् उभयान्, तेभ्यः आन्तरेभ्यो बाह्येभ्यश्च रक्षसि कच्चित् । आन्तरबाह्ययोरन्योन्यं कलहो यथा न भवति तथा रक्षसि किम् । तान् आन्तरान् तान् बाह्यांश्च मिथः रक्षसि कच्चित् ॥

कच्चिन्न पाने द्यूते वेत्यत्र अह्नः पूर्वं विद्यमाना रात्रिः पूर्वाह्णपदेनोच्यते। तत्र क्रियमाणे पाने मधुपाने व्यसनजं चित्तभ्रमाख्यव्यसनाज्जातं व्ययं--राज्यमपि तवैव तिष्ठत्विति स्त्रीषु कृतं व्ययं, द्यूते अक्षक्रीडादिद्यूतं क्रीडासु जलक्रीडादिक्रीडासु प्रमदासु अतिप्रियस्त्रीषु वा व्यसनजं स्त्रीव्यसनाज्जातं तव व्ययं हारकङ्कणादिव्ययं न प्रतिजानन्ति बाह्या जना न प्रतिजानन्ति कच्चित् ॥

सुदुर्गतान् सुष्ठु दुरवस्थागतान् ॥

आयव्ययेनेति पाठे आयव्ययेन ज्ञापितेनेत्यर्थः ॥

अप्राप्तव्यवहारा वा इत्यत्र अप्राप्तव्यवहाराः अज्ञातव्यवहाराः ॥

भागशो विनिविष्टानीत्यत्र भागशः तत्तदुचितभागैः विनिविष्टानि विशेषेण निर्दिष्टानि तव राज्ये सर्वाऽपि कृषिः देवमातृका देवकृतवृष्टिरेव मानेव माता यस्याः सा न हि कच्चित्। किन्तु तटाकादिमातृकाऽप्यस्ति। अतोऽयं विचार इति भावः ॥

प्रति गुञ्जशतं वृद्ध्येत्यत्र प्रति एकैकं कृषीवलं प्रति गुञ्जशतं शतगुञ्जापरिमितं द्रव्यं वृद्ध्या तदुचितवृद्ध्या ऋणं ददासि कच्चित् इत्यर्थः ॥

कच्चित्स्वनुष्ठितेत्यत्र वार्ता वृद्धिजीवनरूपा वैश्यवृत्तिः स्वनुष्ठिता सुष्ठु अनुष्ठिता। अल्पीयसीं वृद्धिमादाय अनुष्ठितेत्यर्थः ॥

पञ्च पञ्च स्वनुष्ठिता इत्यत्र स्वनुष्ठिताः ग्रामे ग्रामे सम्यगर्पिताः। संहत्य रिपुकटकाद्भये सति पुञ्जीभूय ॥

कच्चिन्नगरगुप्त्यर्थमित्यत्र ग्रामाः नगरस्य परितो विद्यमाना ग्रामाः नगरवत् परिखाप्राकारादिना नगरोपमाः कृताः कच्चित्। प्रान्तवत् स ग्रामो यावदायामवान् तद्वत् जनान् सम्पूर्य रक्षा कृता कच्चित्। त्वदर्पणाः त्वत्त एव अर्पणं तत्र स्थापनं येषां ते। तैस्तैः कृतभटाश्चेत् कदाचित् [2]तेन सह तवैव विरोधं कुर्युरिति भावः ॥

[1]गुंजाशतं. [2]ते.

कच्चिद्बलेनेत्यत्र बलेन सदा सञ्चरणसत्त्वेन, अनुमताः सम्मताः, साध्यक्षाः महानगरे स्वनायकसहिताश्चाराः समानि लोकसम्मतचरित्राणि, विषमाणि विषमचरित्राणि च चरन्ति आचरन्ति । पुराणि उद्दिश्य चरन्ति सञ्चरन्ति ॥

कच्चिच्चारान्निशीत्यत्र चारादिति पञ्चमी ॥

कच्चिद्द्वौ प्रथमावित्यत्र 'यामात्परत एवाथ स्वपेत्' इति वचनात् पूर्वयामादुपरितनौ चतुर्थयामात्प्रथमावित्यर्थः ॥

कच्चिच्छरीरमित्यत्र आबाधं दुःखम् ॥

कच्चिद्वैद्याश्चिकित्सायामित्यत्र अष्टाङ्गायां औषधसङ्ग्रहः पेषणं अग्न्यातपाभ्यां तापः रसयोगः ना(डि)डीपरीक्षा अनुपानं औषधदानं पथ्यं चेति अष्टाङ्गायाम् ॥

अर्थिप्रत्यर्थिन इत्यत्र अर्थिनः याचकान् प्रत्यर्थिनो वैरिणः नापास्यसि न त्यजसि । धनैरेकं तर्पयसि शरैरपरं तर्पयसि कच्चित् इति भावः ॥

कच्चित्ते सर्ववैद्येष्वित्यत्र ते अर्वा अश्वः । 'अर्वा गन्धर्वोऽश्वः सप्तिर्वाजी तुरङ्गमस्तुरग' इति हलः । सर्ववैद्येषु सकलविद्यासम्बन्धिषु नानाविधविद्यावस्तुष्वित्यर्थः । गुणेन वर्तते कच्चित् बलेन तानुल्लङ्घ्य न गच्छति कच्चिदित्यर्थः ॥

सुष्ठु शोभनम् ॥

गुणवन्तीत्यत्र तव गुणेन विनयादिगुणेन उपेताः प्राप्ता इति द्विजानां विशेषणम् ॥

कच्चिदार्यविशुद्धात्मेत्यत्र अदृष्टशास्त्रकुशलैरविवेकिभिः, चोरकर्मणीति निमित्तसप्तमी । चौर्याख्यनिमित्तात् हारितः देशान्तरं प्रापितः विशुद्धात्मा वस्तुगत्या विशुद्धात्मा इति सम्बन्धः ॥

दृष्ट इत्यत्र सकारणैः पदशोधनादिकारणसहितैः तज्ज्ञैः चौर्यशोधने निपुणैः यामिकैर्दृष्टश्चोर इति निर्णीतः दृष्टः त्वया स्म दृष्टः ॥

अर्थान्न पथ्या इत्यत्र पथ्याः स्वदमात्यत्वात् पथ्येव मार्ग एव गन्तुं योग्याः ते अमात्याः अर्थेन हृताः सन्तः तं नाशयेति केनचिद्दत्तधनैः हृताः सन्त इत्यर्थः । आलसस्य दरिद्रस्य वा अर्थान्न पश्यन्ति कच्चित् ॥

नास्तिक्यमित्यत्र दीर्घसूत्रता 'दीर्घसूत्रश्चिरक्रिय' इत्यभिधानात् चिरकालपर्यन्तमालोच्य कर्ता दीर्घसूत्रः तस्य भावः ॥

एकचिन्तनमित्यत्र अर्थानामेकचिन्तनं एकाग्रचिन्तनम् ॥

चातुर्मास्यादधिकृतमित्यत्र चातुर्मास्यात् मासचतुष्टयं मासचतुष्टयमतीत्य ॥

कच्चित्सूत्राणीत्यत्र सूत्राणि तत्तज्जातीनां सूचनात् गजादिशास्त्ररहस्यानि ॥

नरा दुष्कृतकर्माण इत्यत्र सोढुमशक्यं दुस्सहमितिवत् कर्तुमशक्यं दुष्कृतं तादृशं कर्म शुभकर्म येषां ते तथोक्ताः ॥

अवतानैस्तथा गुल्मैरित्यत्र अव अधस्तादेव तानो विस्तारो येषां ते ॥

अनिशमित्यत्र गीतवादित्रैः, वेण्वाद्यैः ॥

दिव्यैर्नानाविधैरित्यत्र भावद्भिः भा प्रभा तद्वद्भिः ॥

न च सा क्षरेत्यत्र क्षरा नाशवती न च ॥

अति सूर्यं चेत्यत्र अति अतिक्रम्य ॥

कथितस्ते सभानित्य इत्यत्र सभा नित्या यस्येति विग्रहः ॥

पिताऽऽह त्वा च कौन्तेयेत्यत्र त्वा त्वां पिता पाण्डुः आहेति सम्बन्धः ॥

मुक्तकोपो बलान्वित इत्यत्र मुक्तकोपो भव, बलान्वितो भव, साधुधर्मा भव, यज्ञादिकं क्रियतां, देयं दीयतामित्येव पार्थस्य भाषितं श्रूयेत अश्रूयतेत्यर्थः ॥

वार्धुषीर्यज्ञसन्तान इत्यत्र वार्धुषीः वृद्धिजीवनं कुर्वन् सर्ववर्णानां विशेषाद्राजकर्मणि च घृतक्षीरदानादिना यज्ञस्य सम्यक् तानः विस्तारः यस्मात्स

वणिक् गोरक्षां कर्षणं च जज्ञे जनयामासेति सम्बन्धः ॥

यस्मिन् राजसूये ॥

येनाभिषिक्त इत्यत्र येन राजसूयाभिषेकेण ॥

दर्विहोमानुपादायेत्यत्र स्रुचि क्रियमाणः चर्वाद्यसाधारणहोमो दर्विहोमः ॥

धृष्टमिष्टमित्यत्र धृष्टं धैर्ययुक्तम् ॥

सम्प्रशस्त इत्यत्र क्रियारम्भे कर्षणादिना क्रियमाणभूपरीक्षायाम् ॥

इति सभापर्वणि त्रयोदशोऽध्यायः ।

---

## ॥ सप्तदशोऽध्यायः ॥

चतुर्भिर्भीमसेनाद्यैरित्यत्र हितं हितवचनं उक्तः ॥

भवन्तो राजसूयस्येत्यत्र भवन्तः शंसन्त्विति योग्यपदाध्याहारः ॥

तं विश्रान्तमित्यत्र क्षणिनं दत्तावसरम् ॥

निदेशवाग्भिरित्यत्र निदेशवाग्भिः ऋषीणामादेशवाग्रूपैः पुराणैः ॥

ऐलस्येक्ष्वाकुवंशस्येत्यत्र इक्ष्वाकुवंशस्य इक्ष्वाकुकन्यावंशत्वादिक्ष्वाकुवंशं ऐलस्य ऐलं पुरूरवसं, प्रकृतिं सोमवंशस्य मूलकारणमित्यर्थः ॥

तत्साम्राज्यमित्यत्र तत्साम्राज्यं ययातिना अनुभूतं साम्राज्यं योनितः जन्मारभ्य खण्डाधिपतींस्तान् स स्ववशे कृत्वा ययातिवत्सर्वं राज्यं जरासन्धः स्वयमेव पालयतीति भावः ॥

भजतो न भजन्तीत्यत्र अस्मात् मत्सम्बन्धाख्यकारणात् प्रियेषु व्यवस्थितो मा । भीष्मकादिषु प्रियं न करोतीत्यर्थः ॥

अथ हंस इति ख्यात इत्यत्र अन्यः डि(भि)विकाग्रजहंसादन्यः कश्चित्तरः मनुष्यश्च हंसाभिध आसीत् । अष्टादशावृतः अष्टादशाक्षौहिणीसेनावृतः सः अन्यो हंसः निहतः ॥

---

[1] सर्वान्

पुरं निवेश्येत्यत्र पुरमिति रेफान्तस्त्रीलिङ्गपूःपदस्य द्वितीया ॥

त्रियोजनायतमित्यत्र योजनया एकयोजनया युतं सहितं यथा भवति तथा विस्तीर्णं सद्म अन्तःपुरम् । योजनान्ते एकैकयोजनामध्ये शतद्वारं दुर्गान्तर्वर्तिगृहाणां शतसंख्याकद्वारैर्युक्तम् ॥

एवमेत इत्यत्र रथाः महारथाः ॥

प्रसेनजिच्चेत्यत्र प्रसेनेन सहितः जित् सत्राजित् प्रसेनजित् । यस्य सत्राजितः । अन्धकभोजस्येति पाठे अन्धककुलप्रभेदभोजकुलजस्य उग्रसेनस्येत्यर्थः ॥

पुरुपव्रजमिति पुरुपाख्यपशूनां व्रजं गोष्ठम् ॥

बहुरत्नसमाचितेत्यत्र बहुभिः रत्नसमैः पुरुपैः आचिता । श्रेयः श्रेष्ठं पुरुषम् ॥

साम्राज्येनेति शुश्रुम इत्यत्र साम्राज्येनेति इत्थम्भूतलक्षणे चेयं तृतीया। साम्राज्यसहिता इति शुश्रुम इत्यर्थः ॥

जयेत्सम्यगित्यत्र नयो विनयः ॥

तस्माद्वंश्यानित्यत्र युगे युगे सतां वंश्यान् वंशोद्भवान् अनुमृशन्[1] विचारयन् एवं बालकवत् नैव हन्यमानो नैव । किन्तु सर्वान् विचार्य कश्चिद्धर्ममारभमाणः तत्कार्यं साधयेदेव ॥

सङ्ग्राह्यलक्षणमित्यत्र धर्मार्थनयलक्षणैः धर्मार्थनया एव लक्षणानि असाधारणधर्मा येषां ते तैः पुरुपैः संग्राह्यं यल्लक्षणं धर्मार्थनयाख्यं, तत्त्रितयमपि प्रा(स)प इति तं जरासन्धं विद्धि। एतद्बलात् धर्मार्थनयाख्यलक्षणत्रितयबलात ॥

मूर्धाभिषिक्तमित्यत्र यः पुमान् पुरुपतः सत्पुरुषाद्भागं एकैकगुणभागं नादत्ते स पूर्वोक्तं प्रधानपुरुषं द्रष्टा च न ॥

तण्डुलप्रस्थक इत्यत्र अक्षतैः शिवपूजार्थं प्रतिदिनं प्रस्थप्रस्थतण्डुलवान् । तण्डुलप्रस्थके राजन्निति पाठे तण्डुलप्रस्थकाख्यशिवस्थाने ॥

[1]अनुमर्शयन् (अनुमर्शन्)

क्षत्रिय इत्यत्र सत्कृतः क्षत्रियः शस्त्रमरणः शस्त्रे एव मरणं यस्य। शस्त्रमरणादभीत इति यावत्। जरासन्धं प्रतियुध्येत। अन्यत् स्पष्टम्॥

षडशीतिः समानीता इत्यत्र षडशीतिः षडशीतिकुलोत्पन्नाः, शेषाः एतच्छेषभूता अन्ये राजानश्चेति 'कुलान्येकशतं नृपा' इति प्रागुक्तनृपा इत्यर्थः॥

तत्र राजवधे॥

इति सभापर्वणि सप्तदशोऽध्यायः।

---

## ॥ अष्टादशोऽध्यायः ॥

स(सो)मा हि यः परोक्षः स्यादित्यत्र परोक्षः जरासन्धसेनयैव युद्धे सति अन्तःपुरस्थेन तेनादृष्टत्वात् परोक्षः। अर्थान्तरे जरासन्धवधाख्यप्रयोजनान्मध्ये युक्तं प्राप्तं अनर्थं प्रागुक्तमनर्थं प्रतिपद्य ज्ञात्वा॥

संन्यासं रोचय इत्यत्र अस्य राजसूयाख्यकार्यस्य संन्यासं त्यागम् आहर्तुमशक्यो दुराहरः॥

धनुरस्त्रमित्यत्र इह लोके दुष्प्रापं प्राप्तुमशक्यं धनुरादिकं मया प्राप्तमिति सम्बन्धः॥

वैद्याः साधु सुनिष्ठिता इत्यत्र वैद्याः विद्यावन्तः॥

द्रव्यभूता गुणा इत्यत्र द्रव्यात् धनात् भूताः जाताः गुणाः परपराभवादयः॥

जयस्य हेतुरित्यत्र सिद्धिः मन्त्रसिद्धिः, दैवं, संश्रितं कर्म च पुण्यलक्षणं शौर्यादिकर्म वा॥

अबले चिक्रियेत्यत्र विक्रिया परयाचनादिविकारः। मोहः अहङ्काराज्जातकार्यविस्मरणम्॥

अनारम्भे तु निर्युक्त इत्यत्र अगुणनिश्चयः आरम्भजातद्रव्यप्राप्त्यादिगुणाभावे निश्चयो यस्य सः अगुणनिश्चयः। "निस्संशयाद्गुणात् निस्संशयं गुणमपेक्ष्य॥

कालोऽयमित्यत्र अयं कालः सुलभः युद्धाय सुलभः । शममिच्छतां मुनीनां पश्चात्काल एव सुलभः । राज्ञामस्माकं 'श्वः कार्यमद्य कुर्वीत' इति वचनात् अयं वर्तमानः काल एव सुलभः ॥

इति सभापर्वणि अष्टादशोऽध्यायः ।

---

## ॥ विंशोऽध्यायः ॥

न चापीत्यत्र अमरं मरणरहितम् ॥

नयेनाबाधदृष्टेनेत्यत्र आबाधं स्वबाधपर्यन्तं दृष्टेन लोके दृष्टेन नयेन परानुपाक्रमत इति यत् अनपायस्य तस्य सुनयस्य संयोगे सति अपराक्रमः पराक्रमाभावः न स्वपीडापर्यन्तं विनयमेव कुर्वन् अपराक्रमी न भवतीति भावः ॥

संशयो जायत इत्यत्र 'शक्तानां भूषणं क्षमा' इति न्यायेन शक्तैर्विनये कृते सति साम्ये शत्रोः स्वस्य च समत्वे संशयो जायते । द्वयोः शक्ताशक्तयोः साम्यं तु न भवेत् ॥

कथमन्तमित्यत्र नदीरयाः नदीवेगाः वृक्षस्य अन्तं उन्मूलनेनावसानमिव अन्तं जरासन्धसेनाया अन्तमवसानं कथं न गच्छेम । गच्छेमैवेति योजना ॥

अनभिव्यक्तसम्बन्धा इत्यत्र अनभिव्यक्तः सम्बन्धः क्षत्रियत्वाख्यजातिसम्बन्धो यैस्ते तथोक्ताः तं जरासन्धं कामं प्राप्नुयामहे ॥

अनवद्यानित्यत्र असम्बन्धान् विप्रवेषत्वादस्मासु वध्यघातकभावसम्बन्धरहितान् अत एवानवद्यान् अस्मासु अवद्यमकुर्वतः शत्रून् दृष्ट्वा शनैः शत्रुदेशमपाक्रम्य तं जरासन्धं कामं प्राप्नुयामहे ॥

एको ह्येवेत्यत्र भूतानामन्तरात्मा परमात्मेव एकः जरासन्ध एव श्रियं सेनादिश्रियम् । तत्क्षये जरासन्धस्य क्षये बलक्षयः सेनानाशः स्वयमेव स्यादिति भावः ॥

शेषेणेत्यत्र शेषेण तत्सेनाशेषेण ॥

शलभो यथेत्यत्र शलभो यथा अग्निस्पर्शे दग्धो भवति तथा अयं कुतो न दग्ध इति व्यतिरेके दृष्टान्तः ॥

अक्षौहिणीनामित्यत्र तिसृणामक्षौहिणीनां बलादिति शेषः ॥

नाप्रजस्येत्यत्र अप्रजस्य कीर्तिर्न । स्वर्गश्च क्षयः गृहं न भवेत् ॥

इन्द्रं तर्पय चेन्दुनेत्यत्र इन्दुना सोमरसेन ॥

प्रजायेतामुभे इत्यत्र उभे नार्यौ प्रजायेतां प्रजनयेताम् ॥

सजीव इत्यत्र अबले रोदनस्तनपानादिकं कर्तुं बलरहिते सजीवे प्राणिशकले उत्पन्ने सति तत् तदा ते भगिन्यौ सुदुःखिते प्रजाते ॥

नीतिहेतोरुपेक्षित इत्यत्र बलवता विरोधे सति स्थानान्तरे गन्तव्यमिति नीतिहेतोः ॥

इति सभापर्वणि विंशोऽध्यायः ।

मन्त्रपर्व समाप्तम् ।

---

## ॥ एकविंशोऽध्यायः ॥

### (जरासन्धवधपर्व २)

पतितावित्यत्र पतितौ दुर्मार्गवर्तिनौ ॥

रक्षिता चावयोर्जय इत्यत्र जयः विजयः पार्थः ॥

त्रिभिरासादित इत्यत्र आसादितः युद्धाय प्रापितः ॥

व्यायामात् विशेषेणायामादुन्नतेः ॥

भीमसेनार्जुनावित्यत्र न्यासभूतौ मद्वशे न्यस्तुं योग्यौ ॥

न हि त्वदग्र इत्यत्र त्वदग्रतः स्थितिर्न हि ॥

दुर्गत इत्यत्र दुर्गतः दुःखं गतः ॥

सुप्रणीतबल इत्यत्र सुष्ठु अवसरं ज्ञात्वा प्रणीतं प्रयुक्तं बलं येन स तथोक्तः । देशकालादिकं ज्ञात्वा बलं प्रयुञ्जान इत्यर्थः । अग्निलक्षणैः प्रणीतं

यत्र क्वापि प्रयुक्तं बलं अन्धं जडं चाहुः । अन्धवज्जडवच्च कार्याकारीत्यर्थः ॥

**यतश्छिद्रमिति** यतः यस्मिन् पुरुषे ततः बलात् छिद्रं 'छिदिर् द्वैधीकरण' इति धातोः अङ्गविच्छेदो भवति ततस्तत्र ॥

**कृष्ण कार्यार्थसिद्ध्य** इत्यत्र हे कृष्णेति सम्बुद्धिः ॥

**नयो जयो बलं चैवेत्यत्र** नयः नीतिः, जयः परवशीकरणाख्यजयः, बलं अन्ते स्वसत्वप्रदर्शनं चेति त्रयं विक्रमात् विशिष्टक्रमात् नयः पूर्वं, जयो मध्ये, बलं पश्चादिति क्रमात्प्रयुक्तं चेत् वृद्धिमेष्यति । अन्तिमं बलमतिवृद्धं भवतीत्यर्थः ॥

**वर्षास्विनामित्यत्र** वर्षेषु बहुवर्षेषु आसनवन्तो वर्षास्विनः वृद्धास्तेषां, स्नातकानां व्रतस्थानां परिच्छदैरलङ्कारैः आच्छाद्य स्वरूपमाच्छाद्य ॥

**भीमपुरोगमावित्यत्र** भीमपुरोगमौ भीमस्य पुरोगमौ ॥

**धर्मार्थावित्यत्र** काममोक्षाणां कामात् मोक्षः धर्मार्थयोः मोचनं येषां तानि कार्याणि स्त्रीसम्भोगादीनि तेषां निग्रहे सति धर्मार्थाविव तौ कृष्णार्जुनौ ईशौ हि ॥

इति सभापर्वणि एकविंशोऽध्यायः ।

---

## ॥ द्वाविंशोऽध्यायः ॥

**स परिहार्य** इत्यत्र स मागधो देशः मणेः कृते मेध्यानां ऋष्यादीनां पारिहार्यः हारो विहारः परितो विहारयोग्यः । मणेश्चिन्तामणित्वेन तन्निकटे दारिद्र्यादिदोषाभावादिति भावः ॥

**यत्र मापादवृषभमित्यत्र** वृषभरूपी मापादनामकोऽसुरो, मापादवृषभः तं मापादं हत्वा मापनालान् शृङ्गद्वयकण्ठनालाख्यान् त्रीन्नालान् तेन चर्मणा आनह्य बद्ध्वा तिस्रो भेर्यः यथा भवन्ति तथा चकार । भेर्यः त्रिभिरेतैस्ताडितास्तिस्रो भेर्यः प्राणदन् ॥

---

[1]विदरणयोग्यः,

मागधानां सुरुचिरमित्यत्र 'चैत्यकं बद्धमूलं स्यात्' इत्यभिधानात् चैत्यं बद्धमूलं द्रुमं, जरासन्धजिघांसवः ते कृष्णाद्याः शिरसि जरासन्धशिरसि जिघांसन्त इव घातं कुर्वन्त इव द्रुमं गिरिं च विपुलैर्बाहुभिरभि(हृ)हृत्य अभ्यपातयन्निति सम्बन्धः । माल्यदामैः माल्यानां मालायोग्यपुष्पाणां दामैर्दामभिः माल्यदामभिः ॥

दृष्ट्वेत्यत्र दुर्निमित्तं दुःखकारणं दुर्निमित्तात्मकं च तं शृङ्गद्रुमयोः पातम् ॥

पर्यग्नि कुर्वन्नित्यत्र परितः अग्निः नीराजनरूपोऽग्निः यथा भवति तथा कुर्वन् अकुर्वन् । मङ्गलारात्या सत्कृतवन्त इत्यर्थः ॥

जरासन्धेन सह युयुत्सव इति सम्बन्धः ॥

कर्पूरभृङ्गमित्यत्र शृङ्गं गोशृङ्गमध्योद्भूतं गोरोचनम् ॥

तस्य ह्येतदित्यत्र एतत् एतेषां कृष्णभीमार्जुनानां आपणादिषु कृतचरित्रम् ॥

वरध्वमविचार्यमित्यत्र वरध्वं वरयध्वम् ॥

कर्म चैतदित्यत्र द्विलिङ्गस्य द्वयोर्ब्रह्मक्षत्रयोर्लिङ्गं यस्य तस्य ॥

असदागम इत्यत्र असदागमे अस्मत्प्रत्यागमे ॥

क्षत्रियो बाहुवीर्य इत्यत्र तस्य क्षत्रियस्य । तस्मात् क्षत्रियाणामप्रगल्भवचनत्वात् हे बार्हद्रथ तव ईरितमपि अप्रगल्भमिति पूर्वपदावृत्त्या योजना ॥

इति सभापर्वणि द्वाविंशोऽध्यायः ।

---

## ॥ त्रयोविंशोऽध्यायः ॥

वैकृते चासतीत्यत्र विरुद्धं कुर्वन् विकृत् विकृतो भावः वैकृतं वैरमित्यर्थः ॥

सतां समय एष हीत्यत्र एष हि वक्ष्यमाणो हि ॥

योऽनागसीत्यत्र यः क्षत्रियः अपि अन्योऽपि अनागासि प्रसजति आगसि प्रसजति तस्मात् अर्थधर्मोपघातात् अर्थधर्मयोरुपघातो यस्मात्स तथोक्तः

तस्मात्पुरुषात् मनः समुपतप्यते । एष सतां समय इति पूर्वेणान्वयः ॥

अतोऽन्यथेत्यत्र लोकधर्मज्ञः महाव्रतश्च सन् पुरुषः अतः स्वविहित-स्वभावात् अन्यथा वैपरीत्ये आचरन् ॥

त्रैलोक्य इत्यत्र क्षत्रधर्मान्निमित्ताच्छ्रेयांसं श्रेष्ठं मां अनागसं प्रजानन्तः प्रमादात् इति उक्तप्रकारेण जल्पथ ॥

अस्मांस्तदेन इत्यत्र बृहद्रथस्यापत्यं पुमान् बार्हद्रथिः तस्य सम्बुद्धिः हे बार्हद्रथे ॥

समालम्भः सम्यगालम्भनं हिंसा ॥

सवर्णोपीत्यत्र सवर्णः ब्राह्मणत्वादिवर्णसहितः विवर्णानां विगतवर्णानां वर्णबाह्यानामपीत्यर्थः । हिंसनं न कुर्यात् । सवर्णानां हिंसनं न कुर्यादिति किं वाच्यं इति सम्बन्धः ॥

ते त्वेत्यत्र ते वयं त्वा त्वाम् ॥

नास्ति लोक इत्यत्र सः अस्मानतीत्य नृपहिंसोद्योगः ॥

तान्विद्धीत्यत्र ये पूर्वोक्तविधया जयन्ते तानस्मान्विद्धीति योजना ॥

स्वर्गयोनिस्तप इत्यत्र युद्धे तपः शत्रुतपनमित्यर्थः । विजयसम्बन्धी वैजयिकः ॥

अस्य[1] स्यात्स्वर्गमित्यत्र यथा तव भुवि निग्रहीतुं शत्रुनिग्रहणं कर्तुं मनः स्यात्, तथा अस्य इन्द्रस्य स्वर्गमास्थाय निग्रहीतुं त्वदादिशत्रुसंहारं कर्तुं मनः स्यात् ॥

विपह्यमेतदित्यत्र 'वि[2] निषेधे पृथग्भाव' इति वचनात् विपह्यमसह्यम् ॥

श्रेयसो ह्यवमत्येत्यत्र श्रेयसः श्रेष्ठान् ॥

सागरानूपमित्यत्र सागरस्य अनूपं अनु अनुकूलं उपसमुपकण्ठम् ॥

वित्रेसुः विशेषेण त्रासं प्रापुः ॥

---

[1]यस्य. [2]वि निषेधे.

अहमादद्मि कृष्णेनेत्यत्र जयतीति जित् अजितमजयशीलं न आदद्मि 'दद दान' इति धातोः युद्धाय नाङ्गीकरोमि। जितः जयशीलस्य मम अग्रे॥

कृष्णोपजीवनमित्यत्र एतत् वक्ष्यमाणं, हे कृष्ण इति सम्बुद्धिः। कामतः स्वेच्छानुसारेण॥

तौ तु सेनापती इत्यत्र हंसेति डिभकेति च पूर्वं विद्यमानौ तौ तु जरासन्धस्य सेनापती काले अतीतकाले कथितौ मृताविति कथितौ। प्राक् तौ सेनापती, इदानीं कौशिकचित्रसेनाविति भावः॥

तर्हि जरासन्धोऽपि प्रागेव कृष्णेन कस्मान्न हत इत्यत आह— स्मृत्वा पुरुषशार्दूलमित्यादि। ब्राह्मणाज्ञां ब्रह्मणश्चतुर्मुखस्य सम्बन्धिनी ब्राह्मणी सा च सा आज्ञा च। वायुर्भीमो भूत्वा जरासन्धं घातयत्विति चतुर्मुखस्याज्ञां पुरस्कृत्येत्यर्थः॥

इति सभापर्वणि त्रयोविंशोऽध्यायः।

---

## ॥ चतुर्विंशोऽध्यायः ॥

तदर्थमित्यत्र तदर्थं प्रबलजरासन्धप्रियार्थम्॥

इयं च शक्येत्यत्र अयशस्यं अयशस्करकर्मोद्युक्तं त्वां च रक्षितुं शक्नोमीति सम्बन्धः॥

इति सभापर्वणि चतुर्विंशोऽध्यायः।

---

## ॥ पञ्चविंशोऽध्यायः ॥

याम्येनमाययेत्यत्र याम्येनमायया याम्यानां यमभटानां इना समर्था या माया दुर्गा सा तथोक्ता। गर्भस्रवणे सति कुतो जीवो न नीत इति शङ्कापरिहारार्थमिदं विशेषणम्। नियमयति सर्वमिति नियमो राजा नारायणः॥

आकृष्य कर्षणादित्यत्र देवक्युदराद्गर्भमाकृष्य रोहिण्युदरं प्रत्याकर्षणादित्यर्थः॥

जातमात्रमित्यत्र अपकृष्य गोकुलं प्रति नीत्वा ततः गोकुलात् परि-क्रीतां स्वसुतं दत्त्वा तत्क्रयरूपेणेव[1] स्वीकृताम् ॥

देवदूतस्य तं शब्दं अष्टमो गर्भस्तव मृत्युरिति शब्दं मुमुक्षमाणः मोच-यितुमिच्छन् ॥

आर्येत्युवाचेत्यत्र तां प्रति आर्येति शब्दमुवाच । प्राक् शिशुरूपा इदानीमार्या स्थूलेत्युवाचेत्यर्थः ॥

आशासितार्थ इत्यत्र आशासितः अर्थः धनं शिवप्रसादश्च येन सः ॥

इति सभापर्वणि पंचविंशोऽध्यायः ।

## ॥ षड्विंशोऽध्यायः ॥

भीम योत्स्य इत्यत्र श्रेयसा श्रेष्ठेन, 'भावे क्त' इति वचनात् निर्जितं निर्गतो जयः पराजयः वरं श्रेष्ठम् ॥

तद्युद्धमुत्सार्य जनमित्यत्र उप समीपे हुये द्रष्टृजनानामन्योन्यमाह्वाने सति तं जनं उत्सार्येत्यर्थः ॥

विकर्षतां आकर्षतां इति लङि लुङि वा द्विवचनम् ॥

इति सभापर्वणि षड्विंशोऽध्यायः ।

## ॥ सप्तविंशोऽध्यायः ॥

अयं पाप इत्यत्र अनुरोधितुं अनुकूलं कर्तुम् ॥

कर्तव्यमित्यत्र कर्तव्यं स्वस्यैव कर्तुं योग्यं कर्म उपशस्य समीपस्थकृष्णा-र्जुनौ प्रति स्तुत्वा ॥

ते वै रत्नभुजमित्यत्र 'भुज पालनाभ्यवहारयोः' इति धातोः सर्जीव-रत्नपरिपालकं कृष्णं रत्नादि स्वमौलिरत्नयोग्यपादपीठं पार्थिवं स्वेषां राजानं चक्रुः ॥

[1] तत्क्रयरूपेणैव.

तयोः सौन्दर्यवानित्यत्र तयोर्भीमार्जुनयोः विधेयः इदं कुर्विति विधातुं योग्यः किङ्कर इत्यर्थः । 'विधेयः किङ्करो मत' इत्यमरः ॥

चेरतुस्तारकामय इत्यत्र शक्रविष्णू इन्द्रोपेन्द्रौ शत्रुनेत्रतारकाणामामयो यस्मात्तस्मिन् देवासुरसङ्ग्रामे येन रथेन चेरतुः तेनेति सम्बन्धः ॥

क्षणे तस्मिन्नित्यत्र चैत्ये बद्धभूमिके यूपे देवालयध्वज इत्यर्थः ॥

गत्वैकत्वमित्यत्र एकत्वमैकमत्यम् ॥

पीतमित्यत्र पृथिव्या भूमण्डलाख्यकुण्डेन कुम्भेन । दिगन्तविश्रान्ता कीर्तिः सम्पादितेति भावः ॥

इति सभापर्वणि सप्तविंशोऽध्यायः ।

जरासन्धवधपर्व समाप्तम् ।

---

## ॥ त्रिंशोऽध्यायः ॥

### (दिग्विजयपर्व ३)

ऋषेस्तद्वचनमित्यत्र ऋषेर्नारदस्य तद्वचनं राजसूयः कर्तव्य इति प्रागुक्तवचनम् ॥

स्वस्ति वाच्येत्यत्र मह्यं स्वस्ति देहीति वाच्य अर्थयित्वा ॥

तस्य पार्थिवतामित्यत्र तस्य पार्थिवतां तत्सम्बन्धिपार्थिवतां ईप्सोर्मम तुष्टोऽसि चेत् तस्मै क(रं)रः प्रदीयताम् ॥

नामः नमनं नम्रता अस्यास्तीति नामी स न भवतीत्यनामी तं उद्धतं राजानमित्यर्थः ॥

तत्र तित्तिरिकल्माषानित्यत्र तित्तिरिकल्माषान् तित्तिरिपक्षिवत् कल्माषान् कृष्णपा(ण्डु)ण्डरान् । 'कल्माषः कृष्णपा(ण्डु)ण्डर' इति हलः । 'तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरक' इत्यमरः ॥

तं कलापधरमित्यत्र 'कलापो भूषणे बर्हे' इत्यभिधानात् कलापधरं भूषणधरम् ॥

परवारणवारणमित्यत्र परवारणान् पराख्यगजान् निवारयतीति स तथोक्तः तम् ॥

इति सभापर्वणि त्रिंशोऽध्यायः ।

---

## ॥ एकत्रिंशोऽध्यायः ॥

योगाजिनानीत्यत्र योगाभ्यासार्हचर्माणि ॥

इति सभापर्वणि एकत्रिंशोऽध्यायः ।

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

कारण्डमेयमित्यत्र चक्रपुरः चक्रवर्तिनां पट्टणानि । स्वयमेव शरणं न प्राप्ताश्चेत्तन्नगराण्यपि बलात्प्रविश्य वशीचकारेत्यर्थः । चक्रवत्परितः सञ्चरतां चोराणां पुराणि वा । मध्यमपदलोपी समासः ॥

तत्र वानरराजाभ्यामित्यत्र सुषेणवसुषेणयोः किष्किन्धां[1] पालयतोः सतोः ताभ्यां वानरराजाभ्यामिति सम्बन्धः ॥

तत्र माहिष्मतीवास इत्यत्र पाणिग्रहणे साक्षिभूतेन तेन हव्यवाहेन पारदारिकः परदाराभिमर्शी तद्देशप्रभुः निगृहीतः निग्रहं प्रापितः । उपनीतः प्रसादितः ॥

तदा ब्राह्मणरूपेणेत्यत्र यदृच्छया आगतं योग्यायोग्यं च सर्वं स्वस्य सर्वभक्षकत्वात् ब्राह्मणरूपेण चरमाणः 'चर गतिभक्षणयोः' इति धातोः भक्षमाणः अग्निरासीत् । अशासत् शिक्षितवान् ॥

स्विष्टकृद् सुष्ठु इष्टकृत् ॥

स्वैरिण्य इत्यत्र स्वैः स्वभर्तृभिरेव ईरणं प्रेरणं यासां ताः स्वैरिण्यः तथाविधा नार्यः प्रचरन्ति ॥

भृगुकच्छान्तत इत्यत्र 'प्रपातस्त्वतटो भृगुः' इत्यभिधानात् भृगोः

---

[1] किष्किन्धायां.

सह्याचलदाक्षिणात्यशृङ्गस्य समीपस्थं कच्छं दक्षिणसमुद्रतीरं तस्य अन्ततः अवसाने ॥

तच्च कालधृतमित्यत्र कालं बहुकालमारभ्य धृतं करिष्यामीति मंन-सोऽवधृतं तत् धर्मराजस्य शासनम् ॥

महासेनोपममित्यत्र 'कार्तिकेयो महासेनः शरजन्मा षडानन' इत्यभि-धानात्। षण्मुखोपमम् ॥

तच्च कालकृतमित्यत्र कालकृतमङ्गीकृतम् ॥

इति सभापर्वणि सप्तत्रिंशोऽध्यायः ।

---

## ॥ अष्टत्रिंशोऽध्यायः ॥

मद्राणां पुटभेदनमित्यत्र पुटभेदनं पट्टणम् । 'पट्टणं पुटभेदनम्' इत्यमरः ॥

कलभानामित्यत्र तस्य नकुलस्य कोशः आर्जितद्रव्यं कलभानां बाल-गजानां दशसहस्राणि ऊहुः । 'वह प्रापण' इति धातोः लिटि बहुवचनम्। उह्वा निन्युरित्यर्थः ॥

इति सभापर्वणि अष्टत्रिंशोऽध्यायः ।

दिग्विजयपर्व समाप्तम् ।

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

(राजसूयपर्व ४)

सज्जते राजकर्मणेत्यत्र राजकर्मणा राजाज्ञया ॥

स दीक्षापय गोविन्देत्यत्र स त्वं आत्मानं मां राजसूये दीक्षापयेति धर्मराजप्रार्थनम् ॥

सर्वे पेयानित्यत्र हे कुरुसत्तम सर्वे वयं पेयादीन् आहर्तुं युक्ताः स्मः। इन्द्रसेनादीनां सारथीनां युधिष्ठिरं प्रति प्रत्युत्तरम् ॥

---

[1] मनसा।

धनञ्जयानामित्यत्र धनञ्जयानां यज्ञकुशलत्वात् दक्षिणारूपधनं जयन्ति प्राप्नुवन्तीति धनञ्जयाः याजकाः तेषामृषभः ॥

इति सभापर्वणि एकोनचत्वारिंशोऽध्यायः ।

## ॥ चत्वारिंशोऽध्यायः ॥

ज्येष्ठे मूल इत्यत्र ज्येष्ठे मासे मूलनक्षत्रे ॥

रौरवाजिनसंवीत इत्यत्र 'कृष्णसाररुन्यङ्कुरङ्कुशम्बररोहिषा' इत्यभिधानात् रौरवाजिनं कृष्णाजिनम् ॥

रुग्मस्य योषितामित्यत्र रुग्मस्य अयुतसहस्राणि योषितां कन्यानां दासीनां वा सहस्राणीत्यर्थः ॥

इति सभापर्वणि चत्वारिंशोऽध्यायः ।

## ॥ द्विचत्वारिंशोऽध्यायः ॥

अभिसंज्ञांश्च सम्भारानित्यत्र अभिसंज्ञान् नानाविधसंज्ञान् ॥

कथं तु ममेत्यत्र स्पर्धमाना राजानः 'कौरव्यः मम रत्नदानैर्यज्ञं कथं समाप्नुयात्, न कथञ्चि'दित्युक्त्वा ददुः । बहुधनसाध्ये यज्ञे ममाल्पधनं कुत्रोपयुज्यत इति विनयमुक्त्वा ददुरित्यर्थः ॥

षडग्निनाथ यज्ञेनेत्यत्र गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्यवैवाहिकाख्याः षडग्नयः । वैवाहिको नाम औपासनाग्निः ॥

भुक्तवज्जनसंवृत इत्यत्र भुक्तवन्तश्च ते जनाश्च भुक्तवज्जनाः । रत्नोपहारकर्मण्यः रत्नोपहाराख्यकर्मवान् ॥

इति सभापर्वणि द्विचत्वारिंशोऽध्यायः ।

राजसूयपर्व समाप्तम् ।

## ॥ त्रिचत्वारिंशोऽध्यायः ॥
### (अर्घाहरणपर्व ५)

अन्तर्वेदिमित्यत्र 'वेदिः परिष्कृता भूमिः' इति वचनात् ब्राह्मणानामुपवेशार्थं शालान्तरलङ्कृता भूमिरन्तर्वेदिः ॥

कर्मान्तरमित्यत्र अन्यदन्यत्कर्म कर्मान्तरम् ॥

वितण्डानाः परस्परमित्यत्र एवमेतत् एतदेव च नेत्याद्याकारेण वितण्डावादं कुर्वन्तः जजल्पुरिति पूर्वेणान्वयः ॥

आदास्यति 'दो अवखण्डन' इति धातोः आ समन्तात्संहरिष्यति ॥

यज्ञैरिज्यमित्यत्र इज्यं पूजायोग्यम् ॥

इति त्रिचत्वारिंशोऽध्यायः ।

---

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

विकृष्टत्वादित्यत्र भूशोधनार्थं लाङ्गलेन देशानां विकृष्टत्वात् । तस्य च देशस्याल्पत्वादिति भावः ॥

सितस्य बलरामस्य ॥

भगवान् सर्वभूतानामित्यारभ्य खाण्डवप्रस्थमाययावित्यन्तश्लोकानामयं भावः—हे अरिन्दम जनमेजय यः यादवश्रेष्ठो माधवः आनकदुन्दुभिं बलाधिकारं सेनानायकं द्वारवत्यां निक्षिप्य धर्मराजाय उच्चावचं धनौघं पुरतः कृत्वा खाण्डवप्रस्थं यज्ञारम्भात्प्राक् आययौ, ऋजुं अनुग्रवत् स्थितं, चक्रायुधं शौरिं जगतस्तस्थुषश्चैव प्रभवाप्ययं अच्युतं अनन्तं, शत्रूणां अन्तं, अत एवामित्रगणमर्दनं सर्वभूतानां प्रभवं, अच्युतं यथा भवति तथा आपत्सु आश्रयं, भविष्यं उपरि बुद्धादिरूपेणावतरिष्यन्तं, भावनं इदानीं कृष्णव्यासादिरूपेण वर्तमानं, भूतं मत्स्यादिरूपेण प्रागवतीर्णं, तेजोराशिं ऋषिं अदृश्यं दर्शनायोग्यं तमेनं कृष्णं दृश्यं प्राकृतं जनमिव जानतां वयोतिगानां वृद्धानां अत एव मार्गमावृत्य तिष्ठतां सतां, युधिष्ठिरे यजमाने सति द्वारवत्यां समुदितं अमित्र-

---

[1]सभां.

गणमर्दनं शेषं अवशिष्टं बलं सैन्यं समन्ततः परिगृह्य सम्प्रायात् यज्ञसभां विहाय महासभां प्रत्येव आगतवान् । रथघोषेण तान् यज्ञागतान् चैद्यादीन् सर्वान् नादयन् सन् उपायात् सभामध्यमुपायात् ॥

आसनं च जगत्पतेरित्यत्र ददाविति योग्यपदाध्याहारः ॥

संयुक्तमित्यत्र तत्काले आगतमतिथिम् ॥

इति चतुश्चत्वारिंशोऽध्यायः ।

## ॥ षट्चत्वारिंशोऽध्यायः ॥

अयं त्वत्रेत्यत्र अयं सूक्ष्मो धर्मः ॥

भवत्यभ्यधि कमित्यत्र हे भीष्म लोकेषु सतामवमतः कृष्णः कं अभि कं प्रति, अधि अधिकः भवति इति योजना ॥

अयं तत्रेत्यत्र विशेषेणातिक्रान्तमतिक्रमणं यस्य स तथोक्तः । धर्मं कुर्वता त्वया कृष्णस्य प्रियकाम्यया कथं कृष्णः अर्चित इत्युत्तरेणान्वयः ॥

अर्चितस्त्वदित्यत्र त्वत् त्वत्तः ॥

प्रयच्छाम इत्यत्र लोभात् मातुःस्वस्रीय इति लोभात् ॥

यदि भीताश्च कौन्तेया इत्यत्र हि तर्हि हि कथमिति चाव्ययद्वयस्यार्थो ज्ञेयः । राज्ञां मध्ये कथं पूजां कृतवन्तः ॥

हविषः प्राप्येत्यत्र विष्यन्दं पात्रात्पतितभागम् ॥

यमं चैनानित्यत्र अतः अवमानात्कारणात् । अन्यथा अवमाने सतीत्यर्थः । यमं यमसदृशं भीष्ममिति पूर्वेणान्वयः ॥

इति षट्चत्वारिंशोऽध्यायः ।

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

शिरस्तस्येत्यत्र दिवं द्युलोकं तस्य शिर आहुरिति सम्बन्धः ॥

परमात्मवान् परमनित्तवान् परमप्रयत्नवान्वा ॥

ब्रह्मभूत इत्यत्र ब्रह्मणो वेदात् भूतोऽभिव्यक्तः। तदात्मानं वेदात्मानं वेदप्रवर्तकमित्यर्थः॥

तेन तद्व्यसृजदित्यत्र तेन ब्रह्मणा गुरुणा तत् रुद्रादियोगिवृन्दं व्यसृजत् उपरि वक्ष्यमाणं वेदाख्यं ब्रह्म विविधया असृजत् उपादिशत्॥

आभूतसंप्लवा इत्यत्र आभूतसंप्लवाः भूतसंप्लवः प्रलयः तत्पर्यन्तं विद्यमानाः लोकानां बहुकोट्यः अपचक्रमुः ब्रह्मणो देहान्निर्गताः सृष्टा इत्यर्थः॥

सकल्पा इत्यत्र सकल्पाः दैनन्दिनकल्पेन ब्रह्मकल्पेन च सहिताः॥

इति सप्तचत्वारिंशोऽध्यायः।

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

ब्रह्माणं कपिलमित्यत्र कपिलं कपिर्भूत्वा लसतीति व्युत्पत्त्या कपिलं मुख्यवायुम्। 'तौ विवेश स्वयं वायुरि'ति वायोर्वक्ष्यमाणत्वादत्रापि कपिलो वायुः॥

पारश्रेष्ठीत्यत्र पारः संसारसमुद्रस्य पारे विद्यमानः श्रेष्ठी श्रेष्ठा मुक्ता एव सेवकतया अस्य वर्तन्त इति श्रेष्ठी देवदेवो नारायण इति पूर्वेण सम्बन्धः॥

भूमिं बद्ध्वेत्यत्र भूमिं स्वकरचरणाद्यङ्गेषु बद्ध्वा॥

कर्णस्रोतोद्भवावित्यत्र स्रवत्यत्र वायुरिति व्युत्पत्त्या स्रोतानि नवद्वाराणि॥

आसीदादावित्यत्र स्वयंजन्म स्वयं पङ्कादिकारणं विना केवलं स्वतः स्वस्वभावादेव जन्म यस्य तत् स्वयंजन्मेति पङ्कजस्य विशेषणम्॥

आवां जहीत्यत्र उर्वी असन्मरणभूमिः। रूपद्वयेन वायोः दैत्यद्वये संनिधानात् हतौ च तव पुत्रत्वमित्युक्तम्॥

इति अष्टचत्वारिंशोऽध्यायः।

## ॥ एकोनपञ्चाशोऽध्यायः ॥

पौष्करिक इत्यत्र पौष्करिकः पुष्करसम्बन्धी प्रादुर्भावः पद्मनाभाख्य-प्रादुर्भावः ॥

इति एकोनपंचाशोऽध्यायः ।

## ॥ पञ्चाशोऽध्यायः ॥

जपोपवासैरित्यत्र तस्य प्रागुक्ततपसः जपोपवासैः तपोनिमित्तजपोपवासैरित्यर्थः । स्थाणुः स्थाणुवन्निश्चल आसीत् मौनव्रतश्चाभवदिति क्रियाद्वयसम्बन्धः ॥

तैः सृष्टानित्यत्र शरानिति योग्यपदाध्याहारः ॥

इति पंचाशोऽध्यायः ।

## ॥ द्विपञ्चाशोऽध्यायः ॥

महदादिसमेदिनीमित्यत्र महदादिलोकैः सहितमेदिनी ॥

उदकृन्तत 'कृन्त छेदन' इति धातोः परशुना चिच्छेद । चतुर्दशसहस्राणि उक्तविधया त्रिसहस्रन्यूनचतुर्दशसहस्राणि कणधूमं तृणकणैः सूचिकाकणैश्च सहकृतधूमं, 'सुइमण्णु' इत्यपभ्रंशभाषा । तमपाययत् । एकवारं कृतशिक्षां त्रिसहस्रामपि अपाययदिति वा चतुर्दशसहस्राणि ॥

रामरामेत्यत्र अभिक्रुष्टैः अभितः क्रुष्टं आक्रोशनं येषां ते तथोक्ताः ॥

जीवञ्जीवनिभस्य चेत्यत्र 'जीवञ्जीवश्चकोरक' इति वचनात् रक्तवर्णचकोराख्यपक्षिसदृशस्य ॥

इति द्विपंचाशोऽध्यायः ।

## ॥ त्रिपञ्चाशोऽध्यायः ॥

तस्याग्रेणेत्यत्र तस्य भूमिदानस्य अग्रेणावसानकालेन । भूमिं विपांसुलां विगताः पांसुलाः पापिष्ठा यस्यां सा ताम् ॥

[1] त्रिसहस्रामपि.

वेदिमष्टादशोत्सन्धामित्यत्र अष्टादशोत्सन्धां सप्तद्वीपाः सप्तसमुद्राः मेरुः काञ्चनभूमिः वज्रलेपः लोकालोकश्चेति अष्टादशोत्सन्धाः उत्कृष्टाः सन्धयो यस्याः सा तां अतिपौरुषीं बहुशः क्षत्रियाणां संवृतत्वात्, हिरण्यस्य क्षत्रियकुलादार्जितनानासुवर्णराशेः सम्बन्धिनीं वेदिं 'वेदिः परिष्कृता भूमिः' इति वचनात् अलङ्कृतभूमिं कश्यपाय ददौ ॥

नग्निकानां कुमारीणामित्यत्र 'नग्निकाऽनागतार्तवा' इत्यभिधानात् नग्निकानां रजोदर्शनरहितानाम् ॥

आदिकाल इत्यत्र कालं कञ्चित्कालपर्यन्तं प्रकृष्टतपआदिसत्कर्माणि विभजन् विशेषेण भजन् श्रद्धया कुमारीणां वाक्येषु श्रद्धया ॥

सोऽस्य भाग इत्यत्र अस्य कृष्णस्य भागः स्वरूपांशभूतः ॥

इति सभापर्वणि त्रिपंचाशोऽध्यायः ।

---

॥ चतुष्पञ्चाशोऽध्यायः ॥

तिथौ नावमिक इत्यत्र नावमिके नवमीसम्बन्धिनि ॥

कर्मार्थमेवेत्यत्र कर्मार्थमेव राक्षसहननाख्यकर्मार्थमेव ॥

भग्नं भाहेश्वरमित्यत्र 'हेला लीलेत्यमी (हा) भावाः क्रियाः शृङ्गार-भावजा' इत्यभिधानात् आ ईषत् लीला शृङ्गाररसजातमन्दहासवक्रपिशुनिरी-क्षणादिलीला यस्यां सा तया क्रीडया ॥

भर्तारमनुशोचतीत्यत्र लोकविडम्बकं भर्तारमनुसृत्य शिलाकण्ट-कादिषु गमने सति शोचन्ती शोकं दर्शयन्ती ॥

दशाश्वमेधानित्यत्र जारुधिर्नाम सरयूतीरदेशविशेषः । निरर्गलान् निष्प्रत्यूहान् ॥

पर्यदेवमित्यत्र परितः अदेवं देवरहितगृहं न ॥

नाकृष्टाकरक इत्यत्र अकृष्टे अकर्षणे सति आ समन्तात्करः द्रव्यदानं यस्य सः अकृष्टाकरकः तादृशो जनो न नास्ति ॥

नासीदित्यत्र योगे योगाभ्यासे अपगता कृपिः प्रयत्नः यस्य स तथोक्तः ॥

तपः धर्मश्चाभवतामिति सम्बन्धः ॥

शक्रोऽर्जुन इत्यत्र स्थानानि प्रतिस्थानानि ॥

इति सभापर्वणि चतुष्पंचाशोऽध्यायः ।

॥ पञ्चपञ्चाशोऽध्यायः ॥

अभियू रण इत्यत्र 'बहुलं छन्दस्यमाङ्योग' इति वचनात् अभि आभिमुख्येन युः अयुरिति लङि रूपम् ॥

इति सभापर्वणि पंचपंचाशोऽध्यायः ।

॥ अष्टपञ्चाशोऽध्यायः ॥

न्युब्जः पयोधराकाङ्क्षीत्यत्र 'न्युब्जं विद्यादधोमुखम्' इति निघण्टोः अधोमुखो न्युब्जः ॥

शूरसेनान्यमित्यत्र शूरसेनानीः कंसः तत्कृतं कर्म शूरसेनान्यम् । अद्भुतं शकटादिरूपेण दैत्यप्रेषणम् । पक्षी कंसपक्षपातवान् ॥

अरविन्दकृतापीडावित्यत्र आपीडं शिरोलङ्कारः ॥

सशिक्यतुम्बुरुकरावित्यत्र पाथेयस्थापनाय कम्बलतन्तुकृतशील-विशेषः शिक्यं, दारुकृततन्त्रीवाद्यविशेषः तुम्बुरुः, शिक्यसहिततुम्बुरुः करे-योस्तौ ॥

श्रीवत्सेनोरसेत्यत्र श्रीर्वसत्यस्मिन्निति श्रीवत्सम् ॥

पुनर्वाद्यान्तरे वेणुमित्यत्र तुम्बवीणा अलाबुकृतवीणा ॥.

मृगरूपेण गोविन्द इत्यत्र मृगरूपेण सिंहरूपेण ॥

इति सभापर्वणि अष्टपंचाशोऽध्यायः ।

## ॥ षष्टितमोऽध्यायः ॥

पुनरपि प्रागुक्तबाल्लीलाशेषं वर्णयति—ततः कदाचिदित्यादिना ॥

प्राक् सङ्कोचेनोक्तं कंसयुद्धं पुनर्विस्तरेणाह— कश्च नारायणादन्य इत्यादिना । एवञ्च प्रक्रान्तकथाभ्यन्तरे कथान्तरमप्यारभमाणो भीष्मः सरससुन्दरीभिरितस्ततो विकृष्यमाणः कामुक इव कृष्णकथायाः पदे पदे स्वादुतां स्वस्य हरिकथारसिकतां च दर्शयन्नास्ते ॥

गदापरिघेत्यत्र पाठीनो मत्स्यः । 'मीनः पाठीन एव च' इत्यमरः ॥

सरस्वत्यां जरासन्धमित्यत्र सरांसि अस्यां वर्तन्त इति सरस्वती यमुना ॥

स भूम्यामित्यत्र मूर्ध्नि लिङ्गं स्वं स्थितं यस्य सः मूर्ध्निलिङ्गस्थः ॥

औदकायामित्यत्र औदकायां परितः उदकेनावृतत्वात् औदकेति च तां पुरीं वदन्ति ॥

आदेवयानमित्यत्र आदेवयानं देवविमानपर्यन्तम् ॥

अति वैराज्यमित्यत्र वैराज्यं पाताल्लोकम् ॥

इति षष्टितमोऽध्यायः ।

---

## ॥ द्विषष्टितमोऽध्यायः ॥

प्रवृत्तचक्रमित्यत्र प्रकर्षेण वर्तमानं सेनाचक्रं यस्य तम् ॥

सुतं तत्सुतं भगदत्तम् ॥

सृष्ट इत्यत्र मधुमन् मधुकुलवन् ॥

ततो म इत्यत्र मे मया ॥

विस्तारकल्पेत्यत्र विस्तारेण कल्पः कल्पना येषां ते तथोक्ताः अर्कमणयः सूर्यकान्तमणयः ॥

प्रवालविकृता इत्यत्र कुथाः गजास्तरणकम्बलविशेषाः ॥

यान्यैः यानवाहकैः ॥

आविकानीत्यत्र (आवासानि–) आ समन्ताद्वसन्ति येषु तानि, चित्रकम्बलादिकृतमन्दिराणि ॥

चक्रुर्धाराञ्जलिमित्यत्र मोदाश्रुधारया सह अञ्जलिम् ॥

मारुतः स्वयमित्यत्र इत्युवाचेति क्रियाध्याहारेण योजना ॥

न्यङ्कु(भि)श्चेत्यत्र न्यङ्कुः कृष्णसारमृगः । 'रङ्कुस्तथा न्यङ्कुरिति प्रसिद्धा वातप्रमीशम्बरकृष्णसारा' इति हलः ॥

इति द्विषष्टितमोऽध्यायः ।

॥ त्रिषष्टितमोऽध्यायः ॥

समुच्छ्रितपताकानीत्यत्र परितः प्लवन्तीति परिप्लवा मेघाः ॥

स्वनिर्व्यूहैः सदन्तुरैरित्यत्र 'दन्त उन्नत उरच्' इति वचनात् दन्तुरा उन्नतदन्ता गजाः तत्सहितैः ॥

हेमनाभः पद्मनाभः ॥

इति त्रिषष्टितमोऽध्यायः ।

॥ चतुष्षष्टितमोऽध्यायः ॥

शिशुमा या इत्यत्र शिशुमेति कृष्णमहिष्या नामान्तरम् ॥

इति सभापर्वणि चतुष्षष्टितमोऽध्यायः ।

॥ सप्ततितमोऽध्यायः ॥

आरथ्यामाहतेत्यत्र आ समन्ताद्रथिनो यत्र गच्छन्ति सा वीथी आरथी ॥

नेमिहंसपदेषु देशेषु ॥

प्राप्य लोहितकूटानीत्यत्र लोहितकूटानि हेममयगिरिशृङ्गाणि ॥

वक्रानुयान इत्यत्र रैवताचले वक्रीभूय अनुयाने जात्येकवचनं, खस्वानुकूलरथेपु सहितान् पुञ्जीभूतान् ॥

इति सप्ततितमोऽध्यायः ।
अर्घाहरणपर्व समाप्तम् ।

## ॥ एकसप्ततितमोऽध्यायः ॥

### (शिशुपालवधपर्व ६)

उक्तमेतदित्यत्र तृतीयायां तामस्यां प्रकृतौ ॥

यत्र कुत्सेत्यत्र 'कुत्सा निन्दा च गर्हणा' इत्यभिधानात् कुत्सा निन्दा॥

शकुनिः वकपक्षी ॥

अर्कप्रमाणावित्यत्र अर्कः अर्कतरुः ॥

आत्मानमात्मनेत्यत्र आत्मानं चित्तं आधातुं सन्धातुं । साधु शोभनं कर्म अकामयन्तं तं कृष्णं साध्विति कथं पश्यसि ॥

न गाथा गाथिनमित्यत्र गाथा केनचिदुक्ता अवद्धं वा सुवद्धं वा वर्णयन्ती कथा गाथा । गाथिनं गाथावन्तं गाथागायकमित्यर्थः । न शास्ति न शिक्षति । पठति गाथां पठतीति कृत्वा कारणं श्रैष्ठ्यस्य कारणं न । भूतानि प्रकृतिं स्वस्वप्रकृतिं यान्ति यावती प्रकृतिरस्ति तावतीमेव यान्ति । स्तुत्या उच्चाः निन्दया नीचाश्च न भवन्तीत्यर्थः । कुलिङ्गशकुनिः कुलिङ्गाख्यः पक्षी । अस्य कथा उपरि स्पष्टा भविष्यति ॥

दारेपु यस्य चेत्यत्र तव मिपतः सतः ॥

यं धारयसीत्यत्र मोहात् नापुत्रस्य लोकोऽस्तीति शास्त्रार्थस्य अज्ञानात् ॥

न हि ते सेविता इत्यत्र ते त्वया ॥

धर्माधर्म इत्यत्र धर्मेण सहितः अधर्मः धर्माधर्मः ॥

अन्तरात्मनीत्यत्र अन्तः रोषी, आत्मनि मुखादिदेहे हृद्यः । पत्ररथः पक्षी हंसः ॥

इति एकसप्ततितमोऽध्यायः ।

## ॥ द्विसप्ततितमोऽध्यायः ॥

येन धर्मात्मनेत्यत्र दुरात्मने अस्मै दातुमिर्पितं पाद्यं अनेनेर्पितं इच्छितम् ॥

स्त्रीसधर्मेत्यत्र स्त्रीसधर्मा स्त्रियाः समानधर्मा स्त्रीसदृश इत्यर्थः ॥

त्रिशिखामित्यत्र कोपादुद्भुद्धमध्यग्रन्थिरेका शिखा, प्रान्तयोर्द्वे एवं त्रिशिखामित्यर्थः ॥

महासेनमिवेत्यत्र 'कार्तिकेयो महासेन' इत्यभिधानात् ईश्वरः षण्मुख-मिव जग्राह । गुरोर्भीष्मस्य ॥

समुद्भूत इत्यत्र वर्षासु समुद्भूतः महोदधिः घनापाये शरदि वेलामिव नातिचक्राम ॥

न स तमित्यत्र सः भीमः तं शिशुपालम् ॥

कृष्णस्यैव विनिश्चय इत्यत्र विनिश्चयः विपरीतनिश्चयः । अयं शिशु-पालः कृष्णस्यैव वध्य इति योग्यपदाध्याहारः ॥

इति द्विसप्ततितमोऽध्यायः ।

---

## ॥ त्रिसप्ततितमोऽध्यायः ॥

प्राञ्जलिस्तमित्यत्र महद्भूतं यस्य तं महांश्चासौ भूतश्च महद्भूतः तं नम-स्यामि । स पुनः वचः ब्रवीतु श्रोतुमिच्छामि ॥

येनोत्सङ्ग इत्यत्र अभ्यधिकौ सहजभुजद्वयादधिकौ उभौ भुजौ सम्भग्नौ भविष्यतः सोऽस्य मृत्युः ॥

तौ दामघोषमित्यत्र दमघोष एव दामघोषः । यादवानां मध्य इत्यर्थः ॥

इति त्रिसप्ततितमोऽध्यायः ।

---

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

एषो ह्यस्येत्यत्र 'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम्' इति वचनात् एषः ईशैश्वर्यदायी हरेस्तेजोंशः अस्य शिशुपालस्य वर्तते ॥

संस्तवाय मन इत्यत्र तर्हि त्वत्कृतसंस्तवाय मम मनः रमते इति सम्बन्धः ॥

कृष्णाग्रपूजाधिकाराय[1] प्राक् प्रस्तावितानेव राज्ञः प्रशंसाधिकाराय पुनः प्रस्तावयति— वरदं स्तुहि बाह्लीकमित्यादिना । तेन न पौनरुक्त्यम् । अत एव तत्र कथं कृष्णोऽर्चितस्त्वयेत्युक्तम् । अत्र तु किं प्रशंससि माधवमित्येवोच्यते ॥

सर्वाङ्गविषय इत्यत्र समस्ताङ्गराज्याधिपतिम् ॥

यस्य ते कुण्डले इत्यत्र यस्य कर्णस्य ये कुण्डले स्तः यत्कवचं चास्ति स कर्णः ते कुण्डले तत्कवचं च तदा दानकाले प्राप्ते ददौ ॥

शारदं शुभमित्यत्र शारदं विशारदम् ॥

यद्वृद्धानां मयेत्यत्र कृतमिति शेषः ॥

केशवं तच्च ते इत्यत्र हे भीष्म तत् तस्मात् ते स्तुतिनिन्दे किञ्चिदपि न मन्यसे स्तुतिनिन्दादोषं न जानासीति भावः ॥

कथं भोजस्येत्यत्र कथनकाम्यया कृष्णकीर्तिकथनेच्छया भवान् सर्वं जगत् ईदृशे कृष्णे कथं समावेशयते सर्वं जगदेतदाश्रयमिति कथं स्तौषीति भावः ॥

न चैषां न च ते भक्तिः प्रकृतिं याति भारतेत्यत्र एषां पाण्डवानां भक्तिः कृष्णे क्रियमाणा भक्तिः प्रकृतिं वस्तुस्वभावं न याति गत्यर्थानां ज्ञानार्थत्वात् न जानाति । ते भक्तिश्च प्रकृतिं न याति । श्रुतं भवदीयैरेव श्रुतं अन्येन भवद्भ्योऽन्येन न श्रुतं कृष्णं वन्दिवत् स्तौषीति योजना ॥

---

[1] धिकाराय.

कुलिङ्गशकुनिः कुलिङ्गाख्यः पक्षी ॥

सा हि मांसार्गलमित्यत्र मांसार्गलं मांसाख्यस्वबाधकवस्तु ॥

इच्छतः क्षुद्रतया तदर्हिंसनमिच्छतः ॥

पशुवत्साध्वसं नृपैरित्यत्र साध्वसं भीतिर्यथा भवति तथा ॥

आन्तं अन्ते विद्यमानं कार्यम् ॥

यादवस्यैवेत्यत्र यादवस्य देवस्य कृष्णस्य, निपातितः भवदङ्गे निपातितः शर एव देहं भवद्देहं विशति ॥

इति सभापर्वणि चतुस्सप्ततितमोऽध्यायः ।

---

॥ पञ्चसप्ततितमोऽध्यायः ॥

अपेतेति लोटि मध्यमपुरुषवचनम् ॥

सौवीरात्प्रतिपत्तौ चेत्यत्र प्रतिपत्तौ 'पद्लृ गतौ' इति धातोः द्वारकां प्रत्यागमने सति, बभ्रोः बभ्रुनामकयादवस्य ॥

करूशार्थे दन्तवक्रार्थे, मातुलस्य वसुदेवस्य नृशंसकृत् निष्ठुरकारी ॥

जिहीर्षया कन्यापहारेच्छया ॥

परमानृजुरित्यत्र परमश्चासावनृजुर्वक्रश्चेति विग्रहः ॥

मातुलेयोऽस्य सङ्गर इत्यत्र अस्य मातुलेयः अहं सङ्गरे प्रासे सति वधार्हाणां आगसां शतं क्षन्तव्यमिति घोरैः समयैः बद्धोऽस्मीति योजना ॥

वासुदेवेन विश्रुता इत्यत्र विश्रुताः विशेषेण श्राविता इत्यर्थः ॥

तदा तद्वृष्णिवीरेणेत्यत्र स चासौ वृष्णिवीरश्च तद्वृष्णिवीरः तेन ॥

इति सभापर्वणि पंचसप्ततितमोऽध्यायः ।

---

॥ षट्सप्ततितमोऽध्यायः ॥

पराक्रमं च मार्गं चेत्यत्र परस्याक्रमणं पराक्रमं, एकग्रहदशाऽसमाप्तौ ग्रहान्तरदशायातिः । मार्गं वक्रावक्रगतिरूपमार्गम् । सन्निपातं पञ्चपदादिग्रह-

योगम् । समुच्छ्रयं केन्द्राद्युच्चस्थानस्थितिम् । आरोहणं नीचस्थानादुच्चस्थानारोहणम् । अन्योन्यप्रतिसर्पणं ग्रहयोः परस्परयुद्धम् । रश्मीनां व्यतिसंसर्गं नीचोच्चग्रहयोरेकराशौ मेलनम् । व्यायामं कालक्षेपेण फलदानम् । पीडनं सद्यःपीडनम् । दर्शनादर्शनानां दृश्यन्त इति व्युत्पत्त्या दृश्यादृश्यग्रहाणां दर्शनादर्शनं दृश्यस्य बृहस्पत्यादेः अदर्शनं मौढ्यसंज्ञितं, अदृश्यस्य राह्वादेश्चन्द्रोपरागादौ दर्शनम् । हानिं हान्याख्यफलदत्वम् । वृद्धिं वृद्धिफलदत्वम् । ह्रासं व्ययफलदत्वम् । वर्णस्थानं बृहस्पतियोगे ब्राह्मणानां, अङ्गारकयोगे क्षत्रियाणां, शनैश्चरादिग्रहयोगे वैश्यशूद्राणां फलं; उपरागादेः श्वेतिम्नि ब्राह्मणानां, रक्तिम्नि क्षत्रियाणां, पीतिम्नि वैश्यानां, नीलिम्नि शूद्रादीनां फलं वा; कस्यचिद्ग्रहस्य श्वेतवर्णं वस्त्रपुष्पादिकं, कस्यचिद्रक्तं, कस्यचित्पीतं, कस्यचिन्नीलमिति वा वर्णस्थानम् । बलाबलं ग्रहाणां प्राबल्यं दौर्बल्यं च ॥

उत्पाद्यन्ते च लोकेऽस्मिन्नित्यत्र अरिष्टकाले अकस्मादुत्पाद्यन्त इत्युत्पाता इत्यर्थः ॥

अच्छाये विमलच्छायेत्यत्र यत्र चैत्यकवृक्षाणां अच्छाये छायाया अयोग्ये स्थले विमला छाया, प्रतिच्छाया सूर्यादीन्प्रत्येव च्छाया ॥

शीर्णपर्णप्रवाला इत्यत्र शीर्णपर्णाः पतितपर्णाः प्रवालाः पल्लववच्छोभमानाः, चैत्यगाः वृक्षगाः पर्णाश्च अपभ्रष्टप्रवालाः अपगतप्रवालाः शुष्कपर्णा एव दृश्यन्ते, तत्र भावं उत्पातसद्भावम् । हीयमानाः क्षीयमाणा वृक्षाः स्निग्धपत्रप्रवाला दृश्यन्ते ॥

वनस्पतिः पूज्यमान इत्यत्र अपूजितः पूजार्थं सङ्कल्पितः पूजामप्राप्तश्चेत्यर्थः ॥

न तं वृक्षं निपातयेदित्यत्र तं वृक्षं वृक्षान्तरे शिलया वा प्रतिरुद्धं दण्डरज्ज्वाद्युपायेन पुनर्निपातयेदित्यर्थः ॥

अथैनं छेदयेदित्यत्र एनं वृक्षं छेदयेत् पातार्थं मध्ये छेदयेत्, इन्धनार्थं वा छेदयेदित्यर्थः ॥

दैवतानां च पतनमित्यत्र उत्सवे उद्धृत्य नीयमानानां देवानां पतनम् ॥

देवताः देवालयान्तस्थितदेवाः ॥

अन्यद्वारि भयमित्यत्र वारि उदके अन्यत् किञ्चित् भयं भयङ्कररक्त-बुद्बुदादिकम् ॥

विकृतं यदि दृश्येतेत्यत्र विकृतं रावणहस्ताद्याकारेण जायमानो मृद्विकारः ॥

श्रेणीपदानित्यत्र श्रेणीभूतबहुपादयुक्ताः प्राणिनः । 'चेरटे' इत्यपभ्रंशभाषा । दीपकान् तमसि दीपाकारेण ज्वलमानान् खद्योतान् सरीसृप-प्राणिविशेषान्वा । 'सण्णजिरि' इत्यपभ्रंशभाषा ॥

अभिन्नं वाऽप्यपक्वं वेत्यत्र अभिन्नं वा पाकेन तण्डुलेषु विदारणरहितं वा, अपक्वं वा पाकरहितं वा यत्र भाण्डे अन्नमुपचीयते अभिवर्धते । ते तण्डुलाः जीवन्ते वा तण्डुलीभावेनैव तिष्ठन्ति वा, म्रियन्ते वा तण्डुलीभावं त्यक्त्वा हस्तेन स्पर्शे सति चूर्णीभवन्ति वेत्यर्थः ॥

उदपाने च यत्रेत्यत्र 'पुंस्येवान्धुः प्रहिः कूपमुदपानं तु पुंसि वा' इत्यभिधानात् उदपाने कूपे । ततः कूपान्निर्गच्छेयुः । स्थावरेषु भूप्रदेशेषु प्रवर्तन्ते च ॥

विकृतानि प्रजायन्त इत्यत्र विकृतानि यथा भवन्ति तथा प्रजाकारेण जायन्ते ॥

इति सभापर्वणि भूनिमित्तकोत्पातकथनं नाम षट्सप्ततितमोऽध्यायः ।

## ॥ सप्तसप्ततितमोऽध्यायः ॥

योऽसौ चेदिपतेस्तातेत्यत्र विनश्यत्यनेनेति विनाशो गोविन्दः सन् विनाशसूचकदुर्निमित्तम् ॥

ररास च मही क्रूरखेत्यत्र ररास 'रसी उद्वेगे' इति धातोः तत्रास त्रस्ता जाता ॥

इति सभापर्वणि सप्तसप्ततितमोऽध्यायः ।

॥ अष्टसप्ततितमोऽध्यायः ॥

द्वैरथं काङ्क्षितमित्यत्र द्वौ रथौ ययोस्तौ द्विरथौ तयोर्भावः द्वैरथं द्वन्द्वयुद्धमित्यर्थः ॥

अद्य त इत्यत्र ते मामका बाणाः नेष्यन्ति यमलोकं प्रापयिष्यन्ति ॥

अन्तर्धामथ चक्रतुरित्यत्र अन्तर्धामन्तर्धानम् । 'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम्' इत्यमरः ॥

अपसन्नृपेत्यत्र अपसन् सुनीथं विहाय शिशुपालं प्रत्यागच्छन् ॥

रुधिरं परिसुस्रावेत्यत्र अति अतिशयेन रुधिरं परिसुस्रावेव ॥

नैषु चिन्मयि तस्थिर इत्यत्र ये शराः मयि तस्थिरे तेषां मध्ये चित् कश्चिदिषुः मयि न । असुरजनमोहनार्थं शरविद्ध इव अहमभवम् । वस्तुस्थित्या ममाङ्गे एकोऽपि शरः न लग्न इति भावः ॥

चिच्छेद च सुनीथस्येत्यत्र सुनीथस्य पश्यतः सतः चैद्यस्य शिरः चिच्छेदेत्यर्थः ॥

तेजः ज्योतिर्भयस्य जयस्य देहात्मकं तेजः ॥

सुवोऽन्तादित्यत्र सुवः स्वर्लोकस्य अन्तान्मध्यात् ॥

हस्तैर्हस्ताग्रमित्यत्र प्रत्यपिक्षन् पेषणं कृतवन्तः ॥

प्रजापतिगणा इत्यत्र प्रजापतिगणाः ब्रह्मादिप्रजापतीनां गणाः ॥

इति सभापर्वणि शिशुपालवधो नामाष्टसप्ततितमोऽध्यायः ।

---

॥ एकोनाशीतितमोऽध्यायः ॥

शान्तविघ्नार्हणक्षोभ इत्यत्र अर्हणात् क्षोभः शिशुपालस्य क्षोभः विघ्नश्चासावर्हणक्षोभश्च स शान्तो यत्र स तथोक्तः ॥

वागीशाः विद्याधीशाः ॥

उपेन्द्रसेवेत्यत्र देवैः सह वर्तमानः सदेव इन्द्रः तेनोपेन्द्रस्य विहितं कर्मेव ॥

पर्यवीविपन्नित्यत्र अतिशयेन परिवेषयामासुः ॥

शृङ्खवर्णाम्बुजा इत्यत्र अम्बुजाः शङ्खाः, वर्णाः वाद्यविशेषाः ॥

इति सभापर्वणि एकोनाशीतितमोऽध्यायः ।

॥ अशीतितमोऽध्यायः ॥

ते न व्रजतेत्यत्र ते यूयम् ॥

इति सभापर्वणि अशीतितमोऽध्यायः ।

शिशुपालवधपर्व समाप्तम् ।

॥ एकाशीतितमोऽध्यायः ॥

( द्यूतपर्व ७ )

अनुसंसाद्य नृपतीनित्यत्र अनुसंसाद्य अनुप्राप्य ॥

इति सभापर्वणि एकाशीतितमोऽध्यायः ।

॥ चतुरशीतितमोऽध्यायः ॥

तत्र स्फाटिकतोयामित्यत्र स्फाटिकवच्छोभमानशुभ्रजलां, स्फाटिकवच्छोभमानशुभ्राम्बुजयुक्ताम् ॥

प्रलम्भान् वञ्चनानि ॥

जगाम स्वगृहमित्यत्र स्वगृहमृते अन्यद्गृहं जगामेति सम्बन्धः ॥

स तु गच्छन्नित्यत्र अनेकाग्रः एकाग्रचित्तरहितः ॥

क्षान्तं ततोऽपराधमित्यत्र ततः कारणात् क्षोभितं तं चैद्यवधाख्यमपराधं क्षान्तं क्षमाविषयं कर्तुं नार्हसि ॥

आच्छादयसीत्यत्र आव्रियते एभिः पुरुष इत्यावारा वस्त्राणि ॥

आजानेया वहन्तीत्यत्र आजानेयाः सदश्वाः । 'आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिन' इत्यमरः ॥

अधीताः कृतवानित्यत्र येन त्वया विद्या अधीताः, कृतवान् नैमित्तिककर्मवान्, भ्रातुः मम भ्रातुः पाण्डोः राज्ये स्थितः स त्वमिति सम्बन्धः ॥

सन्तोषो वै श्रियमित्यत्र यावल्लब्धं तावतैव परितोषः सन्तोषः पुनर्द्रव्यार्जने अलसत्वात् श्रियं हन्ति । अभिमानः पुण्यकर्मण्येवाभिमानः, सोऽपि श्रियं हन्ति । अनुक्रोशः सर्वप्राणिषु दया, सोऽपि श्रियं हन्ति । सन्तोषः, तावुभौ अभिमानानुक्रोशौ, उभे अनुत्थानभये अनुत्थानं अनुत्साहः, भयं कस्मिन् सति किं स्यादिति भयं, यैरेतैः पञ्चभिर्वृतः पुरुषो महत् ऐश्वर्यं नाश्नुते ॥

न मामवैहीत्यत्र भूतां प्रभूतां युधिष्ठिरे तां श्रियं दृष्ट्वा मम मां श्रियं नावैहि । तत्सम्पदः अग्रे मम सम्पदतितुच्छेति भावः ॥

सपत्नानृद्ध्यत इत्यत्र सपत्नान् ऋद्ध्यतः वर्धमानान्, अस्मान् हीयमानान्, कौन्तेये अदृश्यां द्रष्टुमशक्यां वर्धतीं वर्धमानां श्रियं च निशाम्य अहं किं किमपि अन्नाच्छादनादिकं न पश्यामि । तद्द्रष्टुमपि मनो नायाति । भोक्तुं नेति किं वक्तव्यमिति भावः ॥

कदलीपत्रवर्णानीत्यत्र चित्राम्बराणीति शेषः ॥

ब्राह्मणा वाटधाना इत्यत्र वाटधानाः पुष्पवाटादिना धानाः धनवन्तः ॥

त्रैखर्वा इत्यत्र त्रयः धर्मार्थकामाः खर्वाः तुच्छाः यस्मात्पुरुषार्थात् स मोक्षस्त्रिखर्वः, तत्सम्बन्धिनस्त्रैखर्वाः मुमुक्षव इत्यर्थः । त्रिखर्वविषयस्था वा त्रैखर्वाः असौ धर्मराजाय प्रतिपाद्य निवेदयित्वा ॥

इति सभापर्वणि चतुरशीतितमोऽध्यायः ।

---

## ॥ षडशीतितमोऽध्यायः ॥

धृतराष्ट्रं नरव्याघ्रमित्यत्र अपदान्तरं न विद्यते पदान्तरं वाक्यान्तरं यथा भवति तथा ॥

ये च तत्र सभास्तारा इत्यत्र सभास्ताराः सभ्याः । 'सभासदः सभास्ताराः सभ्याः सामाजकाश्च ते' इत्यमरः ॥

धृतराष्ट्रोऽन्वशात्तदेत्यत्र अन्वशात् अनुशासनमकरोत् ॥

अपजीवा इवेत्यत्र कारस्कराः कुर्वन्तीति काराः करा येषां ते तथोक्ताः, कराभ्यां बहुकार्यकरणसमर्था इत्यर्थः । लोहवद्दृढा जङ्घा येषां ते लोहजङ्घाः, पदाभ्यां बहुदूरगमनेऽप्यालस्यरहिता इत्यर्थः। एतादृशाः किङ्कराः किङ्करनामकदैत्यगणाः । यद्वा कारस्करा लोहजङ्घाश्च जातिविशेषा एव । अपजीवा इव अपगतो जीवो येषां ते अपजीवाः, मृता इव प्रातिकूल्यकरणे असमर्था इत्यर्थः। अपजीवाः अपहृतं, जीवयतीति व्युत्पत्त्या जीवो जीवनधनं यैस्ते त इव । धनं दत्त्वा सङ्गृहीतभटा इव युधिष्ठिरनिवेशने निघ्नाः 'निघ्नः परवशो मत' इत्यभिधानात् सर्वोक्तकारिणो भृत्याः सन्तः आ समन्तात् नगरस्योपरि परितश्च आभान्ति प्रकाशन्ते । करणगमनादावतिसमर्था एते दैत्याः धर्मराजभवने दासानुदासास्सन्तः तिष्ठन्तीति भावः । अन्त्याः भुवः कोणे वर्तमानाः, पर्युदस्ताः परितः उत्कर्षेण अस्तं राष्ट्रं यैस्ते पर्युदस्ताः गिरिकन्दरादिषु विद्यमानाश्चोराः भूतपिशाचादयश्च युधिष्ठिरनिवेशने निघ्ना इव आभान्ति ॥

ज्येष्ठोऽहमितीत्यत्र ज्येष्ठः वयोज्येष्ठः, श्रेष्ठः गुणैः श्रेष्ठः, युक्तः नियुक्तः ॥

उपस्थितानामित्यत्र रत्नानां, रत्नहारिणां जनानां च पारं अन्तं अपरं आदिं च न पश्यामि ॥

कृतां बिन्दुसरोरत्नैरित्यत्र बिन्दुसरोरत्नैः बिन्दुसरसः समीपस्थवृषपर्वसभारत्नैः मयेन कृताम् ॥

शत्रो रत्नेत्यत्र भवान् ईदृशं मां यदि मसृप सेहे । पुष्करीं सभां मत्वेति सम्बन्धः ॥

न श्रुतानीत्यत्र तेषां वाक्यानि न श्रुतानि, मुखानि न दृष्टानि ॥

इति सभापर्वणि षडशीतितमोऽध्यायः ।

## ॥ सप्ताशीतितमोऽध्यायः ॥

और्णांश्चैलान्वार्षदंशानित्यत्र 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यभिधानात् और्णान् ऊर्णाकृतचित्रकम्बलादीन्, वार्षदंशान् वृषभदंशनशीलत्वाद्वृषदंशा व्याघ्रादयस्तत्सम्बन्धिचर्मनखादीन् ॥

अश्वांस्तित्तिरिकल्मापानित्यत्र तित्तिरिपक्षिवत् कृष्णपाण्डुरान् त्रिदशान् त्रिः त्रिवारं दशवर्पाणि येषां ते तथोक्ताः, त्रिंदशवयस्कानित्यर्थः । पीलुशमीङ्गुदैः 'पीलुर्गुडफलस्त्रंसी' इत्यभिधानात् द्राक्षाखर्जूरनालिकेरादयः पीलवः, शमी शमीवृक्षः, इङ्गुदोऽपि पुष्पलताविशेषः तैः पुष्टान् अश्वादीन् चतुष्पदः । पुष्टा इति पाठे त्रिगर्तानां विशेषणम् ॥

गोपानसेन गोपानामित्यत्र गोपानसेन गोपानां आनसेन अनस्सम्बन्धिना नानाभारेण सहिताः ॥

वसान्नयोन्यदूष्या इत्यत्र 'हृन्मेदस्तु वपा वसा' इत्यभिधानात् वसया मत्स्यमृगादीनां हृन्मेदसा अन्नं येषां ते वसान्नाः, तथापि योनितः स्वस्वजातितः अदूष्याः दूषयितुमयोग्याः, वसान्नाश्च ते योन्यदूष्याश्च वसान्नयोन्यदूष्याः। यद्वा वसान्ना म्लेच्छविशेषाः, योन्यदूष्याः स्त्रीराज्याधिपतयः । त्रिगर्ताः त्रिगर्तदेशस्थाः ॥

त्रैखर्वो रथमुख्यांश्चेत्यत्र त्रैखर्वः त्रिखर्वविषयाधिपती राजा ॥

यश्च स इत्यत्र यः शङ्खः कुणिन्देन राज्ञा दत्तः स राज्ञः शङ्खः द्विजमुख्येन केनचिद्ब्राह्मणेन धर्मराजाय निवेदितः ॥

द्विजमुख्याय शङ्खदात्रे ब्राह्मणाय ॥

काश्मीरराजो मा(ध्वी)द्वीकमित्यत्र 'शुण्डापानं मदस्थानम्' इत्यभिधानात् शुण्डापानयोग्यत्वान्मदकरत्वाद्वा शुण्डनामकं मधु मधुरं मा(ध्वी)द्वीकं मद्यम् ॥

प्रवालं च परं गतमित्यत्र परं पेपणादिना उत्तमस्वभावं गतं प्राप्तम् ॥

---

[1]त्रिंशत.

दार्दुरं चन्दनमित्यत्र दार्दुरं दर्दुरेण क्रूरेण ग्रन्थिकोटरादिना सहितम् ॥

इन्द्रवृष्टैरित्यत्र इन्द्रवृष्टयुद्भवैः, नाद्यमुखैः नदीभवानि नाद्यानि, मुख-पदेन तटाकजानि गृह्यन्ते ॥

अश्मसारमयं भाण्डमित्यत्र 'गिरिसारमश्मसारं लोहं कालायसं तथा शस्त्रम्' इत्यभिधानात् अश्मसारमयं लोहमयम् ॥

शुभ्रदन्ततनूनस इत्यत्र शुभ्राः दन्ताः तनूः शरीरं नाः नासिका च येषां तान् शुभ्रदन्ततनूनसः गजानित्यर्थः ॥

एकपादांश्चेत्यत्र एकस्मिन् सूक्ष्मपात्रे पादाः पादचतुष्टयं येषां ते एक-पादास्तान् शिक्षितानिति भावः ॥

एकपादकाः एकपादाख्यदेशस्थाः ॥

गोशीर्षकमित्यत्र 'तैलप(र्णा)र्णिकगोशीर्षहरिचन्दनमस्त्रियाम्' इत्यभि-धानात् श्रेष्ठचन्दनेष्ववान्तरविशेषः ॥

कालेयकं च रूप्यं चेत्यत्र कालेयकं ज्वालामुख्याख्यकालीदेशः काश्मीरदेशः, तत्र भवं कालेयकं कुङ्कुमम् । दन्ताः गजदन्ताः । जातिफलं जाजिफलं जायिकायीत्यपभ्रंशभाषा ॥

तक्कोलकांश्चेत्यत्र[1] 'तक्कोलकं कोशफलम्' इत्यभिधानात् तक्कोलकं कोश-फलसंज्ञितं परिमलद्रव्यम् ॥

चीनान् हूणानित्यत्र अन्तरवासिनः समुद्रद्वीपवासिनः चीनान् हूणान् चीनहूणादिजातिविशेषवतो म्लेच्छविशेषान् । हारिपुरिति तेषामधिपतिः कश्चित् ॥

उष्णीषकं करमित्यत्र किट्टजं 'गोदं किट्टं मलोऽस्त्रियाम्' इत्यभि-धानात् लोहमलेन कृतं, पट्टजं पट्टतन्तूद्भवं, प्रमाणेन तत्तच्छिरसामपेक्षितप्रमा-णेन रागस्पर्शेन च आढ्यं, बाह्लिदेशे चीनदेशे च समुद्भवं उष्णीषकं शिरोवेष्टन-मेव करमुपायनं, उपलक्षणं चैतत् । तत्कृतकञ्चुकप्रावरणादिकं करमुपायनं प्रशं-सन् चीनहूणादिजातिविशेषांश्च प्रकर्षेण धर्मराजाय शंसन् सः हारिपुः द्वार-

[1]तत्कोलकांश्चेत्यत्र (कक्कोलकांश्चेत्यत्र).

पालैः द्वारं अलभ्यत प्राप्यत । अन्तः प्रवेशित इत्यर्थः ॥

खर्वटादयोपि जातिविशेषाः ॥

किट्टीकृतं किट्टवत्पिण्डाकारेण कृतं सुवर्णम् ॥

वैयाघ्रं व्याघ्रचर्म ॥

जतुचेलानित्यत्र लाक्षारसेन रक्तवर्णचेलान् ॥

इति सभापर्वणि सप्ताशीतितमोऽध्यायः ।

---

## ॥ अष्टाशीतितमोऽध्यायः ॥

कौशिकं चैवेत्यत्र 'पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम्' इत्यभिधानात् पत्रोर्णं धौतकौशेयम् ॥

अभितः कम्बुकिङ्करानित्यत्र अभितः कम्बुधराः किङ्करा येषां तान् ॥

तुम्बुरुस्तु मुदाऽऽदत्तेत्यत्र आदत्त दत्तवान् ॥

अश्वेनेव युगं नद्धमित्यत्र अश्वेन विपरीतं यथा भवति तथा नद्धं बद्धं युगमिव मम च धर्मराजस्य च त्वया दत्ता पदवी विपरीता दृश्यत इति दृष्टान्तानुसाराद्दार्ष्टान्तिकमप्युन्नेयम् ॥

उच्चावचान् महान् मह्यामित्यत्र मह्यां राजभिः प्रेपितान् बहून् उच्चावचान् महान् 'मह उद्धव उत्सव' इत्यभिधानात् उत्सवान् ॥

भुक्ताभुक्तकृतं नैवेत्यत्र आ कुब्जवामनान् कुब्जः पादयोरेव ह्रस्वः, वामनः सर्वाङ्गेष्वपि ह्रस्वः तान् मर्यादीकृत्य सर्वं प्राणिजातं, (भुक्ताभुक्तकृतं) भावप्रधानो निर्देशः । भुक्ततया अभुक्ततया च कृतं नैव, सर्वे च भुक्ततयैव कृता इति भावः । अभुक्ता न विद्यते भुक्तं भोजनं यस्याः सा याज्ञसेनी द्रौपदी प्रति प्रति अवैक्षत् दृष्टवती । स्वभोजनात्पूर्वं भोजनरहितः कोऽपि नास्ति खल्विति प्रत्येकं विचारितवतीति भावः ॥

इति सभापर्वणि अष्टाशीतितमोऽध्यायः ।

---

## ॥ एकोननवतितमोऽध्यायः ॥

चेकितान उपासङ्गमित्यत्र 'तूणोपासङ्गतूणीरनिषङ्गा' इत्यभिधानात् उपासङ्गं तूणीरं, 'त्सरुः खङ्गादिमुष्टौ स्यात्' इत्यभिधानात् त्सरुः खङ्गमुष्टिः सन् त्सरुः मुष्टिग्रहणप्रदेशो यस्य तं, दधिदुग्धादिपात्रस्थापनार्थं कृतो रज्जुविशेषः शिक्या शिक्यानां समूहः शैक्यम् ॥

कलशोदधिः क्षीरसमुद्रः ॥

पराक्षमाण इत्यत्र परा सम्यक्, क्षाम्यत इति क्षमाणः स न भवतीत्यक्षमाणः असहमान इत्यर्थः ॥

इति सभापर्वणि एकोननवतितमोऽध्यायः ।

---

## ॥ नवतितमोऽध्यायः ॥

व्युप्तं नश्चेत्यत्र नः अस्माभिः व्युप्तं विशेषेण उप्तं बीजवत् इन्द्रप्रस्थे स्थापितम् ॥

अनुमेहीमित्यत्र 'मिह सेचन' इति धातोः सकलेष्टसिञ्चनवतीं कुरु ॥

निर्वर्तिष्वित्यत्र निर्वर्तिषु नितरां वर्तमानेषु । यतः 'यती प्रयत्न' इति धातोः प्रयत्नवान् ॥

इति सभापर्वणि नवतितमोऽध्यायः ।

---

## ॥ एकनवतितमोऽध्यायः ॥

सर्पो बिलशयानिवेत्यत्र बिले शेरत इति बिलशयाः मूषिकाः ॥

कुलं राष्ट्रं विनाशितेत्यत्र विनाशिता विनाशयिता ॥

केवलं तेन चात्मानमित्यत्र तेन नाशेन सः नष्टः द्विजः राजा वा आत्मानं वंशं भृत्यं सबन्धुकं राष्ट्रं च नाशयतीति योग्यक्रियाध्याहारेण योजना ॥

जन्मवृद्धिमिवार्याणामित्यत्र आर्याणां जन्मवृद्धिं जन्मना वृद्धिं सत्कुलप्रसूतत्वमिव ॥

अनावृत्तस्येत्यत्र न विद्यते आवृत्तं आवर्तनं युधिष्ठिरश्रियः आकर्षणं यस्य स तथोक्तः ॥

इति सभापर्वणि एकनवतितमोऽध्यायः ।

---

## ॥ द्विनवतितमोऽध्यायः ॥

अक्षतः अक्षेपु विद्वान् इति सम्बन्धः । 'पणोऽक्षेपु ग्लह' इत्यभिधानात् ग्लहः पणबन्धनम् ॥

जयश्च धर्मतपन इत्यत्र जयः युद्धेन शत्रूणां जयः धर्मतपनः धर्मं अहिंसाख्यधर्मं तापयति नाशयतीति स तथोक्तः; तथैव तद्वदेव धर्मश्च जयतपनः, तस्मात्कारणाद्विरोधिनौ तावुभौ धर्मजयौ, विनयतः विनयेन प्रवर्तनात् जेता भवेत् । विनयेन अक्षशीलायां कृतायां तत्सम्पदाहरणाख्यजयोऽपि भविप्यति, तेपां हिंसा च न भविप्यतीति भावः ॥

भयं परिहरन् मत्त इत्यत्र मत्त इत्यस्माच्छब्दात् तसिलन्तपञ्चमी, मदाख्यनिमित्तात् भयं लोकापवादभयं परिहरन्—दुर्योधन एव दुष्टः धृतराष्ट्रः किं करिप्यतीति बहिष्कुर्वन् आत्मानं विनयेन परिरक्षन् अत एव वर्पासु क्लिन्नवटवत् तिष्ठन् भवान् नावसीदति । यथा वटः निदाघसमये आपाततः जलासेकरहित इव तिष्ठति, मूलेन जलं पिबति च, तथैवेति भावः ॥

वैरं विकोशे सृजतीत्यत्र विकोशं विगतकोशस्यधनम् ॥

दुरोदरं पाण्डवैरित्यत्र दुरोदरं द्यूतं कुलस्य कारयस्व ॥

तदवैतदित्यत्र हे अयशस्येति दुर्योधनं प्रति सम्बुद्धिः ॥

इति सभापर्वणि द्विनवतितमोऽध्यायः ।

---

## ॥ त्रिनवतितमोऽध्यायः ॥

राजा तु देवीत्यत्र देवो देवनम् । 'धूर्तोऽक्षदेवी कितव' इत्यमरः ॥

द्रौपदीमादिं कृत्वेत्यत्र आदिर्यथा भवति तथा आदि ॥

ब्राह्मणेभ्यो धनमित्यत्र गम्यर्थं गमिनः गन्तुः स्वस्य अर्थं प्रयोजनार्थम् ॥

कालस्य समयेनेत्यत्र कालनामकपरमात्मनः समयेन सङ्कल्पेन ॥

समियाय च धर्मात्मेत्यत्र सं सङ्गमं इयाय ॥

इति सभापर्वणि त्रिनवतितमोऽध्यायः ।

---

## ॥ चतुर्नवतितमोऽध्यायः ॥

अक्षग्रह इत्यत्र सः अक्षग्रहः अक्षेषु क्रियमाणः पणः अभिभवेत् पराभवं प्रापयेत् । तेनैव पराभवाख्यकारणेनैव कालः विहारकालः भवति । इदं पराभवप्रापणं आत्थ 'अमार्गेण नोऽजैपीरि' ति वदताऽमार्गेण जयस्य त्वयैवोक्तत्वादिति भावः । पाणं पणं कुरुष्वेति क्रियावृत्त्या योजना ॥

इमानि शोकद्वाराणीत्यत्र यः मायया कितवैः सह इदं पापं देवनं सदा सञ्चरते, सः इमानि शोकद्वाराणि वित्तव्ययपापादीनि सञ्चरते सम्यगाचरति । युद्धधर्मेण जयस्तु जय एव । तत्तस्मात्कारणात् तत् युद्धमेव परं उत्तमम् । भाषाभिः म्लेच्छादिभाषाभिः नेच्छन्ति व्यवहर्तुं नेच्छन्ति । शिक्षितुं दुर्जनान् शिक्षितुम् । तत् विद्वान् त्वं माऽतिदेवीः अति धर्ममतिक्रम्य मा देवीः मा जैपीश्च । निकृतेः कापट्यात् कृतेन एतेन देवनेन तव वित्तं अस्य दुर्योधनस्य अद्य युज्यते किमिति योजना ॥

अश्रोत्रियः श्रुतितत्त्वमजानानः सुतः पुत्रः तं यः श्रोत्रियः निकृत्या अभ्येति, यो विद्वान् अविदुषः निकृत्या अभ्येति, तामेव निकृतिमाहुः । अन्यैः सह निकृतिः न दोषायेति भावः ॥

इति सभापर्वणि चतुर्नवतितमोऽध्यायः ।

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

इमे निष्कसहस्रस्येत्यत्र भरितमयुतं यथा भवति तथा निष्कसहस्रस्य कु(म्भि)ण्डिनः निष्कसहस्रक्रयार्हकुम्भवन्तः इमे अर्थाः । अयुतायुतद्रव्यपरिपूर्णबहुसंख्याकसौवर्णकुम्भान्तस्थापितार्था इति यावत् ॥

वहन्ति नैपा मुच्येतेत्यत्र एते हयाः यदा भूमिं रणभूमिं पदा उपास्पृशन्, तदा एषा भूमिः पदात् न मुच्येत । रणभूमिं परित्यज्य पलायनं न कुर्वन्तीति भावः ॥

हेमकक्ष्या इत्यत्र हेमकक्ष्याः सुवर्णोदरबन्धनोपेताः, कृतापीडाः कृतशिरोलङ्काराः, 'इभस्तम्बेरमः पद्मी' इत्यभिधानात् पद्मिनो गजाः इष्टाः करेणवो येषां ते तथोक्ताः ॥

कम्बुकेयूरेत्यत्र कम्बुः कम्बुकः ॥

प्रदक्षिणानुलोमा इत्यत्र प्रदक्षिणानुलोमाः प्रकृष्टानि दक्षिणानि दक्षिणावर्तान्यनुकूललोमान्येषां ते, लक्षणवन्त इत्यर्थः ॥

हेमभाण्डाः सुवर्णोपकरणानि ॥

एकैकः रथी सहस्रपरमां सहस्रादुपरितनां भृतिं भरणाय कल्पितद्रव्यम् ॥

एवं वर्णस्य वर्णस्येत्यत्र क्षत्रवैश्यादिवर्णस्य समुच्चयसहस्रशः समुच्चयस्य समुदायस्य सहस्रशः सहस्राणि ॥

इति सभापर्वणि पंचनवतितमोऽध्यायः ।

---

॥ षण्णवतितमोऽध्यायः ॥

मधु वै माध्विक इत्यत्र माध्विको मद्यकर्ता ॥

मधुवत् मधुकर्तृवत् ॥

स्वे परे वेत्यत्र स्वे स्वकीये दुर्योधने, परे धर्मराजे वा असमञ्जसं अन्याय्यम् ॥

सदोपसृप्तः वक्रीभूतः ॥

आयतिं च ददत्त्वं चेत्यत्र ददतो भावः ददत्त्वम् ॥

तथात्वकामः पाण्डूनामित्यत्र अकामः परवित्तेषु कामरहितः ॥

इति सभापर्वणि विदुरवचनं नाम षण्णवतितमोऽध्यायः ।

## ॥ सप्तनवतितमोऽध्यायः ॥

ज्ञाताः प्रिया इत्यत्र भैमसेनाः भयङ्करसेनासहिताः, 'का(म्भो)म्बोजा वाह्लिका हया' इत्यभिधानात् सवाह्लिकाः सहतुरगाः

नावं समुद्र इवेत्यत्र बालः बालक एव नेता यस्याः ताम् ॥

ग्लहते पणं बध्नाति ॥

आकर्षते वाक्यबलप्रणीत इत्यत्र युधिष्ठिरेण वाक्यबलात् प्रणीतः कृतः हृदि प्रौढः प्रौढियुक्तः मन्त्रपदः भविष्यत्कार्याणामालोचनस्य स्थानभूतः सुधन्वा सुष्ठु तव पुत्रस्य धनवान् सकलः समाधिः तूष्णीं स्थितिः तव चित्तमाकर्षते अङ्गीकारयति । ते सुचिरं सुखप्रदोऽस्तु । कञ्चित्कालं अनेन द्रव्येण सुखी भव । पश्चाद्भाविकार्यं त्वमेवानुभविष्यसीति भावः ॥

तदानीं उपरि तुमुले युद्धे ॥

किञ्चिद्वः स्यादित्यत्र वः यद्वसु किञ्चित् स्यात् पाण्डवागमनकालेऽपि स्यात्, तद्वसु पार्थान्विन्देतेति योजना ॥

इति सभापर्वणि सप्तनवतितमोऽध्यायः ।

---

## ॥ अष्टनवतितमोऽध्यायः ॥

जिह्वा मनो हृदयमित्यत्र (निर्णिनक्ति) 'निजिर् शौचपृथग्भावयोः' इति धातोः तव जिह्वा मनः हृदयं च पृथग्भावं प्राप्नोति । 'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यदि'ति वाक्यार्थमनुकरोषीति भावः। ज्यायः अतिशयितं तव मनसः प्रातिकूल्यं निरीहं निष्फलं इति योजना ॥

तेनानुशिष्ट इत्यत्र 'प्रवणः क्रमनिम्नोर्व्याम्' इत्यभिधानात् क्रमेण निम्नभूप्रदेशात् अम्भ इवेत्यर्थः ॥

यो बलादित्यत्र बलात् भृत्यबलतः विचार्य तस्य राज्ञः ॥

तस्माच्च न स विन्देतेत्यत्र तस्माद्धटात् सः राजा शिष्टं अवशिष्टं कञ्चन पुरुषार्थम् ॥

परिप्लुतानि परितः प्लवन्ति चञ्चलानीत्यर्थः ॥

न रोचे सेवां न रोचे ॥

अनुप्रियं चेदित्यत्र हिताहितेषु कार्येषु अनुप्रियं अनुकूलतया प्रियं हितेऽप्यनुकूलमहितेऽप्यनुकूलमित्यर्थः ॥

नाप्रियः साध्वित्यत्र अप्रियः यस्य यस्मिन् प्रीतिर्नास्ति सः अप्रियः ॥

आशीविषानित्यत्र अशीविषान् सर्पान्, नेत्रविषान् नेत्रयोः कोपाख्य-विषं येषां तान् शूरपुरुषांश्च न कोपयेत् ॥

इति सभापर्वणि अष्टनवतितमोऽध्यायः ।

## ॥ एकोनशततमोऽध्यायः ॥

व्याकारं नाभ्यरक्षतेत्यत्र व्याकारं विरुद्धाकारम् ॥

इति सभापर्वणि एकोनशततमोऽध्यायः ।

## ॥ शततमोऽध्यायः ॥

दुर्विभाव्यमित्यत्र देवमिति शेषः ॥

नारुन्तुदः स्यादित्यत्र 'अरुन्तुदं तु मर्मस्पृक्' इत्यभिधानात् अरुन्तुदो मर्मस्पर्शी ॥

अजो हि शस्त्रमित्यत्र अजः परमात्मा ॥

भषन्ति ये वै श्वनराः सदैवेत्यत्र ये पापं ईर्ष्यं सदैव भषन्ति, ते श्वनराः श्वानश्च ते नराश्चेति नराकाराः श्वान इत्यर्थः ॥

तम(भ्ये)त्येतार इत्यत्र तं द्वारसमूहं अ(भ्ये)त्येतारः अतिक्रम्य गन्तारः बहवः कुरवः सन्ति । तेषां कुरूणां सर्वहरः सर्वान् हरतीति सर्वहरः सुदारुणः विनाशः अनेन दुर्योधनेन सम्पादित इति योग्यक्रियया सम्बन्धः ॥

इति सभापर्वणि शततमोऽध्यायः ।

## ॥ एकाधिकशततमोऽध्यायः ॥

प्रातिकामः प्रातिकामीति दुर्योधनसूतस्य नाम ॥

मूढो राजेत्यत्र कैतवं कितवस्य दुर्योधनस्य योग्यं कैतवं अन्यत्किञ्चिद्वस्तु न स्यात्किं, अहो ॥

कस्यस्विदित्यत्र कस्यस्वित् कस्य कार्यस्य अर्थे ॥

एवं द्यूत इत्यत्र उभौ धीरवालावपि स्पर्शौ स्पृश्येते इति स्पर्शौ अक्षौ स्पृशतः ॥

निपुणोपलक्ष्य इत्यत्र निपुणैरुपलक्ष्यः निपुणोपलक्ष्यः ॥

कुरुते स्म पूजामित्यत्र पूजां धर्मस्य पूजाम् ॥

कटाक्षपत्रैरित्यत्र कटाक्षाख्यसन्देशपत्रैरित्यर्थः ॥

अस्वोऽप्यशक्त इत्यत्र अस्वः द्रव्यरहितो दरिद्रः गतसकलद्रव्यो वा ॥

आहूय राजेत्यत्र नातिकृतप्रयत्नं धर्मराजमाहूय कुशलैः कपटद्यूतकुशलैः एतैः सह कस्मान्निकृष्टकामः एतादृशनीचकार्ये कृतमनाः कस्मादासीदिति सम्बन्धः ॥

स शुद्धकाम इत्यत्र सः धर्मराजः पश्चात्तत्कैतवं अभ्युपेतः ज्ञातवान् ॥

यच्छलेनानुविद्धमित्यत्र च्छलेन अन्तःकपटेन ॥

इति सभापर्वणि एकाधिकशततमोऽध्यायः ।

---

## ॥ द्व्यधिकशततमोऽध्यायः ॥

भवन्ति वेश्या वर्धक्य इत्यत्र स्वगृह एव निवेशनयोग्या दास्यो वेश्याः । बहूनां पुरुषाणां स्वयोनिं विक्रीय स्वप्रभोर्धनं वर्धयन्त्यो वाराङ्गना वर्धक्यः ॥

न सकामा इत्यत्र समानकामाः सकामाः । धर्मराजं पराभावयितुं शत्रवः कामयन्ते, त्वमपि तद्वन्न कामयेति भावः ॥

एवमस्मिन् कृत इत्यत्र एवं दृश्यमानप्रकारेण कृते धर्मराजेन कृते सति अस्मिन् धर्मराजे विद्यां धर्मबुद्धिं यदि भवानाह स्म, तर्हि तव च तस्य च

सहितौ बाहू अग्नौ प्रक्षिपेयमिति सम्बन्धः ॥

अरणीप्रज इत्यत्र प्रकर्षेण जातः प्रजः ॥

तृणानि पशव इत्यत्र तृणानि स्वास्तरणतृणानि ॥

स वै विवदनादित्यत्र विवदनात् विरुद्धस्य कथनात् ॥

यदि वै वक्ष्यसीत्यत्र न वक्ष्यसि सत्यं न वक्ष्यसि ॥

साक्षी च विब्रुवन्नित्यत्र साक्ष्यं साक्षिसम्बन्धिवचनं विब्रुवन् विपरीततया वदन् ॥

गोकर्णशिथिलं चरन्नित्यत्र गोकर्णशिथिलं गौः आर्तानां प्रश्नवाक् कर्णात् श्रोत्रात् शिथिला विस्रंसिता यथा भवति तथा चरन् आचरन्, औद्धत्यात्तत्प्रश्नवाक्यमेवाशृण्वन्नित्यर्थः । यद्वा गोकर्णशिथिलं गोः प्रष्टुर्वचनस्य कर्णः कर्णनमाकर्णनं तस्मिन् जातेऽपि शिथिलः प्रत्युत्तराच्छिथिलो भ्रंशितो यथा भवति तथा चरन् आचरन्, प्रष्टुः प्रत्युत्तरमवदन्नित्यर्थः । 'यो हि प्रश्नं न विब्रूयाद्वितथं वाऽपि निर्दिशेदि'ति प्रागपि अवचनविपरीतवचनयोरुक्तत्वादत्राप्ययमेवार्थः ॥

न चास्य शल्यमित्यत्र अस्य धर्मस्य । विद्धाः पापविद्धाः ॥

एनो गच्छतीत्यत्र कर्तारं निन्दार्हंप्राचीनपापकर्तारं निन्द्यं एनः निन्दकानां श्रेष्ठादीनां एनः पापम् ॥

स्वार्थाद्भ्रष्टस्येत्यत्र स्वार्थात् स्वारब्धप्रयोजनात् ॥

अध्यूढाः अधिकया सपत्न्या सह ऊढाः ॥

समक्षं दर्शनादित्यत्र इति समक्षं दर्शनं यथा, तथा श्रवणात्, धारणात् पत्रशिलादिषु शासनरूपेण धारणात् ॥

मन्यध्वं तत्रेत्यत्र तत्र कृष्णायाः प्रश्ने ॥

इति सभापर्वणि द्व्यधिकशततमोऽध्यायः ।

---

## ।। त्र्यधिकशततमोऽध्यायः ।।

पुरस्तात्करणीयमित्यत्र कार्यं दुश्शासनहस्तच्छेदाख्यकार्यम् । विह्वला कृताऽसीति सम्बन्धः ।।

यत् यस्मात् इदं द्यूतम् ।।

धर्मं स्त्रियः सभां पूर्णामित्यत्र 'स्याद्धर्ममस्त्रियाम्' इत्यभिधानात् धर्ममिति नपुंसकम् । नयन्तीति नञः सम्बन्धः ।।

पार्थिवानां सभामिमामित्यत्र कथं नीतेति योग्यक्रियया सम्बन्धः ।।

कार्यस्यास्य च गौरवादित्यत्र अस्य भविष्यतः भूभारहरणाख्यस्य ।।

कुले जाता इत्यत्र भृशं व्यसनाभ्यागता एते धर्मान्मार्गान्न च्यवन्ते । 'वधूर्जाया स्नुषा' इत्यभिधानात् त्वं नः अस्माकं सर्वेषां वधूः स्नुषा यथा तथा भवसीति योजना ।।

इति सभापर्वणि त्र्यधिकशततमोऽध्यायः ।

---

## ।। चतुरधिकशततमोऽध्यायः ।।

अनीश्वरमित्यत्र राज्यस्य ईश्वरो न भवतीत्यनीश्वरः तम् ।।

साचीकृतानना इत्यत्र साचीकृताननाः तिर्यक्कृतवदनाः ।।

न हि मुच्येत सञ्जीवन्नित्यत्र पाञ्चाल्याः इमान् मूर्धजान् उपस्पृशन् अयं दुश्शासनः मे पदा पादेन भूमिमुपस्पृशन् पादघातेन भूमौ निपातित इत्यर्थः । जीवन्न मुच्यते हि । सत्यधर्मान् परामृश्य मुच्येत ।।

एवमुक्त्वेत्यत्र विस्फुरन्तं ओष्ठविस्फुरणं कुर्वन्तम् ।।

इति सभापर्वणि चतुरधिकशततमोऽध्यायः ।

---

## ।। पञ्चाधिकशततमोऽध्यायः ।।

त्रयः किलेम इत्यत्र न विद्यते धनं येषां ते अधनाः गृहस्थितसर्वधनेषु स्वातन्त्र्यरहिता इत्यर्थः । त्वं दासपत्नी दासस्य धर्मराजस्य पत्नी । अस्य

धर्मराजस्य धनं च एतद्गृहस्थितधनानां मध्ये त्वमप्येकं धनम् । अस्यैव जीवद्धनमित्यर्थः । अत एव हीनेश्वरा त्वं दुर्योधनस्य दासी दासधनं च अभूः । सेवाकर्मण्यौचित्याद्दासीत्वम् । साक्षादेव उपभोगानर्हत्वाद्धनत्वं दासद्वारैवेति सूचनाय दासधनमित्युक्तम् ॥

प्रविश्य चान्तः परिचारैरित्यत्र अन्तर्वेश्मेति सम्बन्धः । परिचारैः सहेति योग्यपदाध्याहारः ॥

नित्यं दास्य इत्यत्र विहिता वृत्तिः ॥

दासीभूतेत्यत्र भवतीति योग्यपदाध्याहारः ॥

परं भयं पश्यतीत्यत्र पश्यति दुर्योधनः ॥

इदं धर्ममित्यत्र अजानतेति लङात्मनेपदे प्रथमपुरुषबहुवचनम् । ज्ञातवन्त इत्यर्थः । दुर्दृष्टे दुःखेन दृष्टे अन्यबलात्कारेणापि दृष्ट इत्यर्थः ॥

इमां च पूर्वमित्यत्र इमां द्यूतलीलां कितवः दुर्योधनः यस्मादग्रहीष्यत् तस्माद्दोषोऽप्यभविष्यत् । अत एव अपराजितात्मा न पराजित आत्मा मनो येन स तथोक्तः जितमनस्को नेत्यर्थः ॥

गान्धारपुत्रस्येत्यत्र हे कुरव इति सम्बोधनम् ॥

युधिष्ठिरश्चेदित्यत्र विवदति विशेषेण वदति ॥

यदुच्यते पापमतिः कृतघ्न इत्यत्र धिक्कृतः सद्भिर्धिक्कृतः सूनुर्यस्य तेन राज्ञा तराधृष्ट्रेण सहैव पापमतिः सुयोधनः त्वया उच्यमानं महत् वाक्यं आक्रन्दनरूपवचनं यदि न श्रोष्यते, तर्हि तेन यदुच्यते तदेव वाक्यं प्रियार्थे दुर्योधनप्रियार्थं कुर्विति योजना ॥

मा क्लिश्यतामित्यत्र तथा सतीति योग्यपदाध्याहारः ॥

तस्मात्तद्वाऽप्यधर्मिष्ठेत्यत्र 'वा विकल्पोपमानयोः' इत्यभिधानात् तद्वा तत् ऊल्दर्शनमिव मृत्युर्भविष्यति । मृत्योर्दर्शनमपि तव भविष्यतीत्यर्थः ॥

क्षुद्रकर्मन् दुर्योधन! ॥

एष वै दासपुत्रेतीत्यत्र एषः दुर्योधनः ते कुमारकाश्च दासपुत्रेति मा ब्रूयुरिति सम्बन्धः ॥

पापीयांस इमे भूत्वेत्यत्र पापो दुर्योधनः तस्य इमे पापिनः अतिशयेन पापिनः पापीयांसः, सम्यग्दुर्योधनदासतां प्राप्ता इत्यर्थः ॥

इति सभापर्वणि पंचाधिकशततमोऽध्यायः ।

## ॥ षडधिकशततमोऽध्यायः ॥

दाराणां वर्तनमित्यत्र दाराणां सकाशात् औपासनाग्नौ अग्निहोत्रादिसद्धर्मप्रवर्तनम् ॥

अमेध्ये वै गतप्राण इत्यत्र (द्वा)दाराख्ये तृतीयज्योतिस्साधने अमेध्ये अपवित्रे गतप्राणे मृते शून्ये सद्धर्मशून्ये जातिभिरुज्झिते जातिरहिते च जाते सति एतत् तृतीयं ज्योतिः पुरुषस्यैव देहे उपजायते । कुण्डस्थितं तज्ज्योतिः देहान्तस्समारोप्य ध्यानार्चनादिना तत्रैव सेवां कुर्यात् । न तु बहिरित्यर्थः ॥

न चैवोक्ता इत्यत्र हीनतः हीनेष्वपि जनेषु न चैवोक्ताः प्राकेनाप्यनुक्ताः, न चानुक्ताः कैश्चिदुक्ताश्च वाच्यावाच्यरूपा इत्यर्थः । परुषा गिरः निष्ठुरोक्तीः उत्तमपूरुषा न भवन्तीत्यनुत्तमपूरुषाः भारताः भरतकुलोत्पन्ना दुर्योधनादयः सदा प्रतिजल्पन्तीति योजना ॥

सन्तः प्रतीत्यत्र प्रतिविजानन्तः प्रतिकर्तुं जानन्तोऽपि सन्तः आत्मनः परमात्मनः प्रत्ययं ज्ञानम् ॥

परिघं परितो घातयतीति परिघः स्थूलस्तम्भः ॥

इति सभापर्वणि षडधिकशततमोऽध्यायः ।

## ॥ सप्ताधिकशततमोऽध्यायः ॥

यतोऽनुयुद्धित इत्यत्र 'यती प्रयत्ने' इति धातोः यतः प्रयत्नवान् ॥

नादारौ क्रमते शस्त्रमित्यत्र अदारौ दारुव्यतिरिक्ते शिलादौ शस्त्रं परशुम् ॥

यथाऽऽचरितमार्येणेत्यत्र आर्येण उत्तमपुरुषेण यथा आचरितं पूर्वमाचरितं, तथा अस्मिन् सत्समागमे त्वयाऽप्याचरितम् ॥

इति सभापर्वणि पाण्डवानामिन्द्रप्रस्थनिर्याणं नाम सप्ताधिकशततमोऽध्यायः ।

द्यूतपर्व समाप्तम् ।

---

## ॥ नवाधिकशततमोऽध्यायः ॥

### (अनुद्यूतपर्व ८)

शत्रुसाद्गमयन्नित्यत्र 'तदधीनकार्त्स्न्ययोर्वा सात्' इति वचनात् शत्रुसात् शत्र्वधीनं गमयन् प्रापयन् ॥

पुरा युद्धात्पुरा, उपायैरित्यर्थः । हितं यथा भवति तथा कुर्वन्तीति योजना ॥

परिहास्यति 'ओहाक् त्याग' इति धातोर्लृट् । नङ्क्ष्यतीत्यर्थः ॥

विवर्त्य विशेषेण वर्तयित्वा अलङ्कृत्येत्यर्थः । विभज्येति पाठे भुजद्वये विभक्तौ कृत्वेत्यर्थः ॥

अज्ञातसात्पुनर्द्यूतमित्यत्र तथा पूर्वोक्तप्रकारेण एकं वर्षं अज्ञातसात् सर्वे अज्ञाता भूत्वा निवसेम । अतः पुनर्द्यूतं प्रवर्ततामिति योजना ॥

त्वन्नेत्रा इत्यत्र त्वन्नेत्राः त्वमेव नेता प्रेरको येषां ते तथोक्ताः जीर्णाः नष्टाः ते पुत्राः त्वां मा प्रहासिषुः । 'ओहाक् त्याग' इति धातोः लुङि बहुवचनम् । मा त्यजन्त्वित्यर्थः ॥

प्रध्वंसिनीत्यत्र क्रूरसमाश्रिता क्रूरेषु मर्त्येषु समाश्रिता श्रीः सम्पत् प्रध्वंसिनी तस्यैव नाशकरी । मृदुप्रौढा मृदुभिः शान्तैः प्रकर्षेण ऊढा अङ्गीकृता श्रीः सम्पत् पुत्रपौत्रपर्यन्तं स्थिरीभवतीत्यर्थः ॥

इति सभापर्वणि नवाधिकशततमोऽध्यायः ।

---

## ॥ दशाधिकशततमोऽध्यायः ॥

ततो व्यध्वगतमित्यत्र विशेषेणाध्वगतं व्यध्वगतं बहुदूरगतमित्यर्थः ॥

अहो धिग्बान्धवानित्यत्र महद्भयं यथा भवति तथा एतान् पाण्डवान् बुद्ध्या कुबुद्ध्या बोधयन्ति धिक् । भरतर्षभा वयं च बुध्यन्ते कुबुद्धेरवसाने अबुध्यन्त तैरज्ञायन्त । वयं सर्वे एतेषां दुर्जनानां दृष्टिगोचरा जाताः । न तु पूर्वमिति भावः । यद्वा एतद्दुर्वाक्यफलं एते दुर्योधनादयः प्राक् अवबुध्यन्त अजानन्, अन्वभवन्नित्यर्थः । उपरि बुध्यन्ते अनुभविष्यन्ति । भरतर्षभा वयं च बुध्यामहे परिपाकसमये द्रक्ष्याम इत्यर्थः ॥

एष वै ग्लह एवैक इत्यत्र एषः गजाश्वादीनां त्याग एको ग्लहः । एकः वनवासाय गमनम् । एकेन सर्वक्षयेण एकेन वनवासाय गमनेन चेति पणद्वयेन दीव्यावेति पूर्वेणान्वयः ॥

भीष्मद्रोणौ वार्यमाण इत्यत्र यौ भीष्मद्रोणौ ताभ्यां वार्यमाणः ॥

वार्यतेऽतीव सततमित्यत्र पूर्वोक्तैर्विदुरादिभिः धर्मराजः अतीव वार्यते। हितकाम्यया एवं संवार्यमाणोऽपि कौन्तेयो राजा देवकार्यार्थसिद्ध्यर्थं न नियच्छति द्यूतगतं मनो न नियमयति । वनवासाय दीव्यते शकुनये तत् वनवासाय गमनमेव पार्थः प्रतिजग्राह । तदा शकुनिः ग्लहं ग्लह्यते अनेनेति ग्लहमक्षं जग्राह ॥

इति सभापर्वणि दशाधिकशततमोऽध्यायः ।

---

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

धार्तराष्ट्रान् प्रहासिषुरित्यत्र 'हसे हसन्' इति धातोः प्रकर्षेण हासिषुः (अ)प्रहासिषुः अहसन्नित्यर्थः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्रात् अडागमाभावः ॥

पण्डतिलाः स्नेहरहिततिलाः ॥

---

[1]हसन् हसने.

स चाकार्षीद्दुष्कृतमित्यत्र दुष्कृतं कर्तुमयोग्यं अकार्यमित्यर्थः। याज्ञसेन्याः पतयः क्लीवा इति ते येषां द्रौपदी दत्ता त इमे जना हसन्ति ॥

अजिनानितोपितानित्यत्र उपितान् देशान्तरं गतान् भिक्षुकानिव अजिनान् 'अर्श आदिभ्योऽच्' इति वचनात् अजिनं रौरवाजिनं, तद्वत इत्यर्थः ॥

यथा काकयवा इत्यत्र काकयवाः काकभाजनीभूतयवाः, यवाकारतृणविशेषा वा ॥

गौर्गौरिति स्माह्वयन्नित्यत्र गौः गोरूपपशुः । गोपालैः क्रियमाणशब्दविशेषो वा गौः ॥

मा ह स्म सुकृतां लोकानित्यत्र सुष्ठु कुर्वन्तीति सुकृतः पुण्यकृतः तेषाम् ॥

ततः स राजेत्यत्र भीमसेनस्य रोषात् रोषं दृष्टान्तीकृत्य सरोषात् तद्रोषसमानरोषं स्वयमप्यनुकृत्य पाण्डवानां निर्गच्छतां सताम् ॥

यन्नो वृद्धमित्यत्र वृद्धं वृद्धिस्थम् ॥

अस्य निरस्य ॥

गृहेषु स्वान् सुखिनः मत्वा ॥

न वै वाच्यमित्यत्र सतां सज्जनानां व्यवसितं स्वमनसि निर्णीतं प्रमेयं वाच्यं न वै। किन्तु स्वयमेव विज्ञायतां फलकाले दृश्यताम् ॥

असूनृतानां वक्तारमित्यत्र 'अश्लीलं सूनृतं प्रिये' इत्यभिधानात् असूनृतानां न विद्यते सूनृतं येषां ते तथोक्ताः । संहृष्टानां दुरात्मनां वक्तारं कुमार्गवक्तारम् ॥

अक्षाणि मूढेत्यत्र ते तव एतान्यक्षाणि अक्षाणि न । किन्तु समरे त्वया वृताः एते मया प्रयुक्ता बाणा एव अक्षाणीति योजना ॥

द्रौपद्याः पदवीं चरन्नित्यत्र द्रौपद्याः पदवीं केशाभिमर्शकरस्पर्शकर्षणादिपदवीं चरन् उत्कटेऽप्याचरन् ॥

सन्तुष्टाः सम्भवत वर्तध्वम् । इह भवत्सु को वा अन्योन्यं न स्पृहयेत् स्पृहामिच्छां न कुर्यात् । सर्वेऽप्यन्योन्यमनोनुकूला इति भावः । इह भवत्सु न स्पृहयेत् इच्छां न कुर्यादिति सम्बन्धः ॥

हिमवतीत्यत्र हिमवति शतशृङ्गे पुरा बाल्ये मेरुसावर्णिना मेरुसावर्ण्याख्यमनुना । असितस्य असिताख्यमहर्षेः सकाशादपि ॥

महर्षिः साम्पराय इत्यत्र 'साम्परायस्तु सङ्ग्राम आपदागामिकाल्योः' इत्यभिधानात् साम्पराये आपदि धौम्यः ते बुद्धिं वक्ष्यतीति योग्यक्रियया सम्बन्धः ॥

आत्मप्रदान इत्यत्र सौम्ये सोमसम्बन्धिनि, आत्मप्रदाने स्वकलादानवत् स्वस्यैव दाने । आत्मजीवने प्राणिनां जीवने । सामग्र्यं समग्रस्य पूर्णस्य भावः सामग्र्यं, सदा एकप्रकारेण स्थितिः । भूतेभ्यः पृथिव्यादिपञ्चमहाभूतेभ्यः । अगदं आरोग्यम् । आपृष्टः आ समन्तात् पृष्टं प्रश्नो यस्य स तथोक्तः ॥

इति सभापर्वणि द्वादशाधिकशततमोऽध्यायः ।

---

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

सस्त्रीकाः स्त्रीभिः सहिताः बाला वृद्धाश्च ॥

उदासीना व्यलोकयन्नित्यत्र उदासीनाः उच्चस्थानेष्वासीनाः ॥

न हि रथ्यास्ततः शक्या इत्यत्र यतः ताः रथ्याः रथवीथ्यः स्वजनैर्बन्धुजनैः आकुलाः, ततः स्त्रीबालवृद्धानां गन्तुं शक्या न । तेन कारणेन ते सर्वे आरुह्य पाण्ड(वं)वान् पश्यन्ति । अन्यत् न ॥

निकृत्या नितरां कृतिः कार्यं तया उपरि बहुकार्यमस्तीत्युक्त्वा बद्धकार्मुकौ भीमार्जुनौ वारयिता इदानीं किमपि न कार्यमिति वारयिता पुरोधाश्चेति सम्बन्धः ॥

सर्वतोदकधूमानीत्यत्र 'तुद व्यथने' इति धातोः सर्वान् तुदतीति सर्वतोदको धूमो येषां तानि ॥

अनाक्रान्तं अस्माभिरनाक्रान्तम् ॥

प्रासादजालानि प्रासादगवाक्षान् ॥

गुरुधर्माभिगुप्ता गुरुः श्रेष्ठः धर्मः तेन अभिगुप्ता ॥

सुहृद्भिः सह अनुशोचतः ॥

शतशृङ्गात् गजाह्वयं नागमिप्यम् ॥

यमपुत्राऽऽधिमप्राप्येत्यत्र यमौ यमलौ नकुलसहदेवौ पुत्रौ यस्याः सा माद्री ॥

मे जीवितमेव प्रियं यस्याः सा जीवितप्रिया तस्याः भावः जीवितप्रियता तां धिक् । क्लेशभागिनीं मां च धिक् ॥

अभिसान्त्व्य अन्तर्णीतो णिच्, अभिसान्त्वय्य ॥

आर्तातुराः शनैरित्यत्र 'आतुरो भ्रमितो भ्रान्त' इत्यभिधानात् आर्ताश्च ते आतुरा भ्रान्ताश्च आर्तातुराः ॥

इति सभापर्वणि त्रयोदशाधिकशततमोऽध्यायः ।

---

## ॥ चतुर्दशाधिकशततमोऽध्यायः ॥

एवं कस्मादित्यत्र अहं ते ब्रवीमि । तन्निमित्तं ममाचक्ष्वेति योजना ॥

निकृतस्यापीत्यत्र निकृतविषयतया कृतः निकृतः तस्यापि ॥

असक्ताः शरवर्षाणीत्यत्र सम्मुक्तशराः असक्ताः अन्योन्यमसक्ताः यथा स्युस्तथा । इदं चोपलक्षणम् । असंख्याताश्चेत्यपि द्रष्टव्यम् ॥

हता पत्या इत्यत्र पत्या जात्येकवचनम् । स्वस्वपतिभिः वैधव्यं प्रापयित्वा मृतप्रायाः कृताः ॥

रजस्वलाः रणभूमौ स्वस्वपतिशवालिङ्गनेन धूलीधूसरिताङ्गयः ॥

कुरूणां कुरव इत्यत्र कुरवः प्रेतकर्मकरणशीलाः पुरोहिताः ॥

निश्शेषस्ते भविष्यतीत्यत्र ते वंशः ॥

रौद्रान्याम्यानि गायतीत्यत्र रौद्रान् भयङ्करमन्त्रान्, याम्यानि सूक्तानि ॥

प्रव्याहरन्त इत्यत्र प्रकर्षेण व्याहरन्तः स्वस्वध्वनिं कुर्वन्तः । 'व्याहा-रोर्दारणकथनादयश्च तद्भेदा' इति हलः ॥

द्रोणं दीपमित्यत्र भयान्धकारपरिहाराय दीपस्थानीयं दीपं द्रोणम् ॥

मर्त्यधर्मतयेत्यत्र अस्माकं मृत्युभूतादिति योग्यपदाध्याहारः ॥

सृष्टप्राण इत्यत्र भृशतरं सम्यक् यस्मात् सृष्टप्राणः त्वत्तः धनदानेन सृष्टः प्राणः प्राणनं जीवनं यस्य ॥

पर्ययो विपर्ययः ॥

गुरुः द्रोणः ॥

इति सभापर्वणि चतुर्दशाधिकशततमोऽध्यायः ।

---

॥ पञ्चदशाधिकशततमोऽध्यायः ॥

सानुबन्धः अनु अनन्तरं नाशानन्तरमित्यर्थः । बन्धः याम्यपाशै-र्बन्धनादिनिर्बन्धः, तेन सहितः सानुबन्धः ॥

अपनीतानीत्यत्र अपनीतानि नीतिविरुद्धानि कर्माणि ॥

कुलजां तां विभावरीमित्यत्र विभावरीं विभावः विरुद्धं भावयन् खलः रीयते नाशं प्राप्नोति यस्याः सकाशात् सा विभावरी । 'भा दीप्तौ' इति धातोः विशेषेण प्रभावती वा, तां परिहूय परितः आह्वानं कृत्वा । दुर्द्यूतदेविनः शकुनेर्द्यूते ॥

अविशेषं भवेदित्यत्र अविशेषं विशेषेण शेषरहितं कुलम् ॥

आसीन्निष्ठातप इत्यत्र नितरां स्थितः आ समन्तात् तपः तपनं यस्य स सूर्यस्तथोक्तः ॥

अन्वज्ञासिषं आज्ञामकरवम् ॥

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि कविकुलतिलक-भाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचितलक्षालंकाराख्यटीकायां पंचदशाधिकशततमोऽध्यायः ।

---

ग्रन्थाग्रं सप्तके याते व्याप्तौ चाष्टसमाख्यया । श्लोकानां द्वे सहस्रे तु पञ्चश्लोकशतानि चेत्यत्र व्याप्तौ श्लोकानां सम्पूर्तौ विचार्यमाणायां सत्यां अष्टसमाख्यया शतानामष्टसमाख्यया सह सप्तके याते सति पञ्चदशात्मकशतश्लोकेषु गतेषु सत्स्वित्यर्थः । उपरि श्लोकानां द्वे सहस्रे द्वे द्वित्वसंख्यायुक्ते यथा भवतः तथा गणितानि पञ्चश्लोकशतानि पञ्चशतद्विकं चेति यावत् । मिलित्वा 'चतुस्सहस्रं श्लोकानां पञ्चश्लोकशतानि चे'ति प्रागनुक्रमणिकाध्यायोक्तप्रकारेण पञ्चशतसहिता श्लोकानां चतुस्सहस्री ग्रन्थाग्रं 'अग्रं पुरःशिखामानश्रेष्ठादिषु फलादिषु' इत्यभिधानात् श्लोकप्रमाणं ज्ञातव्यमित्यर्थः ।

॥ इति सङ्ख्याकथ(न)कश्लोकस्यार्थः ॥

॥ सभापर्व समाप्तम् ॥

---

# अथ वनपर्व ३

## ॥ प्रथमोऽध्यायः ॥

राज्यमेव बुभूषत इत्यत्र 'भू प्राप्तावात्मनेपदी वा' इति वचनात् प्राप्तुमिच्छतीत्यर्थः ॥

ते सेव्यास्तैः समास्या हीत्यत्र समास्या समागमः । 'आस उपवेशन' इति धातोः स्वार्थे यप्रत्यये कृते तप एव तपस्येतिवत्, समसनमेव समस्येतिवच्च सहोपवेशनमेव समास्या ॥

रम्यदारुण इत्यत्र साधूनां रम्ये दैत्यानां दारुणे ब्राह्मे मुहूर्ते इत्यर्थः ॥

क्षपां सर्वामनोदयन्नित्यत्र अनोदयन् 'नुद प्रेरणे' इति धातोः गन्तुं प्रेरितवन्त इत्यर्थः ॥

इत्यारण्यके पर्वणि पाण्डववनयानं नाम प्रथमोऽध्यायः ।

---

## ॥ द्वितीयोऽध्यायः ॥

सहायविपरिभ्रंश इत्यत्र सहायभूतधनधान्यादिद्रव्याभावः ॥

न्यूनभावात्तु पश्यामीत्यत्र न्यूनभावात् द्रव्यन्यूनत्वात् वक्ष्यमाणं वः स्वयमाहृत्य भोजनं आत्मनः मम प्रत्यादेशमिव 'प्रत्यादिष्टो निरस्तः स्यात्' इति वचनात् निरसनमिव सङ्कटमिव पश्यामि ॥

न हि ज्ञाननिरुद्धेष्वित्यत्र ज्ञाननिरुद्धेषु ज्ञानं निरुद्धं यैस्तानि तथोक्तानि ॥

अष्टाङ्गां बुद्धिमाहुर्हीत्यत्र 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहाऽपोहोऽर्थविज्ञानं तत्वज्ञानं च धीगुणा' इति कामन्दीये प्रोक्तान्यष्टाङ्गानि । ग्रहणं मननं, धारणं ध्यानं, ऊहा उत्प्रेक्षा, अपोहः मिथ्याज्ञाननिरसनं, अर्थविज्ञानं अर्थानां विशेषेण ज्ञानं, तत्वज्ञानं सामान्यज्ञानमिति विवेकः । सर्वश्रेयोविघातिनीं सर्वश्रेयसां अविघातिनीम् ॥

व्यापत्सु विविधापत्सु ॥

तदाशुप्रतिकारादित्यत्र अतः कारणात् मतिमन्तो वैद्याः विदाख्य-वैद्याः तस्य दुःखस्य आशुप्रतिकारात् परिहाररूपात् सततं चिन्तनात् कर्म-साक्षिणः श्रीहरेः चिन्तनात् फलेन क्रियायोगसन्तुष्टहरिप्रसादाख्यफलेन च आधिव्याधिप्रशमनं क्रियायोगं हर्यर्पणबुद्ध्या क्रियमाणनित्यनैमित्तिककर्मकौ-शलं प्रायेण शमं शमयतीति शमः प्रागुक्तशारीरदुःखशमनौषधं कुर्वते ॥

मानसस्य चित्तस्य, प्रियया सह आख्यानं सल्लापः सम्भोगाश्च सह-भोजनक्रीडाविलासाद्याः तेषामुपनये समागमे सतीत्यर्थः ॥

यत् मानसं मनस्सम्बन्धि दुःखं तेन ज्ञानेन ज्ञानयोगेन । क्रिया-योगेन शारीरं दुःखं, ज्ञानयोगेन मानसं दुःखं शमयेदिति भावः ॥

उभौ ईर्ष्यानयौ ॥

रागसहितो द्वेषः रागद्वेषः ॥

विप्रयोगेन विषयवियोगेन त्यागी दोषत्यागी समागमात् विषयसमाग-मात् ॥

ज्ञानान्वितेषु दुःखेष्वित्यत्र दुःखेषु जातेषु सत्सु ज्ञानान्वितेष्विति सम्बन्धः ॥

रागाभिभूतः पुरुष इत्यत्र रागो विषयेषु स्नेहः, कामः स्त्रीसम्भोगा-सक्तिः, इच्छा अशनायापिपासादिरूपा, तृष्णा अलम्बुद्धिरहिता 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वम्' इति वाक्योक्तप्रकारेण अर्थाकाङ्क्षा ॥

अर्थश्रेयसि द्रव्यरूपे श्रेयसि पुरुषार्थे, श्रेयः मोक्षम् ॥

अर्था दुःखं परित्यक्तुरित्यत्र परित्यक्तुः पुरुषस्य अर्थाः दुःखं दिश-न्तीति योग्यक्रियाध्याहारः ॥

अतः कारणात् विवित्सायाः 'विद लाभे' इति धातोः धनलाभेच्छायाः सुखं नास्ति ॥

विमुक्तेप्सुः 'भावे क्त' इति वचनात् विमुक्तं विमोक्षं प्राप्तुमिच्छुः विमुक्तेप्सुः ॥

सति श्रान्तस्येत्यत्र सति देयवस्तुनि विद्यमाने सति ॥

अग्निहोत्रमनड्वांश्चेत्यत्र योऽनड्वान् ये ज्ञातयः तान् ॥

अतिथिबान्धवा इत्यत्र अतिथिः पूर्वेद्युः पूजितः, अपूजिता अतिथयः निर्दहेयुरिति सम्बन्धः ॥

विधिवत् यन्न निर्वपेत् न जुहुयात् तच्च नाश्नीयात् ॥

शिश्नोदरकृते चाज्ञ इत्यत्र विघसं यथेष्टमन्नं भृत्यानां दिने दिने दत्त्वा अवशिष्टं यथा भवति तथा । वैराग्यादिमहाभाग्यं त्यक्त्वा अन्यायार्जितवित्तेन भृत्यान् पुष्णंस्तिष्ठतीति भावः ॥

महेप्सया महत्या प्राप्तुमिच्छया ॥

कुरु कर्म त्यजेति चेत्यत्र निवृत्तिकर्म कुरु, प्रवृत्तिकर्म त्यज इति वेदवचनमिति सम्बन्धः ॥

सत्यं यथार्थविज्ञानम् ॥

सम्यक् चेन्द्रियगोचरादित्यत्र सम्यक् इन्द्रियाणां गोषु विद्यासु चरात् सञ्चारणादित्यर्थः ॥

सम्यक् कर्मोपसंन्यासादित्यत्र कर्मणां हरिपादारविन्दे उपसंन्यासात् समर्पणात् ॥

ऐश्वर्यवशतां ऐश्वर्यं वशं स्वाधीनं येषां तेषां भावस्ताम् ॥

पितृमातृमयी सिद्धिः समीचीनपितृमातृसम्पत्तिः ॥

इत्यारण्यके द्वितीयोऽध्यायः ।

---

## ॥ तृतीयोऽध्यायः ॥

गत्वोत्तरायणमित्यत्र रश्मिभिः उग्ररश्मिभिः लोकात् जनात् तेजः सामर्थ्यं उद्धृत्य, निदाघकाले सन्तप्तानां बहुतरसामर्थ्याभावादिति भावः ॥

दिवः स्वकिरणात् तत्तेजः जगतः सूयते सूते । वर्षाकाले श्रमाभावात् सर्वप्राणिनां सामर्थ्यातिशयो भवतीति भावः ॥

भौमेन कार्तवीर्येणेत्यत्र भौमेन सार्वभौमेन ॥

इत्यारण्यके तृतीयोऽध्यायः ।

---

चकर्थ, इदानीमित्यत्र इदानीं प्रश्नं चकर्थेति योग्यपदाध्याहारः ॥

एतद्वाक्यमिदं विदुरोक्तमित्यत्र हे विदुर एतद्वाक्यं सभायां द्यूतसभायां उक्तं, मां प्राप्य पाण्डवानुद्दिश्य इह रहसि प्रोक्तं तदेव वाक्यं प्रोक्तं मम चेतः नावैति न प्राप्नोति ॥

इदं त्विदानीं कृतमित्यत्र येन कारणेन तेषां पाण्डवानामर्थे यथार्थं अर्थं पाण्डवप्रयोजनं यथा अनतिक्रम्य इदं पाण्डवानामर्धराज्यदानं त्वया इदानीं निश्चितमेव कृतम् । तेन कारणेन त्वं मम अहित इति मन्ये । पाण्डवार्थे पुत्रं त्यजेयमित्येतत् कथं हि, न कथञ्चिदिति पदयोजना ॥

नेदमस्तीत्यत्र इदं सन्धिकार्यं नास्तीति भाषमाण इत्यर्थः ॥

आहवाय द्यूतयुद्धाय ॥

गाण्डीवे संशयित इत्यत्र गाण्डीवे कथञ्चित् संशयिते सं सम्यक् शयिते गूढार्थं तेषां गृहे शयनं प्रापिते सति नः राज्यप्राप्तिः संशयिता सन्दिग्धा भवेत् । तस्मादायुधानां गूढं सर्वथा न करोमीति भावः ॥

यस्याविभक्तमित्यत्र आ समन्तात् विभक्तमिति पदच्छेदः ॥

निष्प्रलापाः 'प्रलापोऽनर्थकं वच' इत्यभिधानात् व्यर्थवाक्यरहिताः हे पाण्डवाः तस्मिन् सत्ये सत्यपि एवं प्रवृत्तिर्यस्य स राजा ॥

इत्यारण्यके पंचमोऽध्यायः ।

---

॥ षष्ठोऽध्यायः ॥

विदुरस्मारमोहित इत्यत्र स्मारः स्मरणम् ॥

निकृतः 'निकृतः स्याद्विप्रकृत' इत्यभिधानात् अपकृतः, निरस्त इति यावत् ॥

व्यलीकं कृतपूर्वमित्यत्र 'अलीकं त्वप्रियेऽनृत' इत्यभिधानात् व्यलीकमप्रियम् ॥

शशंसागमने हेतुमित्यत्र आगमने हेतुं धृतराष्ट्रं पाण्डवदर्शनाख्यमहाफललाभात् शशंस 'शंस स्तुतौ' इति धातोः अस्तौषीत् ॥

धर्म एव वेतनं जीवनोपायो येषां ते धर्मवेतनाः ॥

दीनानुपातिन इत्यत्र दीनाननुसृत्य पतन्तीति दीनानुपातिनः ॥

इत्यारण्यके षष्ठोऽध्यायः ।

---

॥ सप्तमोऽध्यायः ॥

निरास्थन्निष्परिग्रहानित्यत्र निरासून् 'असु निरसन' इति धातोः शत्रुनिरसनशीलान् ॥

उद्बन्धनं रज्ज्वा ऊर्ध्वं बन्धनम् । वृद्धान् अभिवृद्धान् ॥

इत्यारण्यके सप्तमोऽध्यायः ।

---

अथ वा जायमानस्येत्यत्र जायमानस्य क्षणे क्षणे उत्पद्यमानस्य त्वत्पुत्रशीलस्य अनु अनुसारेण यच्छीलं तव जायते, हे राजन् भूयः एतत् मा, एतत् त्वत्पुत्रशीलं अमृतस्य मरणरहितस्य पुरुषस्य नापसर्पति न गच्छति । तव पुत्राणामेतद्दुश्शीलं मरणपर्यन्तं न गच्छतीति भावः ॥

पुराऽपार्थो निवर्तत इत्यत्र अपार्थः पार्थविरोधी, अपार्थः अपगतप्रयोजनश्च अयं दुर्योधनः पुरा पाण्डवद्रोहार्थं गमनात्पूर्वमेव येन कार्येण निवर्तेत, तत्कार्यं भीष्मः कथं वा मन्यत इत्यादियोजना ॥

हे पुत्र परं सम्यक् वेद्मि ॥

कौशिक हे इन्द्र ॥

इत्यारण्यके नवमोऽध्यायः ।

---

## ॥ दशमोऽध्यायः ॥

'युक्तमौपयिकं लभ्यम्' इत्यभिधानात् औपयिकं युक्तम् ॥

मेढीभूतः स्वयं राजन्नित्यत्र धान्यनिष्पत्त्यर्थं परिभ्रमतां वृषभाणां बन्धनाय मध्ये स्थितः स्तम्भविशेषो मेढी, तद्वत् पाण्डुपुत्राणां त्वत्पुत्राणां च त्वमेव आधारभूत इति भावः ॥

जघान पशुमारेणेत्यत्र पशून्मारयतीति पशुमारं दंष्ट्राग्रवदनं तेन ॥

नाहं वक्ष्यामीत्यत्र अहं वक्ष्यामि मे असूया न । ते सुतः न शुश्रूषत इति योजना ॥

इत्यारण्यके दशमोऽध्यायः ।

---

## ॥ एकादशोऽध्यायः ॥

शृणु भीमस्येत्यत्र तेषां पाण्डवानां कथान्ते कथामध्ये पुनः पुनः मया श्रुतपूर्वं इदं भीमस्य कर्म अथ शृण्विति सम्बन्धः ॥

रात्रौ निशीथ इत्यत्र रात्रौ अर्धसमये गते सति स्वालीढे स्वैः स्वीयैः निशीथकालसम्बन्धिभिः रक्षःपिशाचादिभिः आलीढे रम्योऽयं काल इत्यास्वादिते निशीथे सति तद्वनं तापसादयो दूरात्परिहरिष्यन्ति ॥

सार्करश्मीत्यत्र अर्करश्मिवत् ऊर्ध्वीभूतजटा, तटिच्चक्रवत् क्षणे क्षणे ज्वलदुल्मुकं बालार्कवत् नेत्रं, नीलाम्बुदवत् स्वयं, बलाकामालावत् दंष्ट्रेति सूचनाय इयमुपमा ॥

शतव्याममिवोद्विद्धमित्यत्र 'व्यामो वटश्च न्यग्रोध उत्सेधः काय उन्नतिः' इत्यभिधानात् शतधारारूपेण व्यामः काये उन्नतिर्यस्य तत् वज्रमिव उद्विद्धं ऊर्ध्वमभिवृद्धं तरुम् ॥

कक्ष्यामुत्पीड्य पाण्डव इत्यत्र कक्षो वनं, तत्सम्बन्धिनीं लतागुल्मादिस्थावरश्रेणीम् ॥

दीप्तान्तं दीप्तः अन्तः अग्रं यस्य सः तं उल्कं उल्मुकम् ॥

झर्झरभूताः चूर्णीभूताः ॥

दुर्योधननिकारादित्यत्र दुष्टं योधनं युद्धं यस्य सः दुर्योधनः किर्मीरः तस्य निकारात् न्यक्कारात्, कृष्णायाः नयनेन नेत्रावलोकनेन दग्धः ॥

बलिना हस्तेन ॥

योक्त्रयामासेत्यत्र 'योक्त्रं योत्रमथो हलम्' इत्यभिधानात् लाङ्गलस्थानीयं कृतवान्। लाङ्गलमिव चकर्षेति भावः। रशनया रज्ज्वा ॥

विनिकीर्णः विस्तृतसर्वाङ्गः ॥

इत्यारण्यके एकादशोऽध्यायः।

---

॥ द्वादशोऽध्यायः ॥

पूर्वदेवेषु भारत इत्यत्र पूर्वं देवो देवनं अक्षक्रीडा यैः कृता ते पूर्वदेवाः दुर्योधनादयः, दैत्या वा तेषु ॥

नानावतारेष्वप्यभेदाद्बदरीनारायणादिरूपैः कृतकर्माणि कृष्णकर्मतया स्तौति— दशवर्षसहस्राणीत्यादिना ॥

जारुथ्यामाघृतिः क्रुद्ध इत्यत्र 'जॄ वयोहानौ' इति धातोः जारुः जराशीलो वृद्धः, तस्मिन्नेव थ्या स्थिरीकर्तुं योग्या जारुथ्या अग्रपूजेत्यर्थः। तां, आवृणोत्याच्छादयतीत्याघृतिः ॥

आगम्य मुनय इत्यत्र आगम्य ज्ञात्वा ॥

स्वं स्वकीयं, आत्मानं परमात्मानं, आत्मा प्रियः ॥

अनन्यः पार्थ मत्तस्त्वमित्यत्र हे भारत पार्थ! मत्तः मन्मूलरूपात् अनन्यः अभिन्नः अहमेव। त्वं च त्वमेव। हे भरतर्षभ आवयोः मूलरूपावताररूपयोरावयोः अन्तरं देशतः कालतो गुणतश्चावधिं वेदितुं न शक्यम्। आवयोः तव च मम चेत्यावयोः अन्तरं तारतम्यं च वेदितुं न शक्यम् ॥

स्त्रीधर्मिणी वेपमानेत्यत्र 'स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि' इत्यभिधानात् स्त्रीधर्मिणी रजस्वला ॥

विप्रकृतां छिद्रैरित्यत्र 'छिद्रं निर्व्यथनं रोको रन्ध्रं श्वभ्रं वपा सुषिः' इत्यभिधानात् छिद्रैस्तुच्छैरित्यर्थः। छिदि च्छेत्तरि सति रीयन्ते क्षीयन्ते इति च्छिद्रा दुर्बलाः तैर्वा ॥

कथं जायेदित्यत्र न चेदिति योग्यपदाध्याहारः। जायेत् जायेत ॥

ते मां शरणमापन्नामित्यत्र परान् शत्रून् कथमन्वपद्यन् अन्वपादयन्। अन्तर्णीतो णिच्। प्रापयन्नित्यर्थः ॥

सशेपत्वादित्यत्र शेपो विशेपः, सामर्थ्यविशेष इत्यर्थः। तेन (सं) सहितत्वात्। विश्वस्तं विशेषेण श्वासवन्तं, सुप्तमित्यर्थः। प्राक्षिप्य प्रकर्षेण आक्षिप्य दुरुक्तीरुक्त्वा ॥

उपाधाक्षीत् 'दह भस्मीकरणे' इति धातोः लुङ्। आर्यया मात्रा कुन्त्या ॥

पर्यष्वजत परिष्वङ्गमालिङ्गनमकरोत् ॥

इत्यारण्यके द्वादशोऽध्यायः।

---

## ॥ त्रयोदशोऽध्यायः ॥

आम्बिकेयेन दुर्धर्षेत्यत्र दुर्धर्ष धर्षयितुमशक्य! धर्मराजेत्यर्थः ॥

यैर्दोषैरवरोपितः, राज्याद्भ्रंशितः ॥

द्यूतसङ्गस्य द्यूतप्रसङ्गस्य स्वातन्त्र्यं सर्वान् स्ववशीकृत्य स्थापनम् ॥

तत्र सर्वत्रेत्यत्र वक्तव्यं दोषजालं मन्यन्ते जानन्ति ॥

अथैनानित्यत्र एनान् दुर्योधनादीन् अपनीय अपसार्य, 'टापं चैव हलन्तानाम्' इति वचनात् दुष्टा हृदा हृदयं येषां ते दुर्हृदाः तेषां दुर्योधनादीनां मध्ये अदुर्हृदं न विद्यते दुर्हृत् यस्य तं शान्तं तान् सभासदश्च दुरोदराद्भेदयेयम् ॥

इत्यारण्यके त्रयोदशोऽध्यायः।

---

## ॥ चतुर्दशोऽध्यायः ॥

विनयिताऽस्म्यहमित्यत्र वि विनाशं नयिता प्रापयिता ॥

मार्तिकावताख्यदेशसम्बन्धी मार्तिकावतको नृपः साल्वः ॥

श्रुत्वैव आगत इति पूर्वक्रियाया आवृत्तिः ॥

इत्यारण्यके चतुर्दशोऽध्यायः ।

## ॥ पञ्चदशोऽध्यायः ॥

श्रौतश्रवः श्रुतश्रवा नाम दमघोषपत्नी, तस्याः सुतः श्रौतश्रवः शिशुपालः ॥

अभिसारेण अभितः सरतीत्यभिसारेण सौभेन करणेन ॥

इत्यारण्यके पंचदशोऽध्यायः ।

रुधिराशनाः शराः ॥

इत्यारण्यके एकोनविंशोऽध्यायः ।

## ॥ विंशोऽध्यायः ॥

ततस्ते नागमन्नित्यत्र तेन साल्वेन मुक्ताम् ॥

वाचयित्वा द्विजश्रेष्ठानित्यत्र दिशः आनादयन् अभवमिति सम्बन्धः ॥

जितकाशिना जितं जयः, तत्काशिना इच्छुना ॥

वध्यतां विशिखैरित्यत्र वध्यतां वध्यमानानाम् ॥

ततोऽहं मोहमापन्न इत्यत्र 'माङ् मान' इति धातोः, मा विज्ञानात्वं, तस्य ऊहः मोहः तं मोहम् ॥

शरजालवदित्यत्र शरजालमस्य वर्तेत इति शरजालवत् ॥

इत्यारण्यके विंशोऽध्यायः ।

## ॥ एकविंशोऽध्यायः ॥

शरैर्निचितम् । 'चिञ् चयन' इति धातोः पूरितं अन्तरं अवकाशं न पश्यामि । हेतुगर्भं विशेषणम् । शरपूरितत्वान्न पश्यामीति भावः ॥

पुनरपि साल्वस्य मायाकौशलमाह— अथ मां पुरुषः कश्चिदित्यादिना । द्वारकानिलयः तस्य आहुकस्यैव परिचारकः कश्चित्पुरुष इव विषण्णसन्नकण्ठेन आहुकस्यैव वच इति मामब्रवीत् । हे वीर युधिष्ठिर तन्निबोधेति योजना ॥

विपक्ते त्वयीत्यत्र त्वयि विपक्ते सैन्येन सह सम्बद्धे ॥

इत्यारण्यके एकविंशोऽध्यायः ।

॥ सौभवधः समाप्तः ॥

---

समादाय जघन्यमीयुरित्यत्र जघने समीपे विद्यमानाः जघन्याः यथा भवन्ति तथा जघन्यं ईयुः ॥

इत्यारण्यके त्रयोविंशोऽध्यायः ।

---

सहस्रनेत्रप्रतिम इत्यत्र यः यमस्य जेता नेता, नमुचेश्च हन्ता, तस्य सहस्रनेत्रस्य प्रतिमा यस्य स इति योजना । स्वधर्मं अनयत् आचरत् ॥

ईशो बलस्येत्यत्र बलस्य सेनायाः ईश इति कृत्वा अधर्मं न चरेत् । अतः समर्थोऽपि रामः वने विचरन् आसेति योजना ॥

यथानुवृत्त्या यथोक्तवृद्धसेवया । यथाश्रिया यथोक्तवैराग्यादिसम्पदा ॥

इत्यारण्यके पंचविंशोऽध्यायः ।

---

## ॥ षड्विंशोऽध्यायः ॥

बको नाम कश्चिदृषिः ॥

नाभ्यगच्छद्बलिर्लोक इत्यत्र बलिर्महाबलिः तीर्थं तीर्थवत्पवित्रीकरणशक्तम् ॥

नानूनमासीदित्यत्र या श्रीरभिकाङ्क्षिता आसीत, तत्सर्वं च ब्राह्मणसम्प्रयोगादनु अनन्तरं महीं लब्ध्वा ऊनं नासीत्। तेषां ब्राह्मणानां दुःखं चरन् ॥

वर्णंद्वितीयं क्षत्रियम् ॥

अङ्कुशग्रहं यन्तारं परिगृह्य स्वशुण्डया बलात्कारेण गृहीत्वा समरे कुञ्जरस्य बलमिव ॥

ब्रह्मण्यनुपमा दृष्टिरित्यत्र दृष्टिर्ज्ञानम् ॥

बुद्धिपर्येषणं बुद्ध्या पर्येषणमन्वेषणं विचारमित्यर्थः ॥

यथार्हतीर्थप्रतिपादनायेत्यत्र तीर्थं धर्मशास्त्रम् ॥

दाल्भ्यं दाल्भ्यपुत्रं[1] वकं ऋषिम् ॥

इत्यारण्यके षड्विंशोऽध्यायः ।

---

## ॥ सप्तविंशोऽध्यायः ॥

श्रुत्वैवानाशितं तदेत्यत्र नाशितं न भवतीत्यनाशितं क्षेममित्यर्थः ॥

इदं च शयनमित्यत्र यदिदं शयनं, एतद्दृष्ट्वा पुरातनं दान्तं दन्तमयं रत्नभूषितं सभामध्ये यदासनं, तच्च दृष्ट्वा स्मृत्वा भूतलशायिनं त्वां शोचामीति योजना। कदाचित् कुशप्रस्तरे दर्भासने त्वां दृष्ट्वा मां शोकः भृशं दारयते ॥

चीरिणं वल्कलिनम् ॥

निष्ठान्नैः 'निष्ठोत्कर्षे व्यवस्थायाम्' इति वचनात् उत्कृष्टान्नैः ॥

प्रणीताः प्रकर्षेण वशं नीताः ॥

यो नागैरद्भुताकारैरित्यत्र यातीति यः दिग्विजयार्थं गच्छन् योऽर्जुनः हयनागैः संवृतं पार्थिवानां वित्तं प्रसह्य अद्भुताकारैर्नागैः अगृह्णात्, गजानां स्कन्धानारोप्य आनयदित्यर्थः ॥

इत्यारण्यके सप्तविंशोऽध्यायः ।

---

[1] दल्भ्य (दल्भ)·

## ॥ अष्टाविंशोऽध्यायः ॥

धर्माणामागतागममित्यत्र आ सम्यक् गतः अवगतः आगमः शास्त्रं येन तम् ॥

तैजसी सामर्थ्यवती ॥

पितामहः प्रह्लादः ॥

उपकारेण तत्तस्येत्यत्र अपराधिनः तत् कर्म ॥

अथ चेद्बुद्धिजमित्यत्र अथ बुद्धिजं कुर्युः, अबुद्धित इति प्राहुश्चे-त्तेऽपि हन्तव्याः ॥

इत्यारण्यके अष्टाविंशोऽध्यायः ।

---

## ॥ एकोनत्रिंशोऽध्यायः ॥

भावस्तस्येत्यत्र भावः अविनाशः ॥

'श्रेयाञ्छ्रेष्ठः पुष्कलः स्यात्' इत्यभिधानात् श्रेयसः श्रेष्ठान् ॥

द्वयोः क्रुध्यतः परस्य स्वस्य च चिकित्सकः क्रोधाख्यरोगपरिहारकः । स्वशान्तिं दृष्ट्वा सोऽपि शान्तो गमिष्यतीति भावः ॥

बलीयसां मनुष्याणामित्यत्र बलीयसां मनुष्याणां आत्मानं त्यजति ददाति । ते बध्नन्तीत्यर्थः ॥

अनात्मनः मनोजयरहितस्य ॥

तत् क्रोधाख्यं वस्तु रजः रजोगुण एव ॥

क्रुद्धः श्रेयान् नेति सम्बन्धः ॥

अतिक्रान्तमबुद्धानामित्यत्र अतिक्रान्तं अतिक्रमणं यदि यद्यप्यस्ति ॥

अभिषक्तो ह्यभिषजेदित्यत्र यदा अभिषक्तः वनितादिविषयैः सक्तः सङ्गवान् पुरुषः अभिषजेत् अभितः तेष्वेव सङ्गं कुर्यात्, यदा गुरुणा आहताः पुरुषाः, तानेव आहन्युः ॥

जन्मसिद्धिः कर्मभूमौ जन्मनिष्पत्तिः प्रजानां वृद्धिमूलं अभिवृद्धेर्मूलं हि ॥

अभवाय अजननाय ॥

भवाय शोभनाय ॥

क्षमाभावो हि भूतानामित्यत्र भावः सद्भावः ॥

प्रतापवानपि प्रकृष्टतापवानपि यः जितक्रोध इति पूर्वेण सम्बन्धः ॥

एतैर्हि राजेत्यत्र एतैः श्लोकैः शमं प्रति चोद्यमानः अहं शममेव आदास्यामि, न तु क्रोधम् । इयं च बुद्धिः ते लोभात् राज्यलोभात् न नशिष्यति ॥

सुयोधनो नार्हतीत्यत्र नार्हति अनुजत्वाद्राज्यं नार्हतीति हेतोः सुयोधनः एवं मद्वत् क्षमां न विन्दति । तस्य राज्यस्य ॥

इत्यारण्यके एकोनत्रिंशोऽध्यायः ।

---

## ॥ त्रिंशोऽध्यायः ॥

'डुधाञ् धारणपोषणयोः' इति धातोः पालयिता नारायणो धाता । विधाता ब्रह्मा ॥

न ते भृङ्गमवर्धतेत्यत्र सर्वो पृथिवीमवाप्यापि ते शिरसि शृङ्गं नावर्धतेति लौकिकमाभाणकम् । तस्मादैश्वर्येऽपि धर्ममेवाचरेति भावः ॥

राजन् परीतया बुद्ध्येत्यत्र परीतया विपरीतया, वसूनि च उद्दिश्य पराजितोऽसीति योजना ॥

अत्राप्युदाहरन्तीममित्यत्र ईश्वरस्य वशे यथा, तथा आत्मनः स्वस्य वशे न ॥

पुरस्ताच्छुक्रमुच्चरन्नित्यत्र पुरस्तात्सृष्टेरादिकाले शुक्रं शुचा रहितो यथा भवति तथा उच्चरन् उदयन् ईशानः नारायणः धातेव सूर्य इव ॥

यथा दारुमयीमित्यत्र अङ्गं एकैकमङ्गं, अङ्गानि सर्वाङ्गानि इङ्गयति 'इङ्ग चेष्टायाम्' इति धातोः चेष्टयति ॥

शकुनिस्तन्तुबद्धो वेत्यत्र तन्तुबद्धः शकुनिः पक्षी वा इव 'वा विकल्पोपमानयोः' इति वचनात् । ईश्वरस्य वशे तिष्ठन् प्रभुः गमनागमनादौ समर्थः । आत्मनः परमात्मनः । अन्येषां वशे तिष्ठन् न ॥

तन्मयः तत्प्रधानकः, तदर्पितः तदाधारः ॥

अन्यथैव हि वर्तन्त इत्यत्र तानि तेषां ज्ञानेन्द्रियाणि, तानि कर्मेन्द्रियाणि वा ॥

कर्मकारकरः कर्मकारं कर्मकर्तारं करोतीति कर्मकारकरः ॥

अयं इतरः 'क्षुल्लकश्चेतरश्च स' इत्यभिधानात् इतरः पामरो जनः यथा, तथा अयं परमात्मा रोषादिव प्रवृत्तः ॥

धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुत इत्यत्र तेन स्वदत्तश्रिया तेन दुर्योधनेन स्वपूजादेरकरणात् निष्फलमेव तस्य सम्पद्दानमिति भावः ॥

अधुना अनादिकर्मपरम्परामपेक्ष्य जीवानां सुखदुःखदानान्न भगवतो वैषम्यादिदोषलेप इत्येतदाक्षिप्य समादधाति—कर्म चेत्कृतमन्वेतीत्यादिना। चेत् यदि ईश्वरः कृतं तत्तज्जीवेन जन्मान्तरे कृतं कर्म अन्वेति अनुसृत्य प्रवर्तते । अतो न वैषम्यादिदोष इति मतम् । तथापि प्राग्भवीयकर्मण्यपि अन्यं स्वतोऽन्यं कर्तारं स्वतन्त्रकर्तारं न ऋच्छति, तदपि कर्म स्वयमेव कारयति । एवमनादिकर्मपरम्परायामपि भगवत एव स्वातन्त्र्यात् तेन जीवेन कृतकर्मणा जनितपापेन असाधारणहेतुरीश्वरः लिप्यते नूनं लिप्यते कच्चित् । एवमपि लोकमर्यादया वैषम्यादेः परिहारो नाभूदिति भावः । तर्हि कथं परिहार इत्यत आह—नूनमिति। चेतनाचेतनात्मकं जगत् ईश्वरात् ऊनं नु स्वातन्त्र्यसर्वेश्वरत्वादिधर्मैरूनं नु । अतः पापपरिहारासमर्थत्वात् स्यादेव तस्य लेपः । ईश्वरस्य तु पापलेपे ईश्वरत्वमेव (न्यू)ऊनं नु । अस्मात्कारणात् चेत् यदि कर्मकृतः जीवस्य पापं कर्तारं स्वत(न्त्रं)न्त्रकर्तारं ईश्वरं न ऋच्छति, तर्हि इह ईश्वरस्य कर्मालेपे बलमेव स्वातन्त्र्याख्यसामर्थ्यमेव कारणम् । लेप्तुमुद्यतपापस्यापि स्वतन्त्रहर्यधीनत्वात् दोषरूपं जडतया स्वतोऽसमर्थं तत्पापं स्वस्पर्शाय प्रेक्षावान् स एव हरिर्न

प्रेरयेत् । तथाच स्वप्रेरितजडस्वल्गुडो मर्त्यमिव जडं तत्पापं भगवन्तमीश्वरं न स्पृशेदेव । अतः स्वतन्त्रस्य पापलेपो न युक्तिसह इति भावः । दुर्बलान् स्वप्रारब्धपापलेपेन स्वातन्त्र्याभावादसमर्थान्, अत एव हृतराज्यान् जनान् भगवद्भक्तजनान् युष्मान् शोचामि । इति श्लोकद्वयस्य योजना ॥

इत्यारण्यके त्रिंशोऽध्यायः ।

## ॥ एकत्रिंशोऽध्यायः ॥

राजपुत्रि चरामीत्यत्र न चरामि धर्मं नाचरामीत्यर्थः ॥

अपायात् निवृत्तो भवेत् ॥

इन्द्रियप्रतिसंबद्धमित्यत्र यदिदं लोकसाक्षिकं लोकस्य साक्षिभूतं धर्मप्रदर्शकमित्यर्थः । एतादृशं इदं ऋष्यादिजगत् इन्द्रियप्रतिसम्बद्धं इन्द्रियलम्पटमिति एतावदेव बालः मन्यते, न तेपु बहुमानं मन्यते । तेन दोषेण स्वयमपि अन्यत्र स्रक्चन्दनवनितादिविषयेषु मोहं गच्छति ॥

आजन्म सु न विन्दतीत्यत्र आजन्म जन्मारभ्य सु शोभनं न विन्दति न प्राप्नोति ॥

प्लवः नौः ॥

अचलो यदि धर्मः स्यादित्यत्र अधर्मचारिभिः चरितः 'चर गतिभक्षणयोः' इति धातोः भक्षितः, अतिवादेन नाशित इत्यर्थः । एतज्जगत् धर्मनिन्दकजगत् ॥

नाचरिष्यन् परे धर्ममित्यत्र परे अन्यस्मिन् पुरुषे अन्नदानादिधर्मं, परे स्वर्गादिपरलोकविषये यज्ञादिधर्मं, परतरे परमात्मनि विषये पूजादिधर्मं नाचरिष्यन् यः भवति, अत्यन्तं अयं विप्रलम्भः परान् प्रति धर्मवचनं च यदि भवति, तर्हि तस्य सर्वाः क्रियाः अफलाः स्युः ॥

इत्यारण्यके एकत्रिंशोऽध्यायः ।

## ।। द्वात्रिंशोऽध्यायः ।।

ईश्वरं कुत एवाहमित्यत्र कुतः कुत्सितवचनात् नैवावमन्य इति सम्बन्धः ॥

भूयश्च विलपिष्यामि सुमनास्तन्निबोध मे इत्यत्र सुमनाः सती प्रलपिष्यामीति द्रौपद्यैवोक्तत्वात् 'लिप्यते नूनमीश्वर' इत्यत्र 'कुत एवाहम्' इत्यत्र च असदुक्तोऽर्थः द्रौपद्याः मानस एवेति ज्ञातव्यम् ॥

याच्चैत्योपसर्पणादित्यत्र चिता शवदाहकाष्ठानि, तत्सम्बन्धी अग्निश्चैत्यः, तत्प्राप्तिपर्यन्तम् । शवदाहजनितपुण्यस्यापि स एव देही पात्रमिति सूचनायेत्थमुक्तम् । अन्यथा आमरणमित्यवक्ष्यत् ॥

उत्थानमभिजानन्तीत्यत्र उत्थानं कर्मोत्थितेरादिकारणं लोकसाक्षिकं नारायणमिति सम्बन्धः । यो धाता कर्मरक्षको नारायणः, यो विधाता कर्मविद्योपदेष्टा गुरुर्ब्रह्मा तं च तं च अस्य कर्मणः उत्थानं पश्यन्ति । उत्थितं च तत्कर्म जन्तवः उपजीवन्ति । अयं मीनग्राही बकः उदके उत्थितं मीनं यथा तथेति सम्बन्धः । मीनवत् कर्म, मीनोत्थापकजलवत् धातृविधाताराविति विवेकः । काम्यकर्मणि निन्दां सूचयितुं बकदृष्टान्तः । 'ग्लै म्लै हर्षक्षय' इति धातोः ग्लासीः अग्लासीः आलस्यं कुर्वित्यर्थः । दंशितः सन्नद्धः ॥

तस्य चापि भवेत्कार्यमित्यत्र कार्यं कर्मफलनाशनाख्यं कार्यम् ॥

यश्च दिष्टफलो लोक इत्यत्र दिष्टफलः दिष्टाद्दैवादेव फलं यस्य स तथोक्तः, हठवादकः हठो योग्यता, तत एव फलं भवतीति वादी हठवादकः; दैवाद्वा फलं भविष्यति, मम फलयोग्यताबलाद्वा भविष्यति, किं प्रयत्नेनेति वदन्नित्यर्थः । 'निहीनोऽपशदो जाल्म' इत्यभिधानात् अपशदौ नीचौ । कर्मबुद्धिः कर्मणि राज्यमोक्षादिफलसाधकयुद्धे शास्त्रश्रवणादिकर्मणि बुद्धिर्यस्य स तथोक्तः ॥

निर्विचेष्टः निष्प्रयत्नः । आमो घटः आर्द्रमृत्तिकामयो घटः ॥

अकस्मादपि यः कश्चिदित्यत्र अकस्मात् धनार्जकवाणिज्याद्युपायं विना, स्वपूजादिना प्रसन्नदैवं च विनेत्यर्थः । तं हठेनेति मन्यन्ते तात्कालिक-

दर्शिनो जनाः। 'प्रत्यक्षं चक्षुषा दृष्ट'मिति वक्ष्यमाणत्वात् तात्कालिकदर्शिन इत्युक्तम्। एवमन्यत्राप्यूह्यम्। सर्वोत्पत्तिमन्निमित्तकारणस्य दैवस्य कर्मरूपादृष्टस्य च क्वापि त्यागायोगात् सः हठः कस्यचिच्चलो न। उपलक्षणं चैतत्। दैवं च नेति ग्राह्यम्॥

यच्चापि कश्चित्पुरुष इत्यत्र दैवेन विधिना दैवेन देवसम्बन्धिना विधिना आज्ञया, अस्मिन्नेव जन्मनि कृतात्युत्कटदेवपूजनेन वा वाणिज्यादिधनार्जे(न)कयत्नशून्यानां राजपदायोग्यकीटादीनां व्यासादिभिर्यद्राज्यादिकं दत्तं, तद्दैवमिति निश्चितं तात्कालिकदर्शिभिर्जनैर्निश्चितमिति योजना॥

यत्त्वयं कर्मणा किञ्चिदित्यत्र कर्मणा कृषिवाणिज्यादिरूपधनार्जककर्मणा प्रत्यक्षं चक्षुषा दृष्टं अर्थं साधनसहितमर्थम्। अस्मिन् जन्मनि अकृतदेवता(दि)भक्तीनां विप्राणां वैश्यवृत्तित्वात् स्वायोग्यवाणिज्यादिना यद्धनं प्राप्यते, तत्पौरुषम्। केवलपुरुषप्रयत्नसिद्धत्वात् पौरुषमिति तात्कालिकदर्शिभिर्जनैः स्मृतमिति योजना॥

स्वभावतः प्रवृत्तोऽन्य इत्यत्र हठस्यैव स्वभाव इति नामान्तरं दातुं उक्तस्यैव प्रमेयस्य पुनरारम्भः॥

एवं हठाच्च दैवाच्चेत्यत्र स्वभावात् स्वभावाख्यात् हठात्। अन्यथा 'त्रैधमेतत्प्रशस्यते', 'चतुर्थं नात्र कारण'मिति च वक्ष्यमाणविरोधः। ननु हठादेव क्वचिदर्थप्राप्तौ दैवप्रयत्नयोः अर्थरूपकार्ये व्यभिचारादकारणता वा, व्रीहियववद्वैकल्पिककारणत्वे प्रयत्नस्यानावश्यकत्वापत्त्या प्रकृतानुपयोगो वा इति चेत्तत्राह—तत्फलं पूर्वकर्मण इति। केवलहठात् केवलप्रयत्नात् केवलं दैवाच्च यत्फलं जायत इति तात्कालिकदर्शिनो मन्यन्ते, तदपि फलं पूर्वकर्मणः जन्मान्तरे धनाकाङ्क्षया कृतवायव्ययागादिप्रयत्नरूपपुण्यकर्मणः। इदं चोपलक्षणम्। कर्मप्रसन्नदैवात् कर्मकर्तृयोग्यतायाश्चेत्यपि ग्राह्यम्। एवञ्चास्मिन् जन्मनि दैवप्रयत्नयोग्यतानां उक्तविधया क्वचित्क्वचिद्दर्शनेऽपि अदृष्टद्वारकजन्मान्तरीयप्रयत्नात् तत्प्रसन्नदैवात् आधुनिकदेहमादाय योग्यताभावेऽपि देहस्थजीवस्य अना-

दिकालीनयोग्यताभावे तत्तत्फलसम्पत्तेरेवासम्भवेन अनादिकालीनयोग्यतायाश्च सर्वत्र फलस्य जायमानत्वान्न क्वापि व्यभिचारः। नापि वैकल्पिककारणतेति भावः॥

एतदेव विशदयति—धाताऽपीति। अपिपदेन हठो गृह्यते॥

अयं एतज्जीवसम्बन्धी देहः॥

धातुः कर्मणि कर्मणीत्यत्र धातुः प्रेरणात् क्रियमाणे कर्मणि कर्मणि॥

मनसा तद्विनिश्चित्येत्यत्र तत् भाविफलम्॥

तर्हि प्राचीनपुण्यकर्माख्यप्रयत्नादेव राज्यं भविष्यति; किमधुना युद्धादिप्रयत्नेनेत्यत आह—अगारनगराणामिति। पुरुषहैतुकी आधुनिकपुरुषप्रयत्नाख्यहेतुमती। अदृष्टस्यापि दृष्टकारणमेलकतया कारणत्वात् दृष्टप्रयत्नोऽप्यपेक्षितः। अत एव हठात् दैवाच्च प्राप्तराज्यादिसम्पद्यपि निधेर्निक्षेपाद्वा प्रकृतधनलाभः। पश्चाद्धननिमित्तगजतुरगादिसेनाप्राप्तिः। सेनया च परितः शत्रुषु निर्जितेषु सत्सु निष्कण्टकराज्यप्राप्तिरिति आधुनिकपुरुषप्रयत्नमन्तर्भाव्यैव सर्वत्र राज्यलाभ इति भावः। अगारनगरादिषु काष्ठकार्यादिविषयकपुरुषप्रयत्नः। तिले तैलयन्त्रादिपुरुषप्रयत्नः। गवि गोदोहनाख्यपुरुषप्रयत्नः। काष्ठे अरणीमथनाख्यपुरुषप्रयत्नः॥

पुरुषः कर्मसाध्येष्वित्यत्र अयं इदानीन्तनप्रयत्नकर्ता पुरुष इति सम्बन्धः। कर्मसाध्येषु कर्मफलेषु॥

इह कर्मनाशः कथं त्विति विचारे कर्तुरकौशलादिति निन्द्यते इति योजना। एवञ्च उक्तविधया सर्वत्र पुरुषाभ्यां जीवपराभ्यां प्रयत्नाच्च जातं पुरुषप्रयत्नजं किञ्चित् किञ्चन, सर्वं कार्यमित्यर्थः। एके अकुशलबुद्धयः कर्मणा केवलपुरुषप्रयत्नेनेति वदन्ति। एके हठेन केवलहठेनेति वदन्ति। एके दिष्टेन केवलदिष्टेनेतिं वदन्ति। एतत्रैधं त्रिप्रकारककारणमेलनं प्रशस्यते प्रौढपुरुषैः कथ्यते॥

न चैवैतावता कार्यमित्यत्र अपरे निरीश्वरवादिनश्च एतावता त्रित्वनियतकारणसमुदायेन कार्यं नैवेति च मन्यन्ते। ईश्वराख्यतृतीयकारणस्यासम्मतत्वात् कारणद्वितयमेवालमिति वदन्तीति भावः॥

अस्ति सर्वमदृश्यं तदित्यत्र तत्सर्वं स्वभाव-कर्म-दैवाख्यकारणत्रितयं अस्ति। तर्हि त्रयमपि कुतो न दृश्यत इत्यत उक्तं—अदृश्यं चेति। चशब्देन दृश्यं च गृह्यते। जीवो दृश्यः, अदृष्टेश्वरावदृश्यौ। अदर्शनादीश्वरानङ्गीकारे त्वदभिलपितमदृष्टमपि कारणं न स्यात्। श्रुत्या दर्शनं तु उभयोरपि सममिति च सूचयितुं चशब्दः। पूर्वानवगतत्वात् अपूर्वता चोभयोः समेति सूचनाया-दृश्यपदम्। किञ्च सर्वथा अदृष्टमेव शशशृङ्गादिकं नास्ति, ईश्वरस्तु न तथे-त्याशयेनोक्तं—दैवाद्दृश्यमिति। दैवात् दैवप्रसादात् योगिभिर्दृश्यं च, तथा हठः (वि)त्रिविधपुरुषस्वभावोऽपि दृश्यः॥

कुशलाः प्रति जानन्तीत्यत्र कुशलाः प्रति कार्यं कार्यं प्रति जानन्ति कारणत्रितयमपि जानन्ति, ते त्वविदुष इति सम्बन्धः॥

अधुना प्रकारान्तरेण निरीश्वरवादं निराकरोति—तथैव धाता भूता-नामिति। भूतानां प्राणिनां मध्ये कश्चन कृपणः दरिद्रः न स्यात्। जीवस्य, धनार्जनप्रयत्नस्य च सत्त्वेऽपि एकस्य दारिद्र्यं देवताप्रसादाभावनिमित्तमेव। अत ईशोऽप्यस्त्येवेति भावः॥

यथा लोका इत्यत्र लोकाः पामरजनाः॥

एकान्तेन नियमेन॥

कर्म चास्येत्यत्र अस्य जीवस्य॥

असम्भवे तत्र हेतुरित्यत्र तत्र तस्मिन् अलसस्य फलासम्भवे प्रायः हेतुः चित्तं तु चित्तमेव लक्ष्यते॥

अनर्थं संशयावस्थमित्यत्र वृण्वते आवृण्वते स्ववशे कुर्वन्तीत्यर्थः। कर्मरताः प्रयत्नवन्तः॥

स तु निस्संशयं न स्यादित्यत्र त्वयि कर्मणि युद्धकर्मण्यवस्थिते सति सः अनर्थः निस्संशयं न स्यात्। अथवा राज्यलाभाख्यकार्यसिद्धिश्च स्यात्। ते तव वृकोदरस्य बीभत्सोर्यमयोरपि महिमानं भवान् तदैव कर्मण्यवस्थितिकाल एव बुध्येत जानीयात्। अन्येषां कर्म वा सफलं, अस्माकं कर्म वा सफलमिति

च कृतकर्मा कृतप्रयत्नः भवान् विप्रकर्षेण त्रयोदशवर्षानन्तरं बुध्येत जानीयात् इति योजना ॥

यदन्यः पुरुष इत्यत्र अन्यः कृषीवलपुरुषः ॥

द्वावेतौ ह्यस्य कर्मण इत्यत्र अस्य जीवकृतस्य कर्मणः प्रयत्नस्य द्वौ स्वतन्त्रः परमात्मा, तदधीनो जीवश्चेति द्वौ कर्तारौ । तस्मात्कुर्वतो मे अर्थसिद्धिर्नेति निर्वेदो न कर्तव्य इति पूर्वेणान्वयः । अतोऽन्यथा अप्रवृत्तिः ॥

बहूनां चतुर्णां प्रकाराणाम् । यस्य भावना प्रयत्नः, तस्य कर्म सिध्यतीति योजना ॥

गुणभावे प्रयत्नाख्यजैवगुणसद्भावे उत्तमानां हर्यनुग्रहात् फलत्येव । मध्यमानां न्यूनं फलम् । अधमानामफलमेव । गुणः प्रयत्नचमत्कारः ॥

अप्युपायेनेत्यत्र तत् परपराभावनं उपायेन मकरव्यूहाद्युपायेन वा कार्यम् । उपदेष्टा अर्जुनस्य कृष्णवत् उपायोपदेष्टा ॥

साम वा कार्यं, पराक्रमो वा कार्यः । योगेषु एतेषु त्रिविधेषूपायेषु कर्म पराक्रमाख्यं कर्म भूयिष्ठं श्रेष्ठम् । सर्वे एव पराक्रमाः परानाक्रमन्तीति पराक्रमाः । कर्म सामर्थ्यम् ॥

व्यसनं नाभिकाङ्क्षेत्त्यत्र अपारतया दृढतया च व्यसनविनाशायोग्यस्य सिन्धोर्गिरेर्वाऽपि व्यसनं विनाशं च नाभिकाङ्क्षेत्; मर्त्यधर्मिणः किं पुनरिति लोकधर्मः । इमं धर्ममुल्लङ्घ्य असद्व्यसनविनाशकारिणो दुर्योधनस्य तावुभावप्यवश्यं कर्तव्याविति भावः ॥

उत्थानयुक्तः सततमित्यत्र उत्थानं प्रयत्नः । अन्तरेक्षणी अवकाशदर्शी । परस्य-परमात्मनः । आत्मनः स्वस्य ॥

आत्मा परमात्मा ॥

तेषां सङ्कथमित्यत्र सम्यक्कथा यस्मिन् तं सङ्कथं विद्याप्रसङ्गम् ॥

इत्यारण्यके द्वात्रिंशोऽध्यायः ।

॥ द्रौपदीमतं समाप्तम् ॥

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

आमिषं विघसाशेनेत्यत्र 'विघसं भुक्तशेषं स्यात्' इति वचनात् भाण्डस्थमुर्वरितमन्नं, पत्रस्थमुच्छिष्टं चेति द्विविधमपि विघसमित्युच्यते । तत्राद्यं यजमानयोग्यम् । द्वितीयं शुनो योग्यम् । अतोऽत्र विघसाशः श्वा । आमिषं यज्ञयोग्यं मांसरूपं हविः ॥

धर्मलेशप्रतिच्छन्न इत्यत्र धर्मलेशेन प्रतिच्छन्नाः तिरस्कृताः महाऽधर्माः येन त्वम् ॥

भवतोऽनवधानेनेत्यत्र 'प्रमादोऽनवधानता' इत्यभिधानात् अनवधानेन प्रमादेन, अविचारेणेत्यर्थः ॥

कुणीनामिव बिल्वानीत्यत्र 'स्यादेडे बधिरः कुब्जे जड्डुलः कुकरे कुणिः' इत्यभिधानात् कुणिः कुत्सितकरः ॥

धर्मकामप्रतीतस्येत्यत्र धर्मस्य कामः कामना तेन प्रतीतस्य प्रसिद्धस्य ॥

आत्मानं भवतः शास्त्र इत्यत्र भवतः शास्त्रे शासने ॥

तद्द्यूतं हि तदैवैतान् धार्तराष्ट्रान्निहन्म हीत्यत्र तदैव अक्षक्रीडाकाल एव एतान् धार्तराष्ट्रान् तत् द्यूतं च निहन्म हि । भवतः शास्त्रं शासनं आज्ञामास्थाय यद्दुष्कृतं कर्तव्यस्याकरणं, तत् नः तपतीति योजना ॥

अथैनामित्यत्र मृगचर्यामिव विद्यमानामेनां वनसञ्चाररूपवृत्तिम् ॥

कच्चिद्राजन्नित्यत्र निर्वेदात् राज्ये वैराग्यात् तामिमां क्लीबजीविकां नापन्नः कच्चिदिति योजना ॥

अशक्ताः श्रियमित्यत्र आत्मनः श्रियमाहर्तुमशक्ताः परस्यैव प्रियं कुर्वते ॥

तद्दुःखं नाहवे वध इत्यत्र नाहवे युद्धाभावेऽपि ॥

तत्र चेदित्यत्र तत्र युद्धे अजिह्मं अकुटिलं यथा भवति तथा युध्यमानानां वधश्चेदिति सम्बन्धः ॥

सर्वथा कार्यमित्यत्र एवं प्रतिचिकीर्षतां प्रतिकर्तुं विपरीतं कर्तुमिच्छतां दुर्योधनादीनां विपक्षे वैरं सर्वथा नः कार्यमिति सम्बन्धः ॥

आत्मार्थं युध्यमानानामित्यत्र कृत्यलक्षणे कर्तुं योग्यस्य युद्धस्य लक्षणे विदिते सति, आत्मार्थं युध्यमानानां पुरुषाणां राज्ये अन्यैः हत्वा हतेऽपि प्रशंसैव; गर्हणा नेति योजना ॥

कर्शितार्थो हीत्यत्र कर्शितः नाशितः अर्थो येन स तथोक्तः ॥

यस्य धर्मो हीत्यत्र धर्मः अल्पो धर्मः धर्मार्थक्लेशभाक् बहुतरधर्मार्थ-क्लेशभाक् । धर्मस्य धर्मशास्त्रस्य ॥

यस्य चेत्यत्र यस्य अर्थः अर्थार्थ एव वृद्ध्यादिना पुनः पुनरर्थसम्पत्त्यर्थ एव । भृतकः 'भृतको भृतिभुक्' इति वचनात् धर्मक्रयेण भोजनं कुर्वन् आर्जकः पुण्यं यथा रक्षते, सः अर्थेनार्थार्जकोऽपि तादृगेव स्यात् ॥

अतिवेलमित्यत्र अतिवेलमत्यन्तम् । इतरौ धर्मकामौ ॥

क्रीडतो रममाणस्येत्यत्र क्रीडतः इतस्ततश्चेष्टां कुर्वतः ॥

प्रकृतिस्थो हीत्यत्र प्रकृतितया स्थितः प्रकृतिस्थः पुरुषः । धर्मः मूलं यस्य धर्ममूलः । अर्थाग्रहः ग्रहणं यस्य स तथोक्तः । इतरेतरयोर्नीतौ इतरे-तरयोः सकाशान्नीतौ प्राप्तौ ॥

द्रव्यार्थस्पर्शसंयोग इत्यत्र द्रव्यं परिमलादिद्रव्यम् । अर्थः धनम् । स्पृश्यत इति स्पर्शो वस्त्रवनितादिकम् । सः मनःप्रसादः चित्तस्य सङ्कल्पो यस्मिन् असौ काम्यत इति कामः पुरुषार्थः । अस्य द्रव्याख्यपुरुषार्थकामस्य शरीरं न दृश्यत इति योजना ॥

उपयोगात्फलस्येवेत्यत्र फलस्य उपयोगात् भक्षणादिव । एकफलभक्ष-णानन्तरं तस्मात्फलात् फलान्तरं यथा नास्ति तथेत्यर्थः । काष्ठात् भस्मेव भस्मनि जाते पुनस्तस्मादेव काष्ठात् यथा काष्ठान्तरं न ॥

'वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम्' इत्यमरः । मांसोपजीवी वैतंसिकः शकुनान् पक्षिणः यथा हन्ति, तथा तस्मिन्मांसे भुक्ते क्रीते वा पुन-स्तस्मादेव मांसात् मांसान्तरं यथा न लभते, तथा पण्डितः कामात् कामा-न्तरं न लभते । अधर्मस्य अधर्मकरणस्यापि एतत् विहितकामकरणमेव रूपं

रूपकमुपमा। स्वस्त्रीगमनादिव परस्त्रीगमनादपि तात्कालिकमेव सुखम्, न तु पुनः सुखान्तरसाधकमिति भावः॥

व्यक्तं ते विदितो राजन्नित्यत्र द्रव्यपरिग्रहः गजतुरगादिद्रव्यान्तर-परिग्रहवान्। अस्य अर्थस्य प्रकृतिं मूलकारणम्, स्वपित्रार्जितभूमिमित्यर्थः। भूयसीं भूयोऽपि विद्यमानां प्रकृतिं प्र प्रकर्षस्य, अभिवर्धनस्येत्यर्थः। कृतिं करणम्। तस्य अर्थस्य नाशं आशाया अप्यभावः, नसमासोऽयं, नैराश्यमित्यर्थः। जरया मरणेन वा विनाशं च अनर्थमिति मन्यन्ते॥

धर्मं पूर्वं इत्यत्र पूर्वे दिवसस्य पूर्वभागे, अरुणोदयमारभ्य मध्याह्न-पर्यन्तं धर्मं अनु अनुसृत्य चरेत्। मध्ये मध्याह्नमारभ्य रात्रेः प्रथमयामपर्यन्तं धनं अनु अनुसृत्य चरेत्। जघन्ये तदुपरितनकाले काममिति विवेकः॥

प्राप्तं स्वस्वकाले प्राप्तं सोपायं तत्तदुपायेन सहितं तत् धर्मादिकं आशु क्रियतामिति सम्बन्धः॥

जीवितं ह्यातुरस्यैवेत्यत्र अन्तरवर्तिनः धर्मादीन् विना वर्तिनः॥

न चार्थो भैक्षचर्येणेत्यत्र क्लैब्येन क्लीववत्तूष्णीमवस्थानेन 'विद लाभ' इति धातोः वेत्तुं लब्धुम्॥

उदारमेवेत्यत्र उदारं उत्कृष्टं स्वस्वविहितवर्तनम्। अवरे अविहितवर्तने॥

क्रूरकर्माभिजातोऽसीत्यत्र क्रूरं दुष्टनिग्रहाख्यं कर्म यस्मिन् तद्राज-कुलं क्रूरकर्मेत्युच्यते, तस्मिन् जातः असि॥

न हि केवलधर्मार्थमित्यत्र यः पार्थिवः केवलधर्मेण अभूतिं अमङ्गल-मजयत्, पुनः श्रियं नाजयत् शत्रुकरादपहृत्य स्ववशां नाकरोत्, सोऽपि पृथिवीं न शास्ति॥

जिह्मं दत्त्वेत्यत्र लुब्धचेतसां क्षुद्राणां नीचानां जिह्मं कपटवचनं दत्त्वा निकृत्याऽपि राज्यं यो राजा लभते, स एव पृथिवीं शास्तीति पूर्वेण सम्बन्धः। शल्यकः शतसूचीभिराच्छादितसर्वाङ्गत्वात् शतसूचिसंज्ञितः पक्षिविशेषः॥

एवं बलवतामित्यत्र अतिबुद्ध्या अतिशयितबुद्ध्या सर्वं कार्यं भवति॥

सत्वेन कुरुते युद्धमित्यत्र सुबलवान् प्रमाणे धर्मशास्त्रे उत्साहादपि दुष्टान् प्रति युद्धं न कुरुते । गजतुरगादिसेनासन्नाहादपि उत्साहात् युद्धं न कुरुते, किन्तु सत्वेनैव युद्धं कुरुते । अतस्त्वमपि सत्वस्थो भव ॥

सत्वं हि मूलमर्थस्येत्यत्र प्रसक्तं प्रकर्षेण सक्तं स्थिरम् । सत्वाभावे अर्थार्जनमेव न । कथञ्चिदार्जने वृक्षच्छायावत् नित्यदा स्थिरं न भवेदिति भावः ॥

अर्थत्याग इत्यत्र श्रेयांसं भूयांसम् । बहुतरव्रीहिलाभाय भूमावल्प-बीजावापवत् बहुधनलाभाय अल्पार्थत्यागोऽपि कार्य इत्यर्थः ॥

अर्थेन तु सम इत्यत्र यत्र द्यूतादौ सकृत् धनोदयो लब्धः । पुनरर्थेन समः, सम इत्युपलक्षणम् । अधिकोऽप्यस्ति । विपणं अक्षग्लहम् । करकण्डू-यनं सकृत्सुखदायकम्, पश्चान्महादुःखकारणमित्यर्थः ॥

एवमेवेत्यत्र एवं बीजावापवत् ॥

मित्रैर्भिन्दन्ति तैर्मित्रैः सह भेदं कुर्वन्ति ॥

सत्वे न कुरुते युद्धमित्यत्र यः सत्वे सत्यपि । सः मात्राभिः अंशै-र्देवैरित्यर्थः । नञः प्रत्येकं सम्बन्धः ॥

यथा राजन्नित्यत्र सायं प्रातः पाति । मध्याह्ने औष्ण्याद्धन्ति ॥

अपेयात् गच्छेत् ॥

श्वदृतौ शुनश्चर्मकृतपात्रविशेषे ॥

अरिहा अरिणा चक्रेण अरीन् शत्रून् हन्तीति अरिहा नारायणः, स इव ॥

सृञ्जयैः सह कौन्तेयैरित्यत्र कौन्तेयैः कुन्त्याः सम्बन्धिभिः कुन्ति-भोजविषयस्थैरित्यर्थः ॥

इत्यारण्यके त्रयस्त्रिंशोऽध्यायः ।

---

## ।। चतुस्त्रिंशोऽध्यायः ।।

क्षरंस्तु दृष्ट्वेत्यत्र यथावत् शकुनेः कामानुलोमान् कामानुकूलान् युजः क्रीडास्थाने सम्बन्धं कुर्वाणान् अयुजः ममानुकूलतया सम्बन्धमकुर्वाणांश्च अक्षान् दृष्ट्वा क्षरन् हर्षक्षयं प्राप्नुवन् ॥

तत् भविष्यत् द्यूतम् । नः सभामागतानां सताम् ॥

आबुध्यन्ते यदि आबुध्यन्ते ॥

चरैश्च नोऽनाविदित इत्यत्र मदीयान् चरान् मोहयित्वा वञ्चयित्वा नः चरैः अनाविदितः अज्ञातः युक्तः भ्रातृभिर्युक्तः एतमज्ञातवासकालं यदि चरेथाः । पञ्चनद्यः परशुरामकृतस्यमन्तपञ्चकाख्यपञ्चनदसम्बन्धिन्यः ॥

तदैव चेद्वीर तथा करिष्य इत्यत्र यदा त्वं द्यूते परिघं पर्यमृक्षः परामर्शमकरोः, 'मृश परामर्शे' इति धातोः लुङीदं रूपम् । यदा बाहू दिधक्षन् फल्गुनेन वारितः । हे वीर तदैव चेत् यथा त्वमात्थ तथा करिष्ये । तदा इदानीं क्रियमाणसत्त्वे तदैव द्यूतकाले कृते सति दुष्कृतं अक्षक्रीडाख्यं दुष्कर्म करिष्यन् कः । अस्मासु दुष्कृतमपराधं च करिष्यन् कः, न कोऽपि ॥

विपस्येव रसमित्यत्र विदित्वेव लब्ध्वेवेत्यर्थः । याज्ञसेनीं प्रति यत् क्षान्तं, तद्दुःखं स्मृत्वा भूयोऽपि दूये ॥

न त्वद्य शक्यमित्यत्र शक्यं त्यक्तुं शक्यम् । कृत्वा समयं कृत्वा ॥

तथापि पूर्वं निकृतो हि क्षुद्रैरित्यत्र सपुष्पं प्राग्वाग्विवादादिपुष्पसहितं सफलं अन्ते प्राणापहाराख्यफलसहितं वैरं पूर्वमेव विवेकेन विदित्वा यो वीरः पौरुषेण विद्यमानेनापि महागुणं क्षमाख्यमहागुणं हरति आहरति ॥

मम प्रतिज्ञामित्यत्र मुनेर्धर्मात्, अमृतात् मोक्षात्, जीविताच्च कारणात्, मुनिधर्मत्वात् मोक्षदत्वात् जीवनसाफल्यहेतुत्वाच्चेति यावत् । मम प्रतिज्ञां सत्यां निबोध ॥

इत्यारण्यके चतुस्त्रिंशोऽध्यायः ।

## ॥ पञ्चत्रिंशोऽध्यायः ॥

सन्धिं कृत्वेत्यत्र पतत्रिणा पक्षिवत् सर्वत्र भ्रमता, स्रोतसा नदीप्रवाहवत् शीघ्रगामिना, प्रत्यक्षं सर्वहारिणा नरतुरगादिसर्वप्राणिनां प्राणहारिणा कालेन कालनामकेनान्तकेन मृत्युना सन्धिं कृत्वा तद्वशो भूत्वेत्यर्थः । कालं बहुकालं जीवामीति मन्यसे । फेनधर्मा फेनवच्छीघ्रं मरणशीलः, फलवत्कालान्तरे मरणशीलः फलधर्मा कालं मन्यसे इति पूर्वेणान्वयः ॥

सूच्या अञ्जनचूर्णानि वेति क्षणलवादिषु ईषदीषदायुःक्षयस्योपमा । प्रतिपालयेत् कालं प्रतिपालयेत् ॥

कालः मृत्युः ॥

यो न यातीत्यत्र प्रकृष्टेषु संख्यानं प्रसङ्ख्यानम् । अभूतिवर्धन इति पदच्छेदः ॥

यो न यातयत इत्यत्र न यातयते स्ववैरिषु न प्रापयति ॥

हैरण्यो भवत इत्यत्र हैरण्यः हिरण्यसम्बन्धी बहुसुवर्णदातेत्यर्थः । श्रुतिः कीर्तिः भवतीति उभयत्रापि सम्बन्धः ॥

हत्वा चेदित्यत्र निकर्तारं वैरिणं हत्वा चेत् स्वर्गेण प्राप्तेन वसुसम्मितः वसूनां सम्मितो भवति । नो चेत् अह्नाय शीघ्रं नरकं गच्छेत् ॥

आस्ते परमसन्तप्त इत्यत्र 'नुत्तनुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समा' इत्यभिधानात् नुन्नः शरेण विद्धः ॥

योऽयमेक इत्यत्र सर्वान् धनुर्भृतः अनु प्रति एक एव मीयेत 'माङ् मान' इति धातोः प्रमाणीक्रियेत, प्रमाणीकर्तुमलमित्यर्थः । ऊष्माणं उष्णश्वासम् ॥

इयमेका चेत्यत्र प्रतिविन्ध्यतः प्रतिविन्ध्यस्य माता द्रौपदी ॥

शीलदोषान् मार्दवाख्यस्वभावदोषान् । यां तितिक्षाम् ॥

अस्यां क्षत्रसम्बन्धिन्याम् ॥

अभितो नाशमात्मकानित्यत्र आ समन्ताच्छमात्मका न भवन्तीति नाशमात्मकाः तान् राजधर्मानिति पूर्वेण सम्बन्धः ॥

पीठसर्पवत् पीठाकारसर्पवत् ॥

छन्नमिच्छसीत्यत्र छन्नं छन्नं कर्तुम् । मर्तुं मारयितुम् ॥

अज्ञातचर्यागूढेन अज्ञातचर्यया गूढेन ॥

बृहत्साल इवावाप इत्यत्र 'आवाल आल्वालः स्यादावापः स्थानकं तथा' इत्यभिधानात् आवापे आलवाले श्वेतः हस्ती ऐरावतः ॥

न हि तेऽप्युपशाम्यन्तीत्यत्र निकृतीनां दर्शनेन न निराकृताः । तत्प्रियैषिभिः दुर्योधनप्रियैषिभिः अस्माकं कर्तव्यं अपकर्तव्यम् ॥

पूतीकामिवेत्यत्र पूतीकां पूतीकाख्यलतां अमृतवल्लीमित्यर्थः । सोमस्य सोमलतायाः । 'सोमाभावे पूतीकाग्रहणम्' इति वचनात् सोमलतायाः प्रतिनिधिभूतां पूतीकामिवेत्यर्थः ॥

अथवेत्यत्र साधवेऽपि साधुवाहिन इति सम्बन्धः ॥ अध्यायः ३५ ॥

आयत्यां च तदात्ये चेत्यत्र आयत्यां आये अतिरतिक्रमः तत्सम्बन्धी अत्ययः आयतिः । तस्याः आयतेः आत्ये अत्यये नाश इत्यर्थः । तं राजधर्मं यः पश्यति स एव पश्यति ॥

अपदान्तरमब्रवीदित्यत्र अपदान्तरं प्रत्युत्तररहितम् ॥

नारब्धव्यानीत्यत्रापि त्वरान्वितैरित्यावर्तनीयम् ॥

अवश्यं राजपिण्ड इत्यत्र राज्ञा दत्तवेतनरूपान्नपिण्डः निवेश्यः प्रत्युपकारेण निवेदनीयः ॥

अति सर्वानित्यत्र अति अत्येति ॥

मानसं मनसि विद्यमानम् ॥ अध्यायः ३६ ॥

गुरुवर्चेषु वर्तेत इत्यत्र वर्तेते दुर्योधनः ॥

त्वयि व्यपाश्रय इत्यत्र व्यपगतः इतोऽन्यः आश्रयो यस्य स तथोक्तः ॥

व्यपेक्षा सर्वभूतेष्वित्यत्र विशेषेण अन्येषामुपकारापेक्षा व्यपेक्षा, अन्येभ्यः विगता तद्धनाद्यपेक्षाऽपि व्यपेक्षा सैव कृपा दानं चेति स्मृतिरस्तीत्यर्थः ॥

मुष्टिग्रहणमादत्स्वेत्यत्र मुष्टौ ग्रहणं यस्य तन्मुष्टिग्रहणं हस्तगतमित्यर्थः॥

इदं दुःखतरं मन्य इत्यत्र विवासनात् इदं यदिदं दुःखं तत् दुःखेभ्यः नानादुःखेभ्योऽपि दुःखतरं मन्य इति योजना ॥

पुनराभवमित्यत्र अहं क्षत्रियकुले आ समन्तात् माऽभवमिति सम्बन्धः॥

ध्वंसिता इत्यत्र ध्वंसिता वयम् । अवतिष्ठते दुर्योधन इति योग्यपदाध्याहारः ॥

यदेतत् भाग्यमाह, तदिति सम्बन्धः ॥

सहस्राक्षं त्वा अदितिरिवेति सम्बन्धः ॥

शुष्मिणः वीर्यवतः ॥

हिमवन्तमतिक्रम्येत्यत्र गन्धेन मादयति हर्षयतीति गन्धमादनो हिमवत एव शृङ्गविशेषः ॥

विनीतक्रोधहर्षाणामित्यत्र विशेषेण नीतौ स्वतोऽन्यत्र प्रापितौ क्रोधहर्षौ येभ्यस्ते विनीतक्रोधहर्षाः तेषाम् ॥ अध्यायः ३७ ॥

यच्छ्रुत्वा नरसिंहानामित्यत्र नरसिंहानां नरश्रेष्ठानाम् । स्वेषां तादृशशौर्याभावाद्दैन्यम् । पार्थानां पृथ्वीसम्बन्धिनां राज्ञाम् ॥

दीर्घां च विपुलावर्तामित्यत्र दीर्घां दीर्घिकाम् ॥

सदोपस्पर्शनादित्यत्र उपस्पर्शनं उदकस्पर्शनम् ॥

धूमापयन् दिश इत्यत्र धूममापयन् प्रापयन् धूमापयन् ॥

यथास्वं स्वमाश्रममनतिक्रम्य यथास्वम्॥ अध्यायः ३८ ॥

ममार राक्षसं रूपमित्यत्र मृतिसमये राक्षसं रूपं मूलरूपं कृत्वा ममार ॥

कामात्परिभवाच्चापीत्यत्र परिभवात् मम परिभवं प्रापय्य ॥ अ० ३९ ॥

शक्राभिषेके सुमहदित्यत्र खाण्डववनदाहसमये शक्रेण अभिषेके मेघजलैः सेचने कृते सतीत्यर्थः । शस्ताः हिंसिताः ॥

त्वत्प्रधानमरिन्दमेत्यत्र त्वत्तः प्रधानं श्रेष्ठमित्यर्थः ॥

त्वत्प्रसादाद्विनिर्वृत्ते इत्यत्र विनिर्वृत्तं विशेषेण निर्वृ(तः)त्तः सुखी भवामि ॥

मनसा चक्षुषा वाचेत्यत्र मन्त्रं स्मृत्वा नष्टो भवत्विति ध्याने मनसा, मन्त्री भूत्वा दर्शने चक्षुषा, नष्टो भवेति कथने वाचा ॥

यथा त्र्यक्षमुमापतिमित्यत्र यथा यथावत् ॥

स्पृष्टं स्पर्शनं तेन ॥ अध्यायः ४० ॥

क्षात्रं चाग्निसमस्पर्शमित्यत्र क्षात्रं क्षत्रसम्बन्धि तेजश्च सुसम्भृतम् ॥

लघ्वी वसुमतीत्यत्र वसुमती भूमिः लघ्वी गतभारा ॥

तारकामये द्रष्टृचक्षुस्तारकाणामामयो यस्मात्तस्मिन् ॥

कुन्तीमातरित्यत्र कुन्ती माता यस्य स तथोक्तः ॥ अध्यायः ४१ ॥

एतद्ब्रह्मशिरोनाम रौद्रं भीमपराक्रममित्यत्र पाशुपतास्त्रस्य ब्रह्मशिरोनामेति कथनात् पशुपतिना साधितं गायत्र्यर्थभूतनारायणास्त्रमेव पाशुपतास्त्रम् ॥

मन्दरं शैलराजमित्यत्र मन्देन पुण्यजलेन रमयति ऋष्यादीनिति मन्दरः, मन्देन वायुना राति वृक्षादीनिति मन्दरः, मन्दान् पशुपक्ष्यादीनपि रमयतीति वा मन्दर इन्द्रकीलः ॥

ललितं नगसत्तमेत्यत्र ललितं यथा भवति तथा ॥ अध्यायः ४२ ॥

साम्ना परमफल्गुनेत्यत्र परं केवलं अफल्गुना श्रेष्ठेन साम्नैव गाथा गायन्ति, तुम्बुरुः श्रेष्ठो येषां ते ॥ अध्यायः ४३ ॥

तां दृष्ट्वाऽविदिते हृष्ट इत्यत्र अविदिते एकान्ते ॥

पादावद्य प्रपद्यतामित्यत्र भवती तस्य पादौ प्रपद्यतां गच्छतु ॥

स्नानालङ्कारनैपथ्यैरित्यत्र 'आकल्पवेषौ नेपथ्यम्' इत्यभिधानात् अलङ्कारैः वस्त्रालङ्कारैः, नैपथ्यैः भूषणैः ॥

ववल्गतुः चकम्पाते ॥

गूढगुल्फशिरौ पादावित्यत्र 'नाडी तु धमनिः शिरा' इत्यभिधानात् गूढा गुल्फयोः शिरा नाडी ययोस्तौ ॥

किङ्किणीकिणावित्यत्र किङ्किणीनां सङ्घर्षणात् व्रणाकाररक्तरेखावन्तौ॥

शीधुपानेनेत्यत्र 'मैरेयमासवः शीधुः' इत्यभिधानात् अल्पेन शीधु-पानेन मद्यपानेन ॥

सर्वाप्सरस्समस्यास्वित्यत्र 'समस्या तु समासार्था' इति वचनात् सर्वाप्सरसां गूढार्थकमिथोवार्तासु ॥

देववारा वरानने इत्यत्र देवानां वाराः चन्द्रादित्यादयः वाराः सङ्केतिता याभिस्ता देववाराः, देवानां वाराङ्गना इत्यर्थः ॥

पितरः सोदरा इत्यत्र तपसा इह स्वर्गे आगता इति सम्बन्धः ॥

सुपुत्राऽद्य पृथा तातेत्यत्र त्वया पृथा कुन्ती सुपुत्रा शोभनपुत्रवती॥

अपुंसाऽऽत्म्येन वै भवेत्यत्र आत्म्येन आत्मनः सम्बन्धी आत्म्यः पुमान्न भवतीत्यपुमान् तेन अपुंसा वेषेण भव ॥

कृतवान् शक्रसदन इत्यत्र कृतं सुकृतं तद्वान् ॥

य इदममरवरात्मजस्येत्यत्र इदं शापाशङ्कनं धृतिं कामजयं च ॥

अध्यायः ४४ ॥

प्रतिगृह्य प्रतिग्राह्य ॥

तेन कार्यं महद्ब्रह्मन्नित्यत्र तेन कपिलात्मककल्पेन ॥ अध्यायः ४५ ॥

यस्य धर्मराजस्य ॥

अस्यतः कर्णिनाराचानित्यत्र कर्णे एषां वर्तेत इति कर्णिनः आकर्णान्ताकृष्टा इत्यर्थः । ते च ते नाराचाश्च ॥

तस्य गाण्डीवधन्वनः युधि[1] योधिनं अर्जुनं यः अभियात्, तं न पश्यामि ॥

---

[1] युधि एनं अर्जुनं.

सर्वेऽपि अस्त्रविदः, सर्वे महद्यशः प्राप्ताः, सर्वेऽपि परैः शत्रुभिरजिताश्च। अत एव ते सर्वे एकैकस्य सर्वेभ्यः ईश्वरत्वं न वाञ्छेरन् । समानस्कन्धत्वादिति भावः ॥

अस्ताः 'असु क्षेपण' इति धातोः प्रयुक्ताः ॥

तप्यन्ति मे सुतानित्यत्र मे सुतान् तप्यन्ति । तृप्यतीतिवत् तप्यतीत्यपि पदम् । तपन्तीत्यर्थः ॥

अपीमां रथघोषेणेत्यत्र इमां महीं सर्वतः विदीर्णेवेति सम्बन्धः ॥

य उद्धरन् प्रवपन्नित्यत्र उद्धरन् बाणान् प्रवपंश्च, तथा आततायी 'आततायी वधोद्यत' इत्यभिधानात् शत्रुवधोद्यतो यः किरीटी ॥

दुर्योधनं प्रति दुर्योधनमुद्दिश्येत्यर्थः । तथ्यमनतिक्रम्य वर्तमानं यथातथ्यम् ॥

एकादशतनुः स्थाणुरित्यत्र रुद्राणामेकादशत्वात् एकादश तनवो यस्य स तथोक्तः ॥ अध्यायः ४६ ॥

कृष्टं कृपिसम्बन्धि कलमादिधान्यम् ॥ अध्यायः ४७ ॥

शैक्यया वीरघातिन्येत्यत्र शैक्यया शिक्यसम्बन्धिन्या शिक्योपरि बद्धा स्थापितयेत्यर्थः । 'भारयष्टिस्तदालम्बः शिक्यं काच' इत्यभिधानात् ॥

समभावयदच्युत इत्यत्र समभावयत् सम्भावयामास ॥

केसरिणः कोपादुन्नम्रकेसरवतः सिंहानित्यर्थः ॥ अध्यायः ४८ ॥

यस्य प्रभावान्न मयेत्यत्र प्रभावात् सामवचनसामर्थ्यात् अमुं लोकं परलोकम् ॥

सहामहे भवन्मूलमित्यत्र भवन्मूलं भवानेव मूलं यथा भवति तथा ॥

अवप्लुताः अधः पातिताः ॥

माऽस्मान्विनशनः पथ इत्यत्र विनशनः विशेषेण नशनं नाशो यस्मात्स विनशनः मा भूरिति सम्बन्धः ॥

'दीर्घसूत्रश्चिरक्रिय' इत्यभिधानात् दीर्घसूत्रः चिरेण कार्यकारी ॥

कृपणं बह्वभाषतेत्यत्र कृपणं यथा भवति तथा ॥

नास्ति राजा मया कश्चिदित्यत्र मया समः अल्पभाग्यतरः कश्चिन्नास्तीति सम्बन्धः ॥

पुष्करेण पुष्कराख्यराज्ञा ॥ अध्यायः ४९ ॥

अग्निरात्मभवमित्यत्र आत्मनः भवः सत्ता तम् ॥

यमस्त्वन्नरसमित्यत्र यमः अन्नरसं अन्नाभावेऽपि अन्नास्वादनाज्जातसत्वम्, रसवदन्नरचनासामर्थ्यं वा ॥

अपां पतिरपां भावमित्यत्र अपां भावं यत्र गिरिगह्वरादौ नैषधः नलः अतितृषावशादुदकं वाञ्छति तत्र अकस्मादपामुदकानां भावं स्थितिम् ॥

अध्यायः ५४ ॥

गवां पुष्करमब्रवीदित्यत्र गवां अधिपं पुष्करं पुष्कराख्यं द्वापरम् ॥

अध्यायः ५६ ॥

वार्ष्णेयं नलशासनादित्यत्र वार्ष्णेयं वृष्णिकुलोत्पन्नं सूतं सारथिम् ॥

रथमारोप्य मिथुनमित्यत्र मिथुनं स्त्रीपुंसरूपं पुत्रद्वयम् ॥

वाहिना वाहवता रथेन ॥ अध्यायः ५७ ॥

पाणः पणः ॥

अस्ति भक्ष इत्यत्र अद्य पक्षिणां मांसस्य भक्ष्यत्वात् भक्षोऽप्यस्ति। हिरण्यपक्षत्वात् इदमेव वसु च भविष्यतीति योजना ॥

ततस्तानुत्तरीयेणेत्यत्र उत्तरीयेण स्वधृतैकवस्त्रोत्तरभागेन ॥

तस्योत्तरीयमादायेत्यत्र उत्तरभागसहितस्वधृतवस्त्रं बलादादाय। अन्यथा प्रागुक्तैकवस्त्रत्वायोगाद्वक्ष्यमाणनग्नत्वायोगाच्च ॥

आगता न हीत्यत्र सवाससि त्वयि गते शति नः प्रीतिर्न हि ॥

अध्यायः ५८ ॥

सालवेणुधरेत्यत्र धरानामकः कश्चिद्वृक्षः ॥

उदर्कः महोत्कर्षः ॥ अध्यायः ५९ ॥

तमेकवसनमित्यत्र द्वितीयाविभक्तेः अपहाय गच्छन्ती न भवतीत्यनपगेति पूर्वेण सम्बन्धः ॥ अध्यायः ६३ ॥

पुनर्लब्धेवेत्यत्र मेदिनीं पुनर्लब्ध्वा पुरुष इव ॥ अध्यायः ६५ ॥

सहजा विप्लुडुत्तमेत्यत्र विप्लुट् बिन्द्वाकारेण वर्तुला रक्ततिलकोपमा रेखा ॥

व्यभ्रे मेघरहिताकाशे ॥

भार्गस्वरिरुपस्थित इत्यत्र भृगुस्वरस्यापत्यं पुमान् भार्गस्वरिः ऋतुपर्ण इत्यर्थः ॥

श्यामा न क्रोद्धुमर्हतीत्यत्र श्यामा यौवनमध्यस्था॥ अध्यायः ६६ ॥

पृथुप्रोथान्महाहनूनित्यत्र 'स्त्रियां स्फिजौ कटिः प्रोथ उपस्थो वक्ष्यमाणयोः' इत्यभिधानात् पृथुः पुष्टः प्रोथः कटिप्रदेशः ॥

वक्ष्यन्तीमे हयोत्तमा इत्यत्र वक्ष्यन्ति वहिष्यन्ति ॥ अध्यायः ६७ ॥

फलवन्तं विभीतकमित्यत्र विभीतकं तारावृक्षम् । तारावृक्षदर्शनमात्रेण वृक्षस्थानां पतितानां च पत्रफलानां संख्यां ऋतुपर्णः सकृदेवोक्तवानिति ऋतुपर्णस्य संख्याकौशलमत्र वर्ण्यते । तत्रायं विवेकः— सकलशाखोपेतवृक्षस्य पतितपत्रफलाभ्यां सह एकपत्राधिका पत्राणां कोटिः, एकफलाधिका फलानां कोटिः । शाखाद्वये तु स्थितपत्राणां फलानां च गणने क्रियमाणे पञ्चशतोत्तरे द्वे सहस्रे इति ॥ अध्यायः ७० ॥

संलक्ष्यं ते हि चेष्टितमित्यत्र ते त्वया चेष्टितं नलचरित्रं संलक्ष्यं सम्यग्लक्षयितुं योग्यं हि ॥

छन्देन चोदकं तस्येत्यत्र आवर्जितं ईषदप्युदकेन वर्जितं पात्रं उदकं उदकवत् ॥ अध्यायः ७३ ॥

काल्यं उपःकालः ॥ अध्यायः ७५ ॥

तस्य जिष्णोर्वृसीमित्यत्र 'व्रतिनामासनं वृसी'त्यभिधानात् दर्भमयासनं वृसीत्युच्यते ॥ अध्यायः ७९ ॥

अकल्कको निरारम्भ इत्यत्र अकल्ककः कल्को नाम पादश्रमक्षुत्पिपासादिश्रमपरिहाराय कृतौषधविशेषः, तद्रहित इत्यर्थः ॥

अनुपोष्य त्रिरात्राणीत्यत्र एकैकस्य मासस्य आदौ अन्ते मध्ये च एकादश्या रात्रित्रयं अनुपोष्येत्यर्थः ॥ अध्यायः ८१ ॥

दण्डेनैकं नराधिपेत्यत्र दण्डो दण्डप्रणामः ॥

प्राणायामैर्निभा यान्तीत्यत्र निभाः नितरां भा प्रभा येषां ते निभाः ॥

नैनः श्वोमरणं तरेदित्यत्र ना पृथूदके देहत्यागी पुरुषः श्वः मरणं यस्मात्तदेनस्तरेत् । पुनर्जन्माभावात् पुनर्मरणमपि नास्तीति भावः॥ अ० ८२ ॥

श्यामाकाः सावे इत्यपभ्रंशभाषा ॥

अन्तरिक्षे च पुष्करमित्यत्र अन्तरिक्षे देवर्ष्यादिजनसङ्कुलान्तरिक्षे पुष्करं स्तूयत इत्यर्थः ॥ अध्यायः ८३ ॥

कूर्मरूपेण राजेन्द्रेत्यत्र आसुरेण ह्रियमाणा मही मन्दरगिरिरूपा मही महात्मना कूर्मरूपेण विष्णुना उद्धृतेति योजना ॥

तीर्थकोट्यां युधिष्ठिरेत्यत्र युधि युद्धे स्थिर भीष्म ॥ अध्यायः ८४ ॥

वप्तुकाम इवाम्बुदमित्यत्र वप्तुं बीजावापं कर्तुं कामो यस्य स कृषीवल इव ॥ अध्यायः ८५ ॥

शामित्रं च विवस्वत इत्यत्र शमितुः शान्तस्य भावः शामित्रं विवस्वतः सूर्यस्य ॥ अध्यायः ८६ ॥

वानीरवनमालिनीत्यत्र 'वानीरो वञ्जुलः शीत' इत्यभिधानात् वानीरवनं वेत्रवनम् ॥ अध्यायः ८७ ॥

प्राणिनोऽभोक्तुमीप्सव इत्यत्र अभोक्तुमीप्सवः के ॥ अध्यायः ९४ ॥

समाह्वयति यं वाचेत्यत्र यं पक्कीकृत्य ब्राह्मणैर्भुक्तं अत एव वैवस्वत-क्षयं गतं मृतं अनुजं वातापिम् ॥

गच्छन्त इव किङ्करा इत्यत्र आर्तं दृष्ट्वा किं करोमीति विचारयन्तः कृपालवः किङ्कराः ॥

स चापि जनयामासेत्यत्रोक्तमेव प्रमेयं विस्तरेणाह—ततः प्रसव-सन्तानमिति। प्रसवस्य सन्ततेः सन्तानं विस्तारम् ॥ अध्यायः ९५ ॥

ततो वायुः प्रादुरभूदित्यत्र वायुः अन्ने जीर्णे सति जायमानः फूत्कारवायुः ॥

विद्वान् साधुरित्यत्र तृतीया पञ्चम्यर्थे। असाधुभ्यः बहुभ्यः विद्वान् एकोऽपि श्रेयान् ॥ अध्यायः १०० ॥

कोकिलैर्जीवजीवकैरित्यत्र जीवजीवकैः जीवञ्जीवकाख्यैश्चकोरैः ॥

किञ्चिद्ददामि त इत्यत्र किञ्चित् यत्किञ्चित् ॥

गगनाच्च्युतं यथा भवति तथा पतन्त्याः ॥ अध्यायः १०८ ॥

क्वचिदाकाशमित्यत्र आकाशं आवर्तान्तस्स्थिताकाशं संक्षिपन्ती क्रमेण संकुचितं कुर्वन्ती ॥ अध्यायः १०९ ॥

मा शब्दमित्युवाच स तापस इत्यत्र शब्दं मा कुरु ॥

कृतानि कानिचिदित्यत्र स्वतपोविघ्नकृतां निवारणाय कानिचित् अग्नि-वायुमेघादीनि कृतानि अङ्गीकृतानि। कानिचित् मेघवाय्वादीनां गर्जनादीनि प्रतिषिद्धानीति विवेकः ॥

निमित्तान्तरं चाह—नन्दामित्यादिना ॥ अध्यायः ११० ॥

तेन कामादित्यत्र कामात् अर्थलोभात् ॥

चारमुख्यान्महीपतिरित्यत्र चारमुख्यान् चारश्रेष्ठान् ॥ अ० १११ ॥

तास्तु नाव्याश्रममित्यत्र नाव्याश्रमं नावि आश्रमसमीपस्थे नदीप्रवाहे नौकायामाश्रमं चक्रुः ॥

क्रुद्धो भवानित्यादिपुँल्लिङ्गसम्पादनं स्त्रीत्वाज्ञानादिति ज्ञेयम् ॥

. कौश्यां कुशमय्याम् ॥ अध्यायः ११२ ॥

तीर्थेषु तेष्वम्बुधरोत्तमस्येत्यत्र अम्बुधरोत्तमस्य समुद्राम्बुधारिषु उत्तमस्य सकलसमुद्राम्बुपानकर्तुरित्यर्थः ॥

यो दन्तकूप इत्यत्र दन्तकूपे दन्ताभ्यां वराहदंष्ट्राभ्यां कूपः तुङ्गभद्रोत्पत्तिस्थानरूपः यत्र तस्मिन् दक्षिणदेशे ॥ अध्यायः १२० ॥

चपालाश्च प्रतिष्ठिता इत्यत्र 'चपालो यूपकटक' इत्यभिधानात् चपालाः यूपालङ्कारभूतसौवर्णकटकाः । यज्ञस्येति पाठे यज्ञसाधनयूपस्य ॥

अध्यायः १२२ ॥

ग्रहीष्यन्तं तु तं सोममित्यत्र उपरि ग्राहयन् ग्रहीष्यन् तं ग्रहीष्यन्तम् ॥ अध्यायः १२५ ॥

सृक्किणी लेलिहन्मुहुरित्यत्र 'प्रान्तावोष्ठस्य सृक्किणी' इत्यभिधानात् सृक्किणी उत्तराधरोष्ठयोः प्रान्तौ ॥

सौद्युम्निः युवनाश्वः ॥ अध्यायः १२६ ॥

ततः स कालमगमदित्यत्र कालं मृत्युम् ॥ अध्यायः १२९ ॥

अत्रानुवंश्या इत्यत्र आनुवंश्याः वंशोचिताः कथाः ॥

उलूखलैराभरणैरित्यत्र पिशाचीत्वात् कण्ठलग्नैरुलूखलाख्यैराभरणैः ॥

एतद्धि मे दिवावृत्तमित्यत्र मे दिवावृत्तं एतत् क्षमारूपम् । रात्रौ चेद्वत्स्यसि तर्हि वृत्तं अतः क्षमातः अन्यथा क्रोधरूपं इति राज्ञो वचनम् ॥

यूपोलूखलिनस्तत्रेत्यत्र यज्ञसाधनयूपेन यज्ञसाधनसौवर्णोलूखलेन च सहिताः यूपोलूखलिनः ॥ अध्यायः १३० ॥

यमक्रीर्यत्र शान्तवानित्यत्र यमं प्रति कीरीवत् शुकीवत् आर्तस्वरं कुर्वन् वसिष्ठः यमक्रीरीत्युच्यते ॥

औशीनरो वै यत्रेत्यत्र औशीनरः शिबिः ॥ अध्यायः १३१ ॥

न तैः क्रोधाद्व्याधिना वोत्तमेनेत्यत्र विशेषेण आधिः मनस्सन्तापो व्याधिः ॥

सरस्वतीमीरयेत्यत्र सरस्वतीं ॐकाररूपामिति भावः ॥

शाल्मली संप्रवृद्धेत्यत्र शाल्मलीति कण्टकितः स्थूलो वृक्षविशेषः ॥

शेष्यतेऽद्य मयेत्यत्र शेष्यते शयनं करिष्यति ॥

षण्णाभेर्द्वादशा(क्ष)रस्येति श्लोकस्यायमर्थः— षण्णाभेः षड्ऋत्वाख्य-नाभेः, द्वादशा(क्ष)रस्य द्वादशमासाख्या(क्ष)रसहितस्य, द्वादशामावास्याः द्वादश पौर्णमास्यश्चेति चतुर्विंशतिपर्वणः, त्रिषष्टिशतारस्य षष्टिसहितत्रिशतदिवसाख्या-रसहितस्य कालचक्रस्येत्यर्थः ॥

सदागति सदा परिभ्रमणवत् ॥

वडवे इव सम्पृक्ते इत्यत्र श्यैन्ये उत्तरायणदक्षिणायनाख्ये दिवौकसां पाते सन्निपाते स्तः ॥

मा स्म भूः स्वगृह इत्यत्र हे राजन् स्वगृह एव मा स्म भूः । किन्तु शाल्वाणामपि संहर्ताऽभूः इति राज्ञः स्तुतिः । उत्तरमाह— वातसारथिः निदाघकालीनोऽग्निः आहर्ता गर्भमाहर्ता । उत्तरायणनिदाघकाले सूर्यकिरणैः जलानां निदाघान्तर्निवेशनादिति भावः । उभे मिलित्वा कं वर्षधारारूपं जलं सुषुवतुः ॥

किंस्वित्सुप्त इत्यत्र अण्डजातं पक्षिकुलीनं उत्पति ऊर्ध्वं पतनवत् ॥

मत्स्यः सुप्त इत्यत्र अण्डजातं अण्डाकारेण विद्यमानम् ॥ अ० १३३ ॥

अग्न्यादिकं सर्वमेकमेवेति वन्दिना उक्ते सति ऐक्यवादिनं प्रति भेद-वादिवत् द्वावेवेत्युत्तरमाह—द्वावित्यादिना ॥

त्रिः सूयत इत्यत्र धान्यादौ पितरि मातरि चेति त्रिरित्यर्थः । त्रयो वेदाः, अध्वर्यवः सूर्यचन्द्राग्न्याख्याः, त्रिसवनानि अहोरात्रे सन्ध्याकालं चेति ॥

चतुष्टयमित्यत्र चतुष्टयं वेदचतुष्टयम् । चत्वारो वेदाः । तस्मात् त्रिरि-त्यादिकं 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुतेन सम्पूर्णत्वमिति भावः ॥

नवैवोक्ताः सामिधेन्य इत्यत्र सामिधेन्यः सन्निधानस्थानानि ॥

दशाः अवस्थाः दश ॥

त्रयोदशाहानीत्यत्र केशी केशिनी दमयन्त्या दूती वाहुकनामतया स्थितनलस्वरूपविवेचनार्थं त्रयोदशाहानि ससार । आदीनि मुख्यानि च्छन्दांसि त्रयोदश आहुः ॥ अध्यायः १३४ ॥

श्लेष्मातक इत्यत्र 'शेलुः श्लेष्मातकः शीत' इत्यभिधानात् श्लेष्मातकः अपवित्रवृक्षविशेषः, तद्वत् स्थित इत्यर्थः ॥

पुत्रो जनक जायत इत्यत्र जनकेति राज्ञः सम्बुद्धिः । पुत्रः पितुरुद्धर्ता जायते ॥

सितेन ते परशुनेत्यत्र सितेन ते परशुना पुण्यकीर्त्याख्यपरशुना ॥

उक्थ्यं उक्थनामकमुख्यप्राणसम्बन्धि ॥ अध्यायः १३५ ॥

समङ्गा सम्प्रकाशत इत्यत्र समङ्गा समङ्गानाम्नी नदी ॥

यवक्रीतो व्यनश्यतेत्यत्र भारद्वाजः भरद्वाजपुत्रः यवक्रीतः यवक्रीतनामकः, यवक्रीरिति तस्यैव नाम ॥ अध्यायः १३६ ॥

निमित्तं महर्षिरित्यत्र अस्य ऋषिपुत्रस्य निमित्तं जीवननिमित्तं महीतलं महर्षिर्भेदयामास । महीतलवत् पर्वतवत् मत्पुत्रः जीवतु इति खलु वरः । महीतलस्य भेदने पुत्रस्यापि मरणं न्याय्यमभूदिति भावः ॥ अध्यायः १३७ ॥

महद्भिः पृषतैरित्यत्र 'पृषन्ति विन्दुपृषतौ' इत्यभिधानात् पृषतैः जलविन्दुभिः ॥ अध्यायः १४५ ॥

शूद्राश्च कृतलक्षणा इत्यत्र कृतलक्षणाः कृततप्तचक्रशङ्खादिलाञ्छनाः ॥ अध्यायः १५१ ॥

जिह्वानाममृतं धर्म इत्यत्र 'अमृतं यदयाचितम्' इति वचनात् अयाचिता वृत्तिरमृतम् ॥ अध्यायः १५२ ॥

कदर्थीकृत्येत्यत्र कदर्थीकृत्य तुच्छीकृत्य ॥ अध्यायः १५५ ॥

पुराऽसौ नापराध्नातीत्यत्र अपराध्नाति अपराधं करोति ॥ अ० १५६ ॥

भारिकः समपद्यत इत्यत्र 'भारवाहस्तु भारिक' इत्यभिधानात् भारिकः दैत्यस्य शिरसि भारं दिशन् ॥

आस्थानं त्वयि मे नास्तीत्यत्र आस्थानं आस्था विश्वास इत्यर्थः ॥

बडिशोऽयं त्वया ग्रस्त इत्यत्र 'बडिशो मत्स्यबन्धनं' इत्यभिधानात् बडिशः मत्स्यबन्धनमित्यर्थः ॥

तत्रास्नेणोदकक्रियामित्यत्र 'रुधिरेऽसृग्लोहितास्नरक्तक्षतजशोणितं' इत्यभिधानात् अस्नं रक्तम् ॥ अध्यायः १५७ ॥

सुखोदर्कमिमं क्लेशमित्यत्र सुखादुदर्क उत्कृष्टं सुखोदर्कम् ॥

न्यासभूतान् यथाकालमित्यत्र नितरां आसः अस्मत्समीपे आसनं येषां ते न्यासभूताः ॥ अध्यायः १५९ ॥

सर्वशैक्यायसीं गदामित्यत्र सर्वं सर्वाङ्गं शैक्ये शिक्ये यस्याः, सा च सा आयसी च ॥

न्यष्ठीवताकाशगत इत्यत्र न्यष्ठीवत निष्ठीवनमकरोत् ॥ अ० १६१ ॥

अंसे प्राध्वदित्यत्र प्रकर्षेण आ सम्यक् ध्वत् पातयन्, स्थापयन्नित्यर्थः ॥

ऐरावणपथे यतामित्यत्र ऐरावणाख्यः कुबेरसखा, तस्य पथे यतां गच्छताम् ॥ अध्यायः १६३ ॥

अभ्यवर्तत अभिययौ ॥

अस्तं पर्वतराजानमित्यत्र मेरोः प्राचींदिशि स्थितानां अस्तमयपर्वतम् ॥ अध्यायः १६४ ॥

प्रियायै श्रुतसोममात्र इत्यत्र पञ्चकुमारेष्वेकः श्रुतसोमाख्यः तस्य माता द्रौपदी तस्यै ॥ अध्यायः १६५ ॥

स वर्पवान्महाकाय इत्यत्र वर्पवान् शरवर्पवान् ॥

स्थूणाकर्णमयोभाजमित्यत्र स्थूणावत् कर्णौ अयसः पार्श्वदेशौ यस्य तम् ॥

हित्वा मृगतनुमित्यत्र मृगयोः लुब्धकस्य तनुम् ॥

अमरत्वमपाहायेत्यत्र अमरत्वं मर्त्यदेहेन सहैव अमरत्वम् ॥ अध्यायः १६७ ॥

यथा शरदि लक्षणा इत्यत्र 'हंसस्य योपिद्वरटा सारसस्य तु लक्षणा' इत्यभिधानात् लक्षणाः सारसपक्षिणां पत्न्यः, शरदि जलह्रासे सति रोदनं कुर्वन्ति, तद्वदित्यर्थः ॥ अध्यायः १७२ ॥

त्रिकूबरं समुद्रं चेत्यत्र मुद्रया रथलक्षणेन सहितं समुद्रम् ॥

त्रिभिर्वंशैस्त्रिवेणुकमित्यत्र त्रिवेणुकं त्रिध्वजसहितम् ॥ अ० १७६ ॥

समीपवासेन विलोभितास्त इत्यत्र अज्ञातवासाय अपकृष्टदेशान् बहुदूरगतान्मत्वा समीपवासेन विलोभिताः वञ्चितास्ते अस्मान्न ज्ञास्यन्ति ॥ अध्यायः १७७ ॥

मेघानामिव वागुरा इत्यत्र 'वागुरा मृगबन्धिनी' इत्यभिधानात् वागुराः बन्धनरज्जव इव स्थिताः ॥

स्फिजा तं क्षुधितो भृशमित्यत्र 'स्त्रियां स्फिजौ कटिः प्रोथ' इत्यभिधानात् स्फिजा कट्या तं भीमसेनम् ॥

भुजयोर्न स मंसत इत्यत्र सः सर्पः भीमसेनस्य भुजयोः तद्बलं न मंसत अमंसत, अमंस्तेत्यर्थः । वरादिबहुसत्वसूचनाय एकवचनस्थाने बहुवचनम् ॥ अध्यायः १७८ ॥

क्वचिद्दानप्रयोगादित्यत्र सत्यकथने सति कस्याप्यनिष्टं न भवति चेत् दानादपि सत्यमेव विशिष्यते । चोरेण हिंसार्थं ब्रह्मणान्वेषणे क्रियमाणे सत्यवचनेन हिंसाप्राप्तेः तादृशस्थले सत्यादपि दानमेव विशिष्यते ॥

अदृष्टेन तत इत्यत्र अदृष्टेन अगस्त्यहृदयान्तस्स्थितेन अदृष्टेन ब्रह्मणा ॥ अध्यायः १८३ ॥

सर्वतः प्रेक्ष्य गृध्यत इत्यत्र सर्वतः सतः सर्वं गृध्यतः आकाङ्क्षमाणान् 'गृधु अभिकाङ्क्षायाम्' इति धातुः ॥

दुरात्मानोऽपतापिन इत्यत्र अपतापिनः पश्चात्तापरहिताः । नाथन्तः याचन्तः 'नाथृ याच्ञायाम्' इति धातुः ॥ अध्यायः १८४ ॥

सुभिक्षान्यचितोऽद्भव इत्यत्र सुभिक्षं यथा भवति तथा अन्नी अन्नवान् सुभिक्षान्नी, बभ्रुः कामधेनुः ॥ अध्यायः १८७ ॥

यच्चापि वाक्यमित्यत्र वाक्यं यज्ञे विनियुक्तमन्त्ररूपम्, वानस्पत्यं समिदादिरूपम्, पायसं पयस्सम्बन्धि दधिघृतादिरूपम्, पार्थिवं व्रीहियवादिरूपम् ॥

प्रत्ययात् श्रद्धारूपविश्वासाच्च व्यायच्छन्ते उपदिशन्ति ॥

तं वै परमित्यत्र स्वाध्यायदानव्रतपुण्ययोगैः तं मोक्षं प्रपन्ना भवन्ति ॥

तस्य मोक्षस्य, वेतसः ज्ञानानन्दमयः नदीकर्दमसम्भूतः तृणगुल्मविशेषः । 'नादेयी चाम्बुवेतस' इत्यमरः । सरितः सूक्ष्मप्रकृत्यंशमया अनाद्यनन्तकालेऽपि विद्यमाना मुक्तोपभोग्यनद्यः मधूदकप्रस्रवणाः मध्वेव उदकं तस्य प्रस्रवणं यासु ताः ॥

अध्यायः १८८ ॥

अरञ्जले प्राक्षिपदित्यत्र अरं अलं जलं यस्मिन् पूर्यते तदरञ्जलम् । 'अरञ्जलः स्यान्मणिकः कर्कर्यालुः' इत्यभिधानात् जलपूरणपात्रविशेषः । रञ्जणिगे इत्यपभ्रंशभाषा ॥

समुद्रमहिषीं गङ्गामित्यत्र समुद्रमहिषीं समुद्रपत्नीम् ॥

आसीद्यथेष्टहार्य इत्यत्र यथेष्टहार्यः सुखेन हर्तुं नेतुं शक्यः ॥

सम्प्रक्षालनकालोऽयमित्यत्र लोकानां पातालादिभूपर्यन्तलोकानां सं सम्यक् प्रक्षालनं जले निमज्जनम् । 'यच्चेङ्गं यच्च नेङ्गति । तस्य सर्वस्य सम्प्राप्तः कालः परमदारुण' इति वचनात् लोकस्थप्राणिनां नाशोऽस्ति । 'ततो हिमवतः शृङ्गं यत्परं' जलादुपरि विद्यमानं इति वचनात् उत्तुङ्गहिमवदादिपर्वतशृङ्गात् अधो भाग एव समुद्रजलकल्लोल इति सूचितम् ॥

चराणां स्थावराणामित्यत्र यत् इङ्गं 'इङ्ग चेष्टायाम्' इति धातोः चेष्टावत् ॥

युक्तवटाङ्कुरेत्यत्र युक्तः वटाङ्कुरः दीर्घरज्ज्वाकारेण स्थिता वटशिफा यस्यां सा ॥

आपृच्छास्मिन् व्रजाम्यहमित्यत्र अस्मिन् उडुपे मामापृच्छ तत्वानि विचारय ॥

चकर्ष तन्त्रित इत्यत्र तन्त्रितः नौकाधीनः सन् ॥ अध्यायः १८९ ॥

नैकं युगसहस्रान्ता इत्यत्र एकं न भवति यथा नैकं बहव इत्यर्थः ॥

तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परमित्यत्र तावच्छती चतुःशती सन्ध्या सन्ध्याया मध्यमभागः । ततः सन्ध्यातः परं उपरि पूर्वं च सन्ध्यांशोऽपि तावच्छती पूर्वं द्विशती पश्चात् द्विशती इत्यर्थः ॥

त्रीणि वर्षसहस्राणीत्यत्र तावच्छती त्रिशती सन्ध्यांशः, पूर्वं सार्धशतं पश्चात्सार्धशतमित्यर्थः ॥

तस्यापि द्विशतीत्यत्र पूर्वमेकशतं पश्चादेकशतं सन्ध्यांश इत्यर्थः ॥

तस्य वर्षशतमित्यत्र पूर्वं पञ्चाशत् पश्चात्पञ्चाशत् सन्ध्यांश इत्यर्थः ॥

एतत्सहस्रमित्यत्र एतत्सहस्रं एतेषां चतुर्युगाणां सहस्रं अहः दिवा ॥

सहस्रान्ते कलियुगवर्षसहस्रान्ते ॥

यज्ञप्रतिनिधिरित्यत्र यज्ञप्रतिनिधिः अयज्ञः । एवमुत्तरत्रापि ज्ञातव्यम् ॥

न तथा गन्धयुक्ता इत्यत्र सर्वगन्धाः कस्तूरीकर्पूरादिगन्धाः तथा द्वापरादियुगेष्विव न ॥

अट्टशूला जनपदा इत्यत्र 'अट्टमन्नमिति प्रोक्तं शूलो विक्रयणं स्मृतम् । केशो भग इति प्रोक्तो ब्राह्मणास्तु चतुष्पथा' इति वचनात् अट्टस्य अन्नस्य शूलं विक्रयणं येषां ते अट्टशूलाः, चतुष्पथाः ब्राह्मणाः शिवस्य वेदस्य शूलं विक्रयणं येषां ते शिवशूलाः, द्रव्यकट्टलिकां कृत्वा वेदोपदेष्टार इत्यर्थः । स्त्रियः केशस्य भगस्य शूलं विक्रयणं यासां ताः केशशूलाः, पणे दत्ते तद्भोगाय स्वभगदात्र्य इत्यर्थः ॥

चञ्चूर्यन्ते द्विजा इत्यत्र इतस्ततो गर्हितं अतिशयेन चरन्ति चञ्चूर्यन्ते ॥

करहारभयादित्यत्र पुंसः पुमांसः करहारस्य कररूपद्रव्यापहारस्य भयात् गृहस्थाः जानपदप्रच्छन्नाः परिमो(क्ष)पकाः करस्य परिमो(क्ष)पकाः ॥

इहलौकिकमित्यत्र इहलौकिकं एतल्लोकसम्बन्धि, ऐहिकमात्रफलरूपमित्यर्थः । मांसशोणितवर्धनं यथेष्टान्नपानादिना स्वशरीरमांसशोणितवर्धनं ईहन्ते कुर्वन्तीत्यर्थः ॥

भूयिष्ठं कूटमानैरित्यत्र कूटमानैः कपटप्रस्थादिप्रमाणैः ॥

ततो योजनविंशानां सहस्राणि शतानि चेत्यत्र योजनविंशानां सहस्राणि द्विदशसहस्राणीत्यर्थः । योजनविंशानां शतानि द्वे सहस्रे । मिलित्वा द्वाविंशतिसहस्रयोजनपर्यन्तं ऊर्ध्वं ज्वालाभिर्निर्दहति । ततः तदुपर्यपि वायुवेगादिना स्वर्गपर्यन्तं दीप्तः ॥

सराष्ट्रनगराकारां कृत्स्नां पश्यामि मेदिनीमित्यादिग्रन्थस्यायं भावः—मार्कण्डेयेन महाप्रलयो दर्शनीय इति प्रार्थितो भगवान्नारायणस्तात्कालिकस्वाप्नमहीमहीधरादिसृष्टिप्रलयवत् स्वशक्त्या निर्मितं महाप्रलयप्रतिनिधिं कञ्चित्प्रलयं मार्कण्डेयाय प्रदर्श्य स्वोदरस्थमविनष्टमेव सकलं प्रपञ्चं पुनः प्रदर्शयामास । सहजदैनन्दिनप्रलयत्वे ब्रह्मणो निद्रायां मार्कण्डेयस्य प्रबोधायोगादिति ज्ञातव्यम् ॥

धर्मवैतंसिका जना इत्यत्र 'वैतंसिकः कौटिकश्च' इति वचनात् वैतंसिकाः कुटिलाः ॥

अन्त्या मध्या भविष्यन्तीयत्र अन्त्याः मध्यस्य उभयभागे विद्यमाना उत्तमाधमाश्च एकवारं मध्या एव भवन्ति । अन्ततः मध्याः मध्यवदाचरमाणास्ते सर्वेऽपि अन्त्याः नीचा भविष्यन्ति ॥

धान्यानां कोरदूषका इत्यत्र 'कोरदूषस्तु कोद्रव' इत्यभिधानात् कोरदूषकाः कोद्रवाख्यधान्यानि । हारक इत्यपभ्रंशभाषा । भार्यैव मित्रं येषां ते भार्यामित्राः ॥

निरुद्वेगो बृहद्वादीत्यत्र उद्वेगो भयं तद्रहितो निरुद्वेगः । बृहत् स्वशौर्यं वदतीति बृहद्वादी ॥

तत्कथादानसन्तुष्टा इत्यत्र तेषां कामक्रोधादीनां कथयां अदानेन च सन्तुष्टाः ॥

सङ्घातयन्त इत्यत्र सङ्घातं समुदायं सम्पादयन्तः सङ्घातयन्तः ॥

हस्ताद्धस्तं परिमुषेदित्यत्र स्वहस्ताच्चौर्यं कृत्वा परहस्तं प्रापयित्वा परिमुषेत् परितो मुष्णीयात् ॥

एकहार्यं जगदित्यत्र एकं एकप्रकारं हार्यं आहार्यं अन्नादिकं यस्य तत् ॥

जाल्मकचिह्ना पृथिवीत्यत्र वनजल्मकानां समूहो जाल्मकं तस्य चिह्नं यस्याः सा ॥

आचार्योपनिधिरित्यत्र आचार्यस्य उपनिधिः प्रतिनिधिः समान इत्यर्थः ॥

कबन्धान्तर्हित इत्यत्र कं जलं बध्नातीति कबन्धो मेघः तेनान्तर्हितः आच्छादितः ॥

तथा तिष्यबृहस्पती इत्यत्र तिष्यं पुष्यनक्षत्रम् ॥

प्रसादमुपनेष्यतीत्यत्र प्रकर्षेण सादं अवसादनम् ॥ अध्यायः १८९ ॥

वनं पुण्ययशःकर्मेत्यत्र जरया वनं संश्रयिष्यति । जनाभावात् प्राक् सर्वत्र पूर्णं वनं ब्राह्मणग्रामैः सम्पूर्य नाशयिष्यतीति भावः ॥

कृष्णाजिनानि शक्तीश्चेत्यत्र विजितेषु देशेषु विप्रशार्दूलान् याज्ञिकान् ब्राह्मणान् तेषां कृष्णाजिनानि च शक्तीः त्रिशूलान्यायुधानि च स्थापयन् । यथा आयुधादिभ्यः चोरा भीता भवन्ति, तथा कल्क्याज्ञया याज्ञिकान् ब्राह्मणान् तेषां कृष्णाजिनानि च दृष्ट्वा भीता भवन्तीति भावः ॥

आश्रमाश्चाविपापण्डा इत्यत्र विशेषेण पापण्डरहिता अविपापण्डाः ॥

अपि सर्वदिवौकसामित्यत्र सर्वदिवौकसां प्रजा अपि मुह्यन्ते इति सम्बन्धः ॥

जातोऽसि पश्चिमे वंश इत्यत्र पश्चिमे चरमे ॥ अध्यायः १९० ॥

वापीमपि निस्राव्येत्यत्र निस्राव्य उदकस्रवणं कारयित्वा ॥

प्रतिजानीहि नैतानित्यत्र एतान् मण्डूकान् प्रतिहन्मीति न प्रतिजानीहि । प्राप्य तव प्रियामेव प्राप्य वृथा प्राणिहिंसाजनितं तव वधं अलं कृत्वा भूषणं कृत्वा ॥

युक्तौ वाम्यौ स्यातामित्यत्र वामदेवऋषिसम्बन्धिनौ अश्वौ ॥

मा क्रियतामनुबन्ध इत्यत्र अनुबन्धः निर्बन्धः ॥

ब्रह्मक्षत्रस्यान्तरे वर्तमान इत्यत्र ब्रह्मक्षत्रस्येति द्वन्द्वैकवद्भावः । ब्रह्मक्षत्रयोरन्तरे भेदे विरोध इति यावत् ॥

छन्दांसि वै त्वादृशं संवहन्ति इतस्ततः प्रापयन्ति । दैवबलादेव भवतां सञ्चारः; न तु यानबलादिति भावः ॥

यस्त्वेतद्ब्रह्मेत्यत्र ब्रह्म ब्राह्मणकुलं तपसा अत्येति सर्वेभ्योऽप्यतिशयितं वर्तते । एवं विद्वानिति सम्बन्धः ॥

ऐक्ष्वाकवो यदि ब्रह्मन्नित्यत्र हे ब्रह्मन् ते त्वया दलः मम अनुजः ऐक्ष्वाकवः इक्ष्वाकुराज्याधिपतिः विधेयः कार्यः । अन्ये विशोऽपि ऐक्ष्वाकवाः विधेयाः ॥ अध्यायः १९१ ॥

वयं रासायनिका न शरीरोपतापेनात्मनः समारभामहे अर्थानामनुष्ठानमित्यत्र रासायनिका इति पाठे रसायामयनं आवासः तत्सम्बन्धिनो रासायनिकाः नानाक्लेशसहितभूलोकवासिन इत्यर्थः ॥

अस्ति खलु भवानित्यत्र भवान् बहुकालमारभ्य अस्ति खलु ॥

अहं ह्यनेनासकृत्त्वत्रेत्यत्र अग्निचितिषु विना अग्नेः काष्ठेषु पातितपूर्वः अहं अनेन राज्ञा, अत्र सरोवरे प्रतिवसामीति सम्बन्धः । दक्षिणादत्ताभिः दक्षिणारूपेण दत्ताभिः अस्य गोभिः अतिक्रमणं अतिशयेन पादविक्षेपः तेन अभिक्रतम् । तथा दानशीलः कृपाशीलश्चेति राज्ञः कीर्तिर्वर्णिता ॥

अत्यन्ताय नरो भुवीत्यत्र अत्यन्ताय अत्यन्तम्, चिरायेतिवदिदं पदम् ॥

तावदिदानीमिमावित्यत्र इमौ स्वस्थानाच्च्युतौ उलूकमार्कण्डेयौ ॥ अध्यायः १९३ ॥

अनेनाश्वापि काकुत्स्थ इत्यत्र काकुत्स्थः ककुत्स्थपुत्रः ॥ अ० १९४ ॥

पुत्रमभ्यवगच्छेतामित्यत्र तव वरात् ॥ अध्यायः १९५ ॥

दण्डके नोपशाम्यतीत्यत्र दण्डके दण्डकारण्ये । 'ब्रह्मशापहृताशेषदण्डकारण्यपावन' इति रामनामसु पाठात् ॥ अध्यायः १९८ ॥

सूनामध्ये व्यवस्थितमित्यत्र परेण हिंसितमहिषादिमांसानां विक्रयाय शस्त्रेण च्छेदः सूना तस्याः मध्ये ॥

आकुलत्वात्तु सेतूनामित्यत्र सेतूनां धर्मसेतूनां ज्ञाने आकुलत्वात् व्याकुलचित्तत्वात् ॥

कुरुण्डा वामना इत्यत्र कुरुण्डाः कुत्सितमस्तकाः ॥

लम्बचूचुका इत्यत्र 'चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम्' इत्यभिधानात् लम्बमानं चूचुकं येषां ते तथोक्ताः ॥

सर्वासु परिणीतेनेत्यत्र सर्वासु अवस्थासु परितः नीतेन नीतियुक्तेन॥

कर्म चेत्किञ्चिदित्यत्र अन्यदपि कर्म पुण्यं कर्म, चेत् अस्ति चेत्, स्यात् तदपि स्यात् । इतरत् पुण्यादितरत् ॥

कर्म चैतदसाधूनामित्यत्र असाधूनां वृजिनं नाम यत्कर्म एतदपि साधुवदेव सत्कर्मवदेव ॥

अश्रद्दधन्तो धर्मस्येत्यत्र धर्मस्येति पाठे धर्मस्य अश्रद्धां कुर्वन्तः ॥

महाधृतिरिवाध्मातुरित्यत्र आध्मातुः युद्धे शङ्खनिनादं कुर्वतः वीरभटस्य महाधृतिर्यथा वर्धते, तथा पापः पापिष्ठोऽपि स्वकृतकर्मश्लाघया नित्यदा भवति अभिवृद्धो भवति, अहङ्कारी भवतीत्यर्थः । संनतिरवमानः, मानः सन्मानः, तत्र सर्वत्र भवति समो भवति ॥

दर्शयन्त्यन्तरात्मानमित्यत्र अन्तरात्मानं अन्तस्स्थितस्वदुस्स्वभावम् ॥

अपि चेह प्रजाहीन इत्यत्र प्रजाहीनः स्तोतृजनहीनोऽपि ॥

विकर्मणेत्यत्र विकर्मणा कृतेन कारणेन तप्यमानः पश्चात्तापं कुर्वाणः॥

द्वितीयात्परिमुच्यत इत्यत्र द्वितीयात् उपरि क्रियमाणपापात् ॥

कर्मणा येन केनेत्यत्र कर्मणा दुष्कर्मणा ॥

पापं चेत्पुरुष इत्यत्र कल्याणं पुण्यम् ॥

येषां पञ्च पवित्राणीत्यत्र पञ्च, यज्ञो दानं तपो वेदाः सत्यं चेति पञ्च

धर्मसंश्रिताः पवित्राणि पवित्रीभूताः । प्रलापाः 'प्रलापोऽनर्थकं वच' इत्यभिधानात् सदसि (ड)दम्भार्थं वचनानि । तेषु सर्वं जनवञ्चनात्प्राप्तं धनकनकादिकम् ॥ अध्यायः १९९ ॥

वेदस्योपनिषदित्यत्र उपनिषत् रहस्यम् ॥

अहिंसा परमो धर्म इत्यत्र उक्तत्रयाणां मध्ये अहिंसा परमो धर्मः ॥

आचार एव लक्षणं येषां ते आचारलक्षणाः ॥

यो यथाप्रकृतिरित्यत्र प्रकृतिः उत्तमा मध्यमा अधमा चेति त्रिविधा ॥

अतिपुण्यान्नदानानि तानीत्यत्र तानि पूर्वोक्तपुण्यानि अतिपुण्यान्नदानानि अतिपुण्यमन्नदानं येषां तानि भवेयुरिति सम्बन्धः ॥ अध्यायः २०० ॥

विधिना विहितं पूर्वमित्यत्र पूर्वं विहितं, यन्निमित्तं हीनयोनिप्राप्तौ कारणम्, तस्य घातकः हीनयोनावपि पुनः पुनः पुण्यकरणेन नाशकः भवेत् ॥

तेषामपि भवेत्कर्मेत्यत्र देवतातिथिभृत्यानां पितॄणां प्रतिपूजनात्, अनन्तरं तेषां विक्रीतमांसानां स्वयं भक्षणात्, उपभोगेन उप समीपस्थानां भार्यादीनां भोगेन च कर्म सत्कर्म भवेत् ॥

अमांसाशी भवेदेवमित्यपि श्रूयते श्रुतिः । भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति ब्राह्मण इत्यत्र यथा ऋतौ ऋतावेव भार्यां गच्छन् ब्राह्मणः ब्रह्मचारी भवति, एवं अमांसाशी [1]अविहितमांसभक्षणादन्यत्र मांसं भक्षयन् अमांसाशीत्यपि श्रुतिः श्रूयते ॥

सर्वाण्येतानि बीजानीत्यत्र बीजानि भाव्यङ्कुरकारणानि ॥

चङ्क्रम्यमाणा जीवांश्चेत्यत्र अतिशयेन पादक्रमं पादविक्षेपं कुर्वन्तश्चङ्क्रम्यमाणाः ॥

पुरुषैर्विस्मृतैः पुरेत्यत्र विगतं स्मृतं उक्ततत्त्वस्मरणं येषां तैः ॥

सुहृदश्चापि दुर्हृद इत्यत्र अन्ये केचित् सुहृदः शोभनहृदययुक्तान् ॥

---

[1]विहितमांसभक्षणादन्यत्र मांसमभक्षयन्.

सुसमृद्धैरित्यत्र सुसमृद्धैः बान्धवैर्निमित्तैः बान्धवा अपि न नन्दन्ति ॥

अध्यायः २०१ ॥

नैनं प्रज्ञेत्यत्र सुनीतं सुशिक्षितं एनं प्रज्ञा न त्रातीति न इति उत्तरनञावृत्त्या योजना ॥

हिंसायां सततोत्थित इत्यत्र हिंसायां वञ्चनायां च यः पुरुषः सततोत्थितः सर्वदा उन्मुक्तः ॥

देवानिष्ट्वेत्यत्र कृपणैः निर्भाग्यैः पुत्रगृध्नुभिः केवलं पुत्रेच्छुभिः, न तु देवताभक्तैः । तैरेव मङ्गलैः स्वमातापितृकृतदेवयागादिमङ्गलैः कारणैः लब्धाः, अपरे सभाग्यैः देवताभक्तैः दशमासधृता गर्भाः पितृसञ्चितैर्धनधान्यैर्भोगैश्च सह अभिजायन्ते । न देहजा मनुष्याणामिति पाठे केवलदेहजा न, किन्तु कर्मजा एवेत्यर्थः ॥

ते चापि कुशलैरित्यत्र येषां भोक्तव्यं प्रारब्धं कर्म, ते च व्याधयोऽपि॥

ग्रहणीरोगपीडिता इत्यत्र ग्रहणीरोगः सङ्ग्रहण्याख्यरोगः । भोक्तुं भोजनं कर्तुम् ॥

इति लोकमनाक्रन्दमित्यत्र अनाक्रन्दं आक्रन्दनेऽप्यशक्तम् । स्रोतसा कर्माख्यनदीप्रवाहेन ॥

वशं च यदि वै भवेदित्यत्र यदि यद्यपि वशं परिहर्तुं शक्यं भवेत् । तथापि जलान्तस्स्थितशिंशुमारमिव, विषदिग्धदुग्धमिव, अन्धः कूपमिव च तदप्रियं न प्रतिपद्येयुर्वै ॥

स्वयं ग्राह्यस्य सत्तमेत्यत्र ग्राह्यस्य ग्रहीतुं योग्यस्य फलस्य स्वयं स्वयमेव न दृश्यते शक्तो न दृश्यते । प्रकृतानां प्रकर्षेण कृतानामत्युत्कटानामित्यर्थः ॥

यथा श्रुतिरियमित्यत्र इयं श्रुतिर्यथा नित्या आद्यन्तरहिता तथा ॥

दशार्धतत्तस्य शरीरभेद इत्यत्र दश दशेन्द्रियाणि, ततः अर्धं पञ्चमहाभूतानि, ततः तस्य जीवस्य शरीरभेदः पूर्वशरीरादागामिशरीरस्य भेदः । इन्द्रियवैलक्षण्यात् भूतपञ्चकवैलक्षण्याच्च नानादेहानां भेद इत्यर्थः ॥

तदश्नुते नात्र कृतस्य नाश इत्यत्र तत् अत्रैव नाश्नुते; किन्तु परत्र। अतः कृतस्य कर्मणः नाशो नेति नञावृत्त्या योजना ॥

अपुण्यशीला इत्यत्र नराधमा इति वक्ष्यमाणत्वात् अत्र नरोत्तमा इति लभ्यते। ते अजामिलादयः स्वप्रारब्धकर्मणा किञ्चित्कालमपुण्यशीला अपि अन्ततः पुण्याः पुण्यकृत एव भवन्ति। नराधमाः कदाचित् संसर्गवशात् पुण्यशीला अपि जटासुरादिवत् अन्ततः पापकृत एव भवन्ति ॥

नरोऽनुयात इत्यत्र नरः मध्यमजीवः ततः देहनाशानन्तरं स्वैः कर्मभिः पुण्यैः पापैर्वा अनु अनुसृत्य यातः स्वर्गं नरकं वा प्राप्तः तैः कर्मभिर्भावितः समुत्पत्स्यति पुनर्भूलोक एव जननं प्राप्नोति ॥ अध्यायः २०२ ॥

कथं सम्भवत इत्यत्र पुण्यपापयोः सम्बन्धी मध्यमजीवः ॥

मोहनीयैर्वियोनीष्वित्यत्र अधोगामी अन्धतमोयोग्यः अधमजीवः मोहनीयैः मिथ्याज्ञानयोग्यैः प्रयोगैः मनःप्रयोगैः वियोनीषु हरिविरुद्धदैत्यादियोनिषु भवेत्। कदाचिद्ब्रह्मक्षत्रादियोनावुत्पत्तावपि दीर्घकालं विरुद्धयोनिरेवेति सूचनाय वियोनीष्विति दीर्घप्रयोगः। अधमे अधोगामित्वस्योक्तत्वात् मध्यमे मध्यमगतिः, उत्तमे ऊर्ध्वगतिश्चेति गतिभेदोऽपि द्रष्टव्यः। किल्बिषीत्युक्तत्वात् मध्यमे पुण्यपापे, उत्तमे केवलपुण्यं चेति साधनभेदोऽपि सूचितः ॥

तद्दुःखप्रतिघातार्थमित्यत्र तद्दुःखप्रतिघातो भवेदिति मनसोद्दिशन्नपि अपुण्य इति कृत्वा योनयः तादृशयोनीः प्राप्नोति ॥

दुःखितः सुखसंज्ञित इत्यत्र दुःखितोऽपि बहुदुःखभरितोऽपि सुखसंज्ञितः कदाचित्सुखवानिति संज्ञितः दुःखव्यामिश्रसुखभोक्तेत्यर्थः ॥

ततोऽनिवृत्तबन्धत्वादित्यत्र अनिवृत्तबन्धत्वात् केवलमिथ्याज्ञानिवत् केवलतत्वज्ञानिवच्च सर्वथा सुखदुःखात्मकसंसारबन्धनिवृत्तिरहितत्वात् ॥

स चेन्निवृत्तबन्ध इत्यत्र सः त्रिविधजीवानां मध्ये विद्यमानः एको जीवः निवृत्तबन्धश्चेत् आत्यन्तिकबन्धनिवृत्तियोग्यश्चेत्। स चेन्निवृत्तबन्ध इति द्वितीयपक्षे सः उत्तमलोकानुभवी निवृत्तबन्धश्चेत् नितरां वृत्तः वर्तितः बन्धः

हरौ स्नेहानुबन्धो यस्य स चेत् भक्तिपरिपाकवांश्चेदित्यर्थः ॥

पापकर्मा पापवृत्त इत्यत्र पूर्वपूर्वपापकर्मवशात् उपर्युपरि पापेष्वेव प्रवृत्तः अधमजीवस्तु पापस्य पापफलस्यान्तं न गच्छति। संसारबन्धच्छेदानन्तरमपि केवलपापफलभूतं दुःखमेवान्धे तमसि भुङ्क्त इत्यर्थः ॥

तत्कर्म यदि चेत्कर्तुरित्यत्र तत्तस्मात्कारणात् कर्तुः जीवस्य कर्म यदि न मुच्यत्येव चेत्तथापि ॥

प्राज्ञस्यानन्तरा वृत्तिरित्यत्र अन्तरमवकाशावधीति वचनात् अनन्तरा निरवधिका ॥

तस्यैव सञ्चित इत्यत्र यत्र तस्यैव धनस्य सञ्चिते सञ्चये आर्जने सति मूलगुणं मूलीभूतं न्यायार्जनरूपगुणम् ॥

दृष्ट्वा लोकं श्रियात्मकमित्यत्र लोकं हरेर्वैकुण्ठलोकं श्रियात्मकं लक्ष्म्यात्मकं दृष्ट्वा नानोपायात् भक्तरक्षणाय दैत्यशिक्षणाय च वामनत्रिविक्रमत्वादिनानोपाया यस्य तस्मान्नारायणात् तत्प्रसादादिति यावत् । उपायतः श्रवणमननाद्युपायैः ॥ अध्यायः २०३ ॥

मतिः पूर्वं प्रवर्तत इत्यत्र मतिः मनोवृत्तिः । सा च द्विविधा— सुमतिः कुमतिश्चेति । तत्राद्यायाः फलमाह— तामिति । तां सुमतिम् । द्वितीयायाः फलमाह— तत इति । ततः कुमतेः तदर्थं कामार्थम् ॥

कुमतेः फलमुक्त्वा सुमतेरपि फलं सङ्कोचेनाह— उत्तमेति । उत्तमेभ्यः श्रुतस्य शास्त्रस्य सम्बन्धो यस्य स तथोक्तः । ईदृशोऽपि जितः कामक्रोधाद्यैर्जितः श्रुतयः श्रुतीः त्रयीति; न तु श्रुत्युक्तमर्थमाचरतीति भावः । अधर्मस्त्रिविध इत्यत्रोक्तं त्रैविध्यं स्वयमेवाह— पापं चिन्तयते चापीति ॥

इत्येष सप्तदशक इत्यत्र अव्यक्तेन मूलप्रकृत्या संज्ञितः संज्ञावान् तत्संज्ञया सहेत्यर्थः, सप्तदशको राशिः । रूपादिपञ्चकस्य गुणत्वान्न पृथग्गणना ॥

सर्वैरिहेन्द्रियार्थैरित्यत्र इन्द्रियार्थैः रूपरसादिभिः पञ्चभिः, व्यक्तेन ब्रह्माण्डेन, अव्यक्तेन महत्तत्वेन । बहुवचनं बहुलोकभरितत्वात् महत्त्वाच्च ॥

अध्यायः २०४ ॥

अन्योन्यमित्यत्र एकस्मिन् देहे यावद्यावत्पृथिव्यादिकम्, तावत्तावच्चेन्नातिवर्तन्ते, तदा सम्पच्च भवति । चराचराः चराचरसम्बन्धिनः पञ्चपदार्थाः यदा विषमं भावं स्वभावमाचरन्ति । पृथिव्याधिक्ये देहो भारायते, जलाधिक्ये महोदरं जायते, तेजस आधिक्ये दाहोद्रेको जायते, वायोराधिक्ये श्वासश्वासादिकं जायते, आकाशस्याधिक्ये बहुभोजनादिना अजीर्णादिकम्, एवमाकारिका विपद्भवतीति भावः । तेन च मरणं भवतीत्याह—तदेति ॥

लोके विततमात्मानमित्यत्र आत्मानं परमात्मानम् ॥

ब्रह्मभूतेनेत्यत्र ब्रह्मणो वेदाद्भूतेन प्रतिपादितेन सद्धर्मेण ॥

ज्ञानमूलात्मकमित्यत्र ज्ञानं मूलयति निर्मूलयतीति ज्ञानमूलात्मकम् ॥

भगवानाह बुद्धिमानित्यत्र पूर्वोक्तं वस्तु भगवानित्याह बुद्धिमान् जन्तुरिति सम्बन्धः ॥

इन्द्रियाण्येवेत्यत्र यौ स्वर्गनरकावुभौ, तत्सर्वं इन्द्रियाण्येव प्रापयन्तीति योग्यपदाध्याहारः । तत्कथमित्यत आह—निगृहीतविसृष्टानीति । निगृहीतानीन्द्रियाणि स्वर्गाय, विसृष्टानि नरकायेति विभागः ॥

इन्द्रियाणां प्रसङ्गेनेत्यत्र इन्द्रियाणां प्रसङ्गेन प्रकृष्टविषयसङ्गेन ॥

रथं शरीरमित्यत्र आत्मा परमात्मा ॥

ज्ञात्वैष्वध्यासितो ध्यायीत्यत्र अध्यासितः अधिकतया आसितः आसनवान् स्थित इत्यर्थः । ध्यायी परमात्मध्यानवान् ॥ अध्यायः २०५ ॥

गुणांस्तत्त्वेनेत्यत्र गुणान् सत्वादिजन्यज्ञानादिगुणान् ॥

रज एषां प्रवर्तकमित्यत्र प्रवर्तकं विषयेषु प्रवर्तकम् ॥

निर्विवित्सोऽनसूयक इत्यत्र निर्विवित्सः निस्संशयः ॥

वैराण्यस्य हीत्यत्र अस्य लोकवृत्तस्य वैराण्येव रूपम्, तच्च पूर्वं प्रथममेव प्रवर्तते । अहङ्कारः अहङ्कारवान् ॥

ततोऽस्य सर्वद्वन्द्वानीत्यत्र सर्वद्वन्द्वानि अस्य निरस्य ॥

ब्रह्म ज्योतिरुपास्महे इत्यत्र ब्रह्म प्रत्यक्षं ब्रह्म ॥

· प्राणानां सन्निपातादित्यत्र सन्निपातात् सम्यक् निपातात् इतस्ततः सञ्चरणात् सन्निपातः सन्निपाताख्यो व्याधिः । सोष्मा उष्मणा उष्णेन सहितः सः वायुः अग्निरिति ज्ञेयः ॥

समन्वित इत्यत्र सं सम्यक् अनु अनुकूलतया इतः प्राप्तः पावकः अधिष्ठानं देहम् ॥

तस्यापि वायुपर्यन्त इत्यत्र तस्य पावकस्य गुणसंज्ञितः गुण इति संज्ञितः उष्णस्पर्शः वायुपर्यन्तः यावति वायुः सञ्चरति तावत्पर्यन्तं विद्यमानः। स्रोतांसि स्वेदरूपस्रोतांसि ॥

पक्काशयस्त्वधो नाभ्यामित्यत्र सः अग्निः नाभ्यामधः नाभेरधश्च पक्वस्य अन्नस्य आशयः स्थानम् । ऊर्ध्वं नाभेरूर्ध्वं आत्मनः परमात्मनः आशयः आश्रयभूतः । 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति श्रुतेः ॥

दशप्राणप्रचोदिता इत्यत्र दशप्राणैः व्यानाख्यप्राणस्य दशरूपैः ॥

विद्धि वै प्राणमात्मनीत्यत्र आत्मनि जीवे प्राणं ऊर्ध्वाधःश्वासम् ॥

एकादशविकारेत्यत्र एकादशविकारात्मा यो देहः, तं देहं आदाय कर्मजितात्मकं कर्मणा जितः आत्मा चित्तं यस्य तं जीवं मूर्तिमन्तं विद्धि ॥

आत्मानं परमात्मनः सन्निधानस्थानम् । एतदेव विशदयति—देव इति ॥

जीवात्मकानीत्यत्र जीवस्वभावभूतानि ॥

जीवमात्मगुणं विद्धीत्यत्र आत्मनः अन्तर्यामिभगवद्रूपात् गुणः ज्ञानादिगुणो यस्य तम्, आत्मनः गुणं अप्रधानरूपं वा । तथा आत्मानं अन्तर्यामिभगवद्रूपं परं सर्वत्र परिपूर्णं यद्ब्रह्म, तदात्मकं विद्धि ॥

अचेतनमित्यत्र अचेतनं देहादिकं जीवगुणं जीवस्य गुणभूतं अप्रधानमित्यर्थः । स जीवः स्वयं चेष्टते परमात्मप्रेरणया चेष्टते । सर्वं देहेन्द्रियादिकं

चेष्यते च । क्षेत्रविदः पुरुषाः ततः जीवादपि परं उत्तमं वस्तु अस्तीति ब्रुवन्ति । स क इत्यत उक्तं— प्राकल्पयच इति ॥

लक्षणं तु प्रमाणस्येत्यत्र यथावृत्तः यथावृत्तिमान् उपरतसर्वेन्द्रियः जीवः यस्य प्रसादात्सुखं स्वपेत्, तदेव प्रमाणस्य प्रकृष्टपरिमाणस्य नारायणस्य लक्षणम् । निद्रितस्य बहिर्व्यापारशून्यस्य जीवस्य देहः यस्माज्जीवति, स परमात्मेति स्वातन्त्र्याख्यलक्षणमनेनोक्तं भवति ॥

दृष्ट्वाऽऽत्मानं निरात्मानमित्यत्र निर्गतः आत्मा अन्यः परमात्मा यस्मात्तम् ॥

योगमयोगं योगसंज्ञितमित्यत्र अयोगं विषययोगरहितं तं योगं योगसंज्ञितं विन्द्यात् ॥

गुणागुणमनासङ्गमित्यत्र गुणेषु भगवतः गुणेषु आ समन्तात् गुणः स्नेहाख्यगुणः । गुणागुणम् ॥

प्रयतत्वाद्द्विजातीनामित्यत्र द्विजातीनां दमेन ब्राह्मणयोग्यदमेन ॥

पिता माताऽग्निरात्मा चेत्यत्र आत्मा परमात्मा ॥ अध्यायः २०९ ॥

न शोचन्ति गताध्वान इत्यत्र अध्वानं मार्गं गताः गताध्वानः ॥

न हि निर्वेदमागम्येत्यत्र निर्वेदं सत्कर्मण्येव वैराग्यम् ॥

अशौचं नारभेतेत्यत्र अशौचं मांसं भक्षयसि चेत्, त्वां न हन्मीति व्याधेनोक्ते सति स्वजीवनाशया तदशौचं मांसभक्षणं नारभेतेत्यर्थः ॥

भूतेष्वभावमित्यत्र अभावं विनाशम् ॥ अध्यायः २११ ॥

वसिष्ठस्य पन्था उपदिश्यत इत्यत्र वसिष्ठस्य बहुकालवासिनो वृद्धस्य ॥

अवयोवानित्यत्र अवयोवान् बहुवयोवान्न भवतीत्यवयोवान् नीचः ॥

शिबिरहं मन्य इत्यत्र शिबिः श्रेष्ठ इति मन्ये । कौरव्यो भवानपयातु ॥

समयादिति कश्चिद्ब्राह्मण इत्यत्र इति समयात् एतावद्दास्यामीति सङ्केतात् ॥

कूप्यार्थितोऽयं ब्राह्मणस्येत्यत्र ब्राह्मणस्यार्थे कूप्यं रूप्यहेमव्यतिरिक्तं द्रव्यं अर्थितं येन स तथोक्तः ॥

कंसेनाताडयदित्यत्र 'कंसोऽस्त्री पानभाजनम्' इत्यभिधानात् कंसः कांस्यकमण्डलुः ॥

विप्र किं यो न ददाति तुभ्यमित्यत्र हे विप्र यः तुभ्यं न ददाति तेन किम् ॥

उताहोस्विद्ब्राह्मण मैतदित्यत्र हे ब्राह्मण एतत् न ददामीति वदन्तं प्रति प्रार्थनं मा । उताहोस्वित् आश्चर्यमिदम् ॥

राजाधिराजसमीपं सेदुकाख्यराज्ञः समीपं भिक्षितुमागतः ब्राह्मणः अहं तेन प्रेक्षितश्च । तेन राज्ञा अनुशिष्टेन वृ(पा)षदर्भं प्रति गच्छेत्याज्ञप्तेन ॥

योऽमोघवलिरागमिष्यतीत्यत्र यः अमोघबलिर्ब्राह्मणः । कशया हन्याच्च ॥

अधिकस्य ब्राह्मणस्य, यदश्वसहस्रस्य मौल्यं, तामश्विकां अश्वसम्बन्धिनीं उत्पत्तिं धनोत्पत्तिम् ॥

अङ्गैरङ्गानि प्रापुरित्यत्र श्येनस्य तुण्डपक्षचरणाद्यङ्गैः मे अङ्गानि प्राणाश्च प्रापुः गतप्राया आसन् । अतः मुनिः मौनी त्वां प्रपद्ये ॥

श्रोत्रियस्य प्रमादं मा प्रदा इत्यत्र प्रमादं अनवधानम् । श्येनाद्भीतः कपोतः अस्मि ॥

पर्यायेण वसतिरित्यत्र भावेषु पदार्थेषु पर्यायेण तत्तत्क्रमानुसारेण वसतिः आवासः कर्तव्या । तेन पूर्वं स्वर्गो जातः । आस्माकमात्रं असद्भक्षण-योग्यांशभूतं एनं कपोतं मम अददानः अदिशन् ॥

उभौ विदित्वेत्यत्र उभौ धर्मचतुरौ वां विदित्वा शस्ते प्रशस्ते कर्मणि कथं नु इयां गच्छेयम् ॥

नास्य देवा इत्यत्र अस्य देवाः न सहायभूताः न ॥

उक्षाणं वृषभम्, पक्त्वा पक्वानि ॥

तत्र मांसं वयसे वहन्त्वित्यत्र वयसे पक्षिणे असौ वहन्तु मम भटाः प्रापयन्तु ॥

शकुनान्नभावादित्यत्र शकुनस्य पक्षिणः मम अन्नभावात् अन्नत्वात् ॥

याहि तस्य दये इत्यत्र तस्य कपोतस्य, दये दयारूप, मा हिंसीः ॥

स्वपुरुषं कपोतमित्यत्र स्वपुरुषं मम भृत्यं शरणागतमित्यर्थः ॥

एतद्वोऽलक्ष्मित्यत्र अलक्ष्मं दर्शनायोग्यं क्रूरं रूपम् ॥

शिबिं शिबिदेशाधिपतिं ओद्भिदं आ समन्तादुद्भिदं शत्रूणां संहर्तारम्। सुरथसम्बन्धिनः सौरथाः महारथा इत्यर्थः ॥ अध्यायः २१२ ॥

वैश्वामित्रे विश्वामित्रेण क्रियमाणे ॥

पुरं स्वपुरम्। गृहता अनुगृहता रक्षतेत्यर्थः, व्याहृतं उक्तम् ॥

एतेन द्रोहवाक्येनेत्यत्र रथोपाधिना स्वस्तिवाचनं कृतम्, न तु निरुपाधिकतयेति ज्ञेयम् ॥

शिरसा प्रगृह्य बहिर्मृगयत इत्यत्र सः शिबिः शिरसा स्वपुत्रमांसपात्रीमूढ्वा बहिर्ब्राह्मणं मृगयते ॥

कोष्ठं अन्तर्गृहम् ॥

जीवन्तीयकं कृतमित्यत्र कं पश्यता इयकं इयत् स्वपुरहननादिकं कं पुरुषार्थं पश्यता कृतम्। एवं केऽपि मा जीवन्ति ॥

बकोऽन्नाल्प इत्यत्र अन्नेन अन्नेन अल्पः अन्नाल्पः अल्पाहारीत्यर्थः ॥

विशिष्टान्नानि देवानां दत्त्वा अवशिष्टान्नानि ॥

तस्यापवसुता भार्येत्यत्र आपवः व(शि)सिष्ठः ॥ अध्यायः २१३ ॥

यां कपर्दीसुतामित्यत्र कपर्दीनाम्नी अङ्गिरसः पत्नी ॥ अध्यायः २१४ ॥

तपसस्तु फलमित्यत्र तपसः तपोनामकाग्नेः फलं सन्तानम् ॥
अध्यायः २१५ ॥

अग्निष्टोमे तु नियत इत्यत्र नियतः नियतनामकोऽग्निः । आयान्तं देहदाहकभरतनामकाग्निं दृष्ट्वा नियतः नियतनामकोऽग्निः ॥

अथर्वन् गच्छ मध्वक्षेत्यत्र हे अथर्वन् अथर्वाग्ने मध्वक्ष मधुवर्णनयन॥

भूमिं स्पृष्ट्वाऽसृजद्धातुमित्यत्र स्वदेहस्थास्थिश्लेष्मपित्तादिभ्यः भूमौ नानाविधपदार्थान् ॥

दृष्ट्वा ऋषिभयाच्चापीत्यत्र ऋषिभयात् ऋषिभूताथर्वाग्निभयात् ॥

एष त्वसृजद्धिष्ण्यानीत्यत्र 'धिष्ण्यमोको निवसनम्' इति वचनात् ऋषीणां निवासभूतानाश्रमान् ॥

सोमास्तावन्त एव चेत्यत्र सोमाः सोमलताः ॥

अग्निपुत्रानित्यत्र स्रष्टुकामः ब्रह्मा एतावतामग्निपुत्राणां सञ्चारे जगद्दाहभिया एतानग्निपुत्रान् आत्मनि स्वदेहे अधारयत् अस्तम्भयत् ॥

निर्हरन्ति हुताशना इत्यत्र कार्ये सति निर्हरन्ति निर्गच्छन्ति चेत्यर्थः ॥

अध्यायः २१६ ॥

अद्भुतस्याद्भुतमित्यत्र अद्भुतस्य अद्भुतनामकाग्नेः अद्भुतं पुत्रं षण्मुखं सप्तर्षिभार्यासु सप्तर्षिभार्यासमानरूपस्वाहाकृतिषु । अन्यथा अग्नेः परस्त्रीप्रसङ्गात् उत्तरग्रन्थविरोधाच्च ॥

शुश्रावार्तस्वरमित्यत्र दैत्यभयात् आर्तस्वरम् ॥

केशिनं स्थितमग्रत इत्यत्र केशिनं केशिनामकदैत्यम् ॥

अहं प्रजापतेः कन्येत्यत्र प्रजापतेः दक्षप्रजापतेः ॥

आख्यातं त्वहमिच्छामीत्यत्र इच्छामि श्रोतुमिच्छामि ॥

पर्व चैव चतुर्विंशदित्यत्र सूर्याचन्द्रमसोर्मेलनात् सूर्यस्य प्रियाणि अमावास्याख्यद्वादशपर्वाणि, चन्द्रस्य प्रियाणि पौर्णमास्याख्यद्वादशपर्वाणि, एवं चतुर्विंशत्, चतुर्विंशदात्मकं पर्वेत्यर्थः ॥

ऋषिभ्यो भरतश्रेष्ठेत्यत्र ऋषिभ्यः सप्तर्षिभ्यः हव्यं प्रतिगृह्य दिवौकसां प्रायच्छतेति योजना ॥

सा तस्य च्छिद्रमित्यत्र च्छिद्रमवकाशम् ॥ अध्यायः २१८ ॥

अजानात्तच्च स्वाहाया रूपान्यत्वमित्यत्र रूपान्यत्वं रूपान्तरत्वम् ॥

स्कन्दं लोकस्य मातर इत्यत्र लोकस्य मातरः ब्राह्मीमाहेश्वर्यादिसप्तमातरः ॥

प्रस्नुताः स्नेहविक्लवा इत्यत्र प्रस्नुताः स्नुतस्तनक्षीराः ॥

सर्वासां तत्र नारीणामित्यत्र क्रोधसमुद्भवा नारी चामुण्डा ॥

लोहितस्योदधेरित्यत्र सन्ध्यारागसमये लोहितस्य ॥

नैजमेषश्छागवक्त्र इत्यत्र नैजमेषः सर्वाङ्गस्वभावतो मेषः, वक्त्रमात्रं छागवत् अजवत् यस्य स च्छागवक्त्रः ॥

यद्वज्रविशनादित्यत्र विशनात् विशसनात् ॥

भद्रशाखस्तु कोमलैरित्यत्र कोमलैर्भृत्यगणैः सह भद्रशाखोऽपि कश्चित् स्कन्दस्य भृत्यः । कौशल इति पाठे 'अर्श आदिभ्योऽच्' इति वचनात कौशल्यानित्यर्थः ॥

कुमारस्तु विशाखं तु पुत्रत्वे समकल्पयदित्यत्र 'ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् प्रभुः । तस्य शाखो विशाखश्च नैजमेषश्च पृष्ठत' इति गदाः पर्वणि वक्ष्यमाणत्वात् स्कन्दः अग्रयायी, शाखविशाखनैजमेषास्तु तस्यैव पृष्ठगामीनि रूपान्तराणि । अतोऽत्रापि विशाखपदमुपलक्षणमिति ज्ञेयम् ॥

छागमुखः छागवन्मुखं यस्य सः भगवान् विशाखाख्यः स्कन्दस्य अंशः सङ्ख्येऽपि रक्षन्नासीदिति योजना ॥

कुमारपितरं विशाखाख्यकुमारपितरं स्कन्दम् ॥

पूर्वं रुद्रस्य वीर्यं स्वयोनौ धर्तुमसहमाना गौरी अग्नावाक्षिपत् । अग्निरपि तदुष्णमसहमानः गङ्गायां तद्रेतः प्राक्षिपत् । गङ्गा च स्वतीरस्थे शरस्तम्बे पूरितवती । तदेव बहुत्वाच्छ्वेतो गिरिरासीत् । तस्मिन् गिरौ गरुडीरूपया स्वाहया अग्निवीर्यस्यापि योगे कृते श्वेतगिरिरूपं तद्रुद्रवीर्यमेव स्कन्दात्मना समजनि किल । अतश्चतुर्णामपि कुमारमातापितृत्वात् रुद्रमग्निमुमां स्वाहामित्याद्युक्तम् ॥

अध्यायः २२० ॥

सप्तैताः शिशुमातर इत्यत्र शिशुनामकस्कन्दप्रसादजपुत्रमातरः ॥

. एष वीरोऽष्टक इत्यत्र वीरः शूरः एषः शिशुः स्कन्दस्य मातृगणान् सप्तमातृः उद्वहतीति स तथोक्तः । अत एवाष्टकः तासामष्टमः छागवक्त्रेण विशाखेन । षड्भिः आननैः । येन शीर्ष्णा ॥

रुद्रमग्निं प्रजाः प्राहुरित्यत्र रुद्रमपि अग्निमित्याहुः कालाग्निरुद्रत्वात् । अतः रुद्रपुत्रत्वेऽपि अग्निपुत्रत्वं सम्भवतीति भावः ॥ अध्यायः २२१ ॥

ऋषिपत्नीरूपषण्मातृभिः स्वासां प्राचीनमातृणां स्थानं दातव्यमित्याशया समागतम् । तच्चायोग्यरूपत्वात् असम्भावितं त्वयाऽपि न देयमिति सूचयितुं काञ्चित्कथामाह—अभिजित् स्पर्धमानेत्यादिना । कन्यसी कनीयसी ॥

तत्र अभिजिद्देवताया अभीष्टं भवति न वेत्यत्र मूढोऽसि । अभिजिद्देवतायाः स्वायोग्यरोहिणीज्यैष्ठ्यप्राप्त्यर्थं तपःकरणदोषात् नक्षत्रं कृत्तिकानक्षत्रं उत्पातरूपेण च्युतम् । पूर्वं रोहिणी आदिः श्रेष्ठा यस्य स तथोक्तः । ब्रह्मणः आज्ञानन्तरं धनिष्ठादित्वं च । एवं द्वयीमतिरेकः अभिजितः रोहिणीतः श्रैष्ठ्यं न भवत्येवेति भावः ॥

एवमुक्ते तु शक्रेणेत्यत्र एवं शक्रेण धर्मे उक्ते सति कृत्तिका पुनस्त्रिदिवं गता । अतस्त्वयाऽपि एतासां ऋषिपत्नीनां षण्मातृणां अयोग्यं वक्ष्यमाणदेवमातृकास्थानं न देयमिति भावः ॥

अथ मातृगण इत्यत्र मातृगणः ऋषिपत्नीरूपमातृगणः ॥

अन्यां वः कां प्रयच्छामीत्यत्र कां काञ्चित् । विनतादित्यदित्यादिनामानः स्कन्दपरिवाराः भूतग्रहा एव, न तु देवमातरः । साक्षाद्देवमातरस्तु सर्वलोकसुखप्रदा एव, न तु मारिका इति ज्ञेयम् ॥ अध्यायः २२२ ॥

तामाहुर्मुखमण्डिकामित्यत्र तां तन्नाम्नीम् ॥

शकुनिस्तामित्यत्र तां तन्नाम्नीं पिशाचीम् । साऽपि तन्नाम्नी पिशाची ॥

करञ्जनिलया हि सेत्यत्र 'नक्तमालः करञ्जः स्यात्' इत्यभिधानात् करञ्जः वृक्षविशेषः । सा दनुसनाम्नी ॥

इमे त्वष्टादशान्ये वै इत्यत्र षण्मातृकाः, शकुन्याख्यः पुंग्रहः एकः, ऐरावताख्यः पुंग्रहः एकः, एवमष्ट । अन्ये स्कन्दस्य कुमारीकुमाराणां पञ्च गणाः, रुद्राद्याः पञ्च चेति दश, एवमष्टादश ॥

सत्त्वं तस्य तु साधनमित्यत्र सत्त्वं दुष्टः पिशाचादिप्राणी ॥

अध्यायः २२४ ॥

पृष्ठतो विजयस्यापीत्यत्र विजयस्य विजयनामकत्रिशूलस्य ॥

न हि तस्य गतिर्ध्रुवेत्यत्र तस्य रुद्रपरिवारस्य कदाचिदग्रतो गच्छति कदाचित्पृष्ठतः पार्श्वतश्चेति भावः ॥

सप्तमं मारुतं स्कन्धमित्यत्र मरुतां देवानां सप्तमं स्कन्धं स्वस्कन्ध-व्यतिरिक्तसप्तदिक्पालानां सप्तसङ्ख्याकं सेनास्कन्धं सेनासमुदायम् ॥

अथो क्रुष्टमित्यत्र क्रुष्टं आक्रोशं कुर्वत् ॥

अभयो देवलोकस्येत्यत्र अभयः भयाभावः ॥

घनान् खग इत्यत्र खे गच्छतीति खगो वायुः ॥ अध्यायः २२५ ॥

मूलप्रचादेनेत्यत्र गदाः व्याधयः । मूलं औषधमूलिका ॥

अपुम्भिः सत्कृता इत्यत्र अपुम्भिः क्लीबैः सत्कृताः समानतया कृताः॥

इङ्गिताध्यायितादपीत्यस्य सेवे इत्युत्तरेणान्वयः ॥

न स्नाये कर्म कुर्वतीत्यत्र न स्नाये अभ्यज्य स्नानं न करोमि ॥

द्वारि स्थानमभीक्ष्णश इत्यत्र अभीक्ष्णशः क्षणे क्षणे द्वारि स्थानं विसर्जये । अवस्करे 'मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत्' इत्यभिधानात् मलनिर्मोचनसमये; 'निष्कुटः कोटरं वा ना वल्लरी मञ्जरी स्त्रियाम्' इत्यभि-धानात् निष्कुटेषु निम्नस्थलेषु चिरं बहुकालं स्थानं अवस्थानं विसर्जये ॥

क्रोधनं च विसर्जय इत्यत्र क्रोधनं परस्य क्रोधोत्पादनम् ॥

सुमनोवर्जकायेतेत्यत्र सुमनांसि पुष्पाणि तेषां वर्जो वर्जनं यस्मिन् स तथोक्तः कायः तेन इता ॥

स्वलङ्कृताऽनु प्रयतेत्यत्र अनु भर्तारमनुसृत्य स्वभर्तरि अलङ्कृते सति स्वलङ्कृता भवामीत्यर्थः ॥

स देवः स गतिरित्यत्र गतिः सम्पत्तिः । तस्य पत्युः ॥

तान् सर्वानग्रहारेणेत्यत्र अग्रहारेण श्रेण्याकारगृहसमुदायेन ॥

कम्बुकेयूरहारिण्य इत्यत्र कम्बुः कञ्चुकः ॥

शतमश्वसहस्राणि दशेत्यत्र शतं अश्वसहस्राणि, दश सहस्राणि चेत्यर्थः। नागायुतानि दश चेति वा ॥

प्रदिशामि शृणोमि चेत्यत्र प्रदिशामि वेतनां प्रदिशामि, तदीयं वाक्यं शृणोमि च ॥

रात्र्यहानि घटामि वै इत्यत्र घटामि घटयामि ॥

एतत्संवननं ममेत्यत्र 'वन सम्भक्तौ' इति धातोः संवननं भर्तॄणां पूजा ॥

अभिपन्नाऽस्मीत्यत्र अभिपन्ना ज्ञातवती । सखीनां सोपहासं भाषितं कामकारं इच्छानुसारेण करणं घटते ॥ अध्यायः २२७ ॥

यस्मिन् यथेत्यत्र यस्मिन् भर्तरि यथा अपेक्षितं तथा वर्तमाना ॥

भर्तारमाच्छेत्स्यसि कामिनीभ्य इत्यत्र कामिनीभ्यः इतरकामिनीभ्यः भर्तारमाच्छेत्स्यसि भर्तृमनसो विनिवृत्तिं करिष्यसि ॥

यथा पतिस्तस्येत्यत्र तस्य प्रसादे ॥

रहिते कदाचिदित्यत्र रहिते एकान्ते ॥

चण्डाश्च शौण्डा इत्यत्र 'शुण्डापानं मदस्थानम्' इत्यभिधानात् शौण्डाः मद्यपायिन्यः ॥

एतद्यशस्यमित्यत्र एतत् पातिव्रत्यसन्तुष्टभर्तृप्रसादाख्यं भगवेतनं यशस्यमित्यादियोजना ॥ अध्यायः २२९ ॥

मधु प्रपास्यन्ति न तु प्रपातमित्यत्र मधु मद्यं प्रपास्यन्ति । तन्निमित्तं

प्रपातं न पश्यन्ति । वृकोदरः धनञ्जयश्च मधु न पास्यति । तन्निमित्तप्रपातं न यास्यति ॥

मोक्षः कथं स्यात्पुरुषस्य तस्मादित्यत्र तस्मात् कर्मणः मोक्षः मोचनं तत्परित्याग इत्यर्थः । तस्मात् शुभाशुभरूपकर्मसमुदायात् कैवल्यं वा ॥

ध्रुवं प्रशास्यतीति पाठे शिक्षां करिष्यति । प्रहास्यतीति पाठे स्वराज्यं त्यजति ॥

क्रियेत तस्मादित्यत्र स्वयं न क्रियेत ॥

कथं च तत्स्यादिति तत्कुतः स्यादित्यत्र तत् अनर्थागमनं कथं स्यात् न कथञ्चिदिति यत्, तत्कुतः स्यात् ॥

कथं न भिद्येतेत्यत्र न प्रसिध्येत् यथा प्रसिद्धं न भवति तथा रक्षितव्यम् ॥

अध्यायः २३० ॥

विन्दन्तां चाप्यनात्मानमित्यत्र जीवितस्य अनात्मानं अप्रयत्नम् ॥

अध्यायः २३१ ॥

न त्वभ्यनुज्ञामित्यत्र अभ्यनुज्ञां पितुराज्ञाम् ॥

एतामप्यायतिमित्यत्र एतामायतिं अभिवृद्धिं रक्षन्नपि कलहे सति विद्यमानाऽपि सम्पद्गमिष्यतीति भीत्येत्यर्थः ॥

घोषा द्वैतवन इत्यत्र 'घोष आभीरपल्ली स्यात्' इत्यभिधानात् घोषाः गोव्रजाः त्वत्प्रतीक्षाः तव प्रति मासं मासं प्रति ईक्षा येषामपेक्षिता ते तथोक्ताः ॥

अध्यायः २३२ ॥

समङ्गो नाम वल्लव इत्यत्र वल्लवः गोपालः ॥

स्मारणं समयमित्यत्र स्मारणं स्मरणयोग्यम् ॥

उद्विग्नवासोऽविस्रम्भादित्यत्र तत्र पाण्डवानां वासः आश्रमः अविस्रम्भात् भवतामविश्वासात्, उद्विग्नवासः उद्वेगः फलमूलापहारादिना भयं तेन युक्तो भविष्यति । भवदीयाः (क)किञ्चिदुपद्रवं करिष्यन्तीति भावः ॥

अध्यायः २३३ ॥

ईजे राजर्षियज्ञेनेत्यत्र राजर्षीणां योग्ययज्ञेन सद्यस्केन तस्मिन् दिन एव क्रियमाणेन ॥

विजिहीर्षुरिहेत्यत्र विजिहीर्षुः विहारं कर्तुमिच्छुः ॥

धर्मराजनिवेशनं यमपुरम् ॥ अध्यायः २३४ ॥

अन्ये च्छत्रं वरूथं चेत्यत्र स्वस्वासाधारणचिह्नाङ्कितपताकाम् । नत्वोऽपि कश्चिद्रथालङ्कारः ॥ अध्यायः २३५ ॥

तदेतदतिमानुषमित्यत्र तत्तस्मात् ॥ अध्यायः २३६ ॥

प्राञ्जलिं शरणापन्नमित्यत्र शत्रुमपि शरणापन्नं दृष्ट्वा कः प्राणान्वहेदिति पूर्वेण सम्बन्धः । वरप्रदानं अर्थिनामभीप्सितवरप्रदानम्, राज्यं शत्रून्विजित्य राज्यसम्पादनम्, पुत्रजन्म च पुत्रकामेष्ट्यादिना पुत्रजन्म च इति त्रितयं राज्ञामपेक्षितो धर्मः । त्रीणि पूर्वोक्तानि यानि त्रीणि, एकं शरणागतशत्रोर्मोक्षणं तत्समं तेषां त्रयाणां समम् ॥ अध्यायः २३७ ॥

जितकाशिनश्च चत्वार इत्यत्र जितकाशिनः जयाकाङ्क्षिणः ॥

अध्यायः २३८ ॥

मोक्ष्यन्ति कुरुसत्तमेत्यत्र पुत्रान्न मोक्ष्यन्तीत्यादियोजना ॥

स ते विक्रमशौण्डीर इत्यत्र विक्रमशौण्डीरः पराक्रमेण कुशलः ॥

अध्यायः २४४ ॥

वादिकास्तं महीपतिमित्यत्र वादिकाः यथास्थितस्य व्यक्तवचनशीलाः ॥

पादौ न धावये तावदित्यत्र 'धावु शोधन' इति धातोः यथा रजोपहारेण कान्तिविशेषो भवति, तथा दास्यादीनां करेण पादक्षालनम् ॥

अध्यायः २४९ ॥

स्वप्नान्ते दर्शयामासुरित्यत्र स्वप्नान्ते स्वप्नमध्ये ॥

अनुभूताः स भद्रं त इत्यत्र अनु अनुकूलतया भूताः अनुभूताः ॥

अध्यायः २५० ॥

प्राप्तकालमनुध्यान्त इत्यत्र अनुध्यान्तः अनुध्यायन्तः ॥

उदयास्तमयज्ञो हीत्यत्र कदाचित्सम्पदुदयः कदाचित्सम्पदस्तमयश्च उदयास्तमयौ ॥

व्रीहिद्रोणपरित्यागादित्यत्र द्रोणः प्रस्थविशेषः ॥ अध्यायः २५१ ॥

कापोतीं वृत्तिमाश्रित इत्यत्र यथा कपोतः शिलायाः कणं कणमार्जयति, तद्वच्छिलोञ्छवृत्त्या अल्पाल्पसङ्ग्रहरूपा वृत्तिः कापोतीत्युच्यते, [1]ताम् ॥

विकचः परुषा वाच इत्यत्र विगतः कचः केशभारो यस्य स तथोक्तः ॥

सपुत्रदारमुञ्छं तमित्यत्र उञ्छं उञ्छवृत्तिमन्तम् ॥

मानसं मनस्सम्बन्धिनं विकारम् ॥

मनसश्चेन्द्रियाणामित्यत्र मनसः इन्द्रियाणां च दुःखं यथा भवति तथा श्रमेण उपार्जितं वित्तं युक्तेन वैराग्ययोगवता चेतसा त्यक्तुं एकाग्रं मनः त्वया निश्चितमिति सम्बन्धः ॥

सतां सप्तपदमित्यत्र सप्त पदानि अभ्युत्थानपदानि प्रियवाक्यपदानि वा यस्य तम् ॥ अध्यायः २५३ ॥

वृजिनाग्रकेशीत्यत्र वृजिनं कौटिल्यम् ॥

सा जानती व्यापनयः सुकेशीत्यत्र व्यापनयः ताल्वोष्ठपुटयोरपसरणं कुरु व्यवहरेत्यर्थः ॥ अध्यायः २५५ ॥

सर्वा मेऽपचितिः कृतेत्यत्र अपचितिः पूजा कृता ॥ अ० २५६ ॥

मुखेन वि(ष्फू)स्फूर्येत्यत्र सुवीरराष्ट्रकं प्रति वि(ष्फू)स्फूर्य कोपेन ओष्ठस्फुरणं कृत्वा ॥

दण्डीव यूथादित्यत्र दण्डीव लगुडधारीव अपमेधसे निवर्तयसि ॥

लुनासि । पदा समाहत्येत्यत्र पदा सिंहस्याङ्गं समाहत्य पक्ष्माणि लुनासीति पूर्वेणान्वयः ॥

आशंससि जिष्णुमुग्रमिति पाठे तुच्छमित्याशंससि ॥ अ० २५७ ॥

---

[1] एताम्.

राज्यमिवेह शास्त्रमित्यत्र इह कलिकाले शास्त्रमिवेत्यपरो दृष्टान्तः ॥

यदा वदत्येप निहीनयोनिरित्यत्र 'निहीनोऽपशदो जाल्म' इत्यभिधानात् अपशदयोनिः ॥ अध्यायः २५८ ॥

पदाऽपनीतेत्यत्र पदा पादसंञ्चारेण ॥ अध्यायः २५९ ॥

भानुमतीं यतौजा इत्यत्र भानुमतीं स्वभर्तृन् दृष्ट्वा कान्तिमतीम् ॥

परावरं पाण्डवानां रथस्थमित्यत्र पाण्डवानां मध्ये रथस्थं परावरं ज्येष्ठं कनिष्ठं च नः ख्यापयेति सम्बन्धः ॥

आजानेया बलिन इत्यत्र 'आजानेयाः कुलीनाः स्युः' इत्यभिधानात् आजानेयाः कुलीनाः सदश्वाः ॥

न च तत्तप्यतीहेत्यत्र तत् वैरं इह जीवनावस्थायां न तप्यति पश्चात्तापं न करोति ॥

पदातींश्च चतुर्दशेत्यत्र एकैकगजरक्षकान् चतुर्दश चतुर्दश पदातीन् ॥

विपाठेन शरेण ॥

अनामिषमिदं कर्मेत्यत्र अनामिषं हननादिना अस्माकं तृप्तिकरत्वात् आमिषस्थानीयजयद्रथरहितं इदं कर्म (योद्धृ) योधहननाख्यं कर्म ॥ अ० २६० ॥

भार्याभिमर्शी निर्वैर इत्यत्र भार्याभिमर्शी यश्च राज्यापहारकः, स निर्वैरः सङ्ग्रामे याचमानोऽपि जीवितुं नार्हति ॥

ते स्म तं मुदिता दृष्ट्वेत्यत्र दृष्ट्वा मुदिता इति सम्बन्धः ॥

दृष्ट्वा विक्लवकर्माणीत्यत्र विक्लवो भीतः तस्य कर्माणि स्खलनपतनादीनि ॥ अध्यायः २६१ ॥

जघ्ने चैनमरत्निनेत्यत्र 'अरत्निस्तु निष्कनिष्ठेन मुष्टिना' इत्यमरः । अतिदृढमुष्ट्याघाते सति मरिष्यतीति भीत्या कनिष्ठाङ्गुलिरहितमुष्टिना ॥

विकल्पयित्वा शिरसि पञ्चधाराकरणेन विकारं कल्पयित्वा ॥

[1] संचरणेन.

संसत्सु सुसभासु चेत्यत्र सं सम्यक् सन्तो यासु ताः संसतः तासु ॥

अदासो गच्छेत्यत्र अदासः असन्निकटे दास्यकर्माकुर्वन् ॥

क्षुद्र धर्मे मनः कृथा इति पाठे हे क्षुद्र अतः परं वा धर्मे मनः कृथा इति योजना ॥ अध्यायः २६४ ॥

संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतमित्यत्र अनृतं न विद्यते ऋतं सत्यवचनं यत्र तत्तथोक्तं स्तैन्यं स्तेनस्य भावः तस्करत्वं शुचिं सत्कुलप्रसूतमिव ईदृशो भावः परपुरुषस्पर्शाख्यो भावः द्रौपदीं कथं वा संस्पृशेत् ॥

तस्याः संहरणादित्यत्र संहरणात् सम्यगपहरणात् ॥

अस्ति कश्चिदित्यत्र मया विना, मया मत्त इति विभक्तिव्यत्यासो वा ॥

अध्यायः २६५ ॥

पितामहो रावणस्येत्यत्र रावणपितुर्विश्रवसः पुलस्त्यस्य देहार्धरूपत्वात् ब्रह्मा रावणस्य पितामहः ॥

राक्षसेश्वरः राक्षसानां राजा कुबेरः ॥

अमरत्वं ददामि त इत्यत्र कल्पावसानपर्यन्तं मरणराहित्यं अमृतत्वरूपमुक्तत्वं च अमरत्वम् ॥ अध्यायः २६६ ॥

वैरसन्धुक्षणे रतेत्यत्र वैरसन्धाने ॥

प्रस्थानशमने ब्रह्मन्नित्यत्र प्रस्थानं यात्रा तस्याः शमनं च प्रस्थानशमने । रामलक्ष्मणयोः प्रस्थानं भरतशत्रुघ्नयोस्तदभावं चेत्यर्थः ॥

स्रोतोभ्यस्तेजसोऽर्चिष इत्यत्र स्रवन्ति येभ्यो जलमलादीनीति स्रोतांसि नवद्वाराणि ॥

ततः स न भविष्यतीत्यत्र न भविष्यति मरिष्यतीत्यर्थः ॥

मुण्डः कुण्डीत्यत्र कुण्डी 'कुण्डिका च कमण्डलुः' इत्यभिधानात् कुण्डिकावान् ॥

रुद्रस्तारामृगं यथेत्यत्र संहारकाले मृगशीर्षाख्यतारामृगम् ॥

लोभं सौवीरके कुर्यादित्यत्र 'आरनालकसौवीरकुल्मापाभिपुतानि तु' इत्यभिधानात् सौवीरमारनालकम् । अम्बलीत्यपभ्रंशभाषा ॥ अध्यायः २६७ ॥

तुल्यारिमित्रतां प्राप्त इत्यत्र सुग्रीवस्य अरिः रामस्याप्यरिः, सुग्रीवस्य मित्रं रामस्यापि मित्रम्, एवं तुल्यारिमित्रतां प्राप्त इत्यर्थः ॥

करभोत्करमूर्धजा इत्यत्र करभोत्करवत् करमूलसमूहवत् ह्रस्वाः पृथुलाश्च मूर्धजा यासां ताः ॥

इत्येवं परिभर्त्संन्तीरित्यत्र परिभर्त्संन्तीः परिभर्त्संयन्तीः ॥ अ० २६८ ॥

न चैवौपयिकी भार्येत्यत्र 'युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्' इत्यभिधानात् औपयिकी नवं नवं पुरुषं प्राप्नुवन्ती, स्वैरिणीत्यर्थः ॥

किं नु शक्यं मयेत्यत्र यद्यस्माद्राममेव अनुरुध्यसे अङ्गीकरोषि, तस्मात् मया किं नु कर्तुं शक्यम् । अकामाया अङ्गीकारायोगात् तव मयि कामस्य चाभावात् इदानीं गृहं प्रति गमनमेव न्याय्यमिति भावः ॥

अध्यायः २६९ ॥

सोऽस्मानतर्कयद्भोक्तुमित्यत्र सः अस्मानभ्येत्य अतर्कयत् प्रायोपवेशगतानूहयामास । अथ भोक्तुं वचः अब्रवीदिति योजना ॥

ततः पितरमाविश्येत्यत्र दक्षिणस्यां दिशि झंझामारुतरूपं पितरमाविश्येत्यर्थः ॥

धारिता येन वैदेहीत्यत्र येन मणिना धारिता जीविता ॥

क्षिप्तामिषीकामित्यत्र इषीकां प्रत्यभिज्ञानकारणं कथयामासेति पूर्वेण सम्बन्धः ॥ अध्यायः २७२ ॥

पिष्टहिङ्गुलिकानना इत्यत्र हिङ्गुलिका इङ्गलीकमिति रक्तधातुविशेषः ॥

प्रतिशेष्याम्युपवसन्नित्यत्र प्रतिशेष्यामि शयनं करिष्यामि ॥

कौसल्यामातरित्येवमित्यत्र कौसल्या माता यस्य तत्सम्बुद्धिः, हे रामेत्यर्थः ॥

सागरस्तु ततः स्वप्न इत्यत्र स्वप्ने स्वप्न इव अन्यैरदृष्टत्वात् रामेणैकेनैव दृष्टत्वात् स्वप्न इत्युक्तम् ॥

ऐक्ष्वाकोरस्मि ते ज्ञातिरित्यत्र ऐक्ष्वाकोः ते अहं ज्ञातिरस्मि, ममापि सगरकुमारनिर्मितत्वेन सागरत्वात् ॥

धार्यते गिरिसन्निभ इत्यत्र धार्यते यथा अधो न गच्छति तथा समुद्रेणैव धार्यते ॥

प्रणिधिः स्यादिति स्म हेत्यत्र प्र प्रति निधीयते अनेनेति प्रणिधिः शत्रुः ॥

ततो गत्वा समासाद्येत्यत्र ततः तेन सेतुना लङ्काप्रदेशं गत्वा ॥

अध्यायः २७३ ॥

शास्त्रनिर्मिता इत्यत्र शास्त्रं शासनं आज्ञा तेन निर्मिताः ॥

कर्णाट्टयन्त्रैर्दुर्धर्षा इत्यत्र कर्णाः करोति परभटशरनिरोधं, नयति च स्वभटशरानिति कर्णपदेन कर्णाकाराः वर्तुलाः प्राकारशिरोलङ्काराः कथ्यन्ते । सगुलोपलाः गुलैः घनीभूतैः तप्तवृक्षरसविशेषैः उपलैः शिलाभिश्च सहिताः सगुलोपलाः ॥

ततः सर्वाभिसारेणेत्यत्र सर्वतः अभिसरणं सर्वाभिसारः ॥ अ० २७५ ॥

अशीतमिव निःश्वस्येत्यत्र शीतं न भवति यथा तथा अशीतम् ॥

सोऽभिपत्य महावेग इत्यत्र कुम्भवत् कर्णौ यस्येति व्युत्पत्त्या कुम्भकर्णपदेन अतिकायः कथ्यते । अत एव 'बृहत्तनुः कुम्भवदेव कर्णावस्येत्यतो नाम च कुम्भकर्ण' इत्याहुः । रामं विना लक्ष्मणस्य कुम्भकर्णघातकत्वायोगादयमेवार्थः । कुम्भकर्णपदप्रयोगस्तु रामेण कुम्भकर्णवधोऽपि कृत इति सूचयितुम् ॥

शतशो नैरृता वन्यानित्यत्र वन्यान् वनवासिनः कपीन्, नैरृताः राक्षसाः ॥

अध्यायः २७८ ॥

कुम्भकर्णं हतं श्रुत्वेत्यत्र स्वानुजं कुम्भकर्णं हतं श्रुत्वेत्यर्थः ॥

अन्तर्हितः प्रकाशो वेत्यत्र अन्तर्हितः अदृश्यः, प्रकाशः दृश्यमानः ॥

व्यसृजल्लक्ष्मणायाष्टावित्यत्र व्यसृजत् विशेषेण धनुषि सन्दधे ॥

एभिः सहायैरित्यत्र एभिः सहायैः सहित इति योग्यपदाध्याहारः ॥

अध्यायः २८० ॥

सावित्र्या राजसत्तमेत्यत्र सावित्र्या गायत्रीमन्त्रेण ॥

ततः सुमनसः शेषा इत्यत्र शेषाः देवपूजाशेषभूताः सुमनसः पुष्पाणि॥

अप्रदाता पिता वाच्य इत्यत्र वाच्यः निन्द्यः । पितुः अनु अनन्तरं अङ्गीकृतभार्यायामुदासीनः ॥

सामन्तेन हृतमित्यत्र सामन्तः प्रधानी । छिद्रं अन्धत्वम् । पूर्ववैरं जन्मान्तरवैरं वा चक्षुषि सति गृहीतदण्डादिवैरं वा ॥

स बालवत्सया सार्धमित्यत्र सः द्युमत्सेनः बालेव सा वत्सला बालवत्सला तया ॥

साङ्कृते रन्तिदेवस्येत्यत्र सम्यक्कृतिः सङ्कृतिः सङ्कृतिसम्बन्धी साङ्कृतिः तस्य ॥

सकृदम्भो निपततीत्यत्र अम्भः धारोदकम् ॥ अध्यायः २८२ ॥

भाण्डं वैवाहिकमित्यत्र भाण्डं द्रव्यम् ॥

यथा विजानाति सुता ममैवेत्यत्र यथा यथावत् । युज्यति युज्यते । ते समीपं अधिगतोऽस्मि प्राप्तोऽस्मि ॥

त्वं ममाहं च वै भवेत्यत्र त्वं ममानुरूपोऽसि । अहं च तव अनुरूपोऽस्मि । तस्मादयं संयोगोऽप्यनुरूपो हि । मे सुतां कन्यां सत्यवतस्तव पुत्रस्य भार्यां ते स्नुषां प्रतीच्छ ॥

तिसृणां वसतीनामित्यत्र तिसृणां वसतीनां उपवासानां स्थानं अनुष्ठानम् ॥

व्यवसायश्च कारणमित्यत्र व्यवसायः इदं करोमीति निश्चयः कारणं स्वकृतकर्मपूर्तिकारणम् ॥

तिष्ठन्ती साऽपि सावित्रीत्यत्र तिष्ठन्ती तपसि स्थिता । दुःखान्विता या सावित्री, तिष्ठन्त्यास्तस्याः सावित्र्याः व्यत्यवर्तत तद्दिनं गतमासीत् ॥

फलाहारो महद्वनमित्यत्र फलस्य आहारः आहरणं यस्य स तथोक्तः । अनुज्ञातुं अनुज्ञामादातुम् ॥

अनयाभ्यर्थनायुक्तमित्यत्र अनयेन अनीत्या अभ्यर्थनया च युक्तम् ॥

कालो मुनिवचस्स्मरादित्यत्र मुनिवचस्स्मरात् नारदवचस्स्मरणात् ॥

अध्यायः २८४ ॥

कठिनं पूरयामासेत्यत्र कठिनं परशुं पूरयामास वृक्षान्तः प्रवेशयामास ॥

व्यायामेन बहुदूरगमनेन तेन वृक्षच्छेदेन च ॥

निश्चक्राम यमो बलादित्यत्र अन्तर्णीतो णिच्, निष्क्रामयामासेत्यर्थः । तत्वाभिमानितया स्वस्यापि बहिर्निर्गमनात् निश्चक्रामेति भावः ॥

यावद्गम्यं गतमित्यत्र गम्यं गमनयोग्यं स्थानं यावत्, तावत् गतमागतम् । अतः परमाकाशमार्गे गन्तुं न शक्यत इति भावः ॥

प्राहुः सप्तपदं मित्रमित्यत्र अनुयात्रारूपं सप्तपदं वा, अभ्युत्थानरूपं सप्तपदं वा ॥

नानात्मवन्तं चेत्यत्र वने नानात्मवन्तं नानाप्रयत्नवन्तं नियमं च वासं च परिश्रमं च ये चरन्ति, ते सन्तः विजानतः पुरुषस्य धर्ममेव सहायमुदाहरन्ति ॥

एकस्य धर्मस्य सतां मतेनेत्यत्र सतां मतेन अनुमतेन एकस्य मुख्यस्य धर्मस्य मोक्षसाधननिवृत्तिरूपधर्मस्य तं श्रुत्यादौ प्रसिद्धं मार्गं सर्वे अनुप्रपन्नाः स वै । द्वितीयं निवृत्तिरूपधर्ममार्गात् द्वितीयं प्रवृत्तिरूपधर्ममार्गं, तृतीयं अर्थमार्गं च प्रपन्ना मा स । चतुर्थं काममार्गं च प्रपन्ना मा स वै । तस्मात्कारणात् सन्तः धर्मं निवृत्तिरूपधर्मं प्रधानमाहुः ॥

सा गतिः परलोकगतिः ॥

न तेऽपवर्गः सुकृतादित्यत्र सुकृतात्पुण्याद्विना यथा अन्येषु वरेषु त्वया कृतः वरः मम न, तथा त्वया कृतः अपवर्गोऽपि मम न ॥

यथा मृता ह्येवमित्यत्र अहं पतिं विना, अव्ययानामनेकार्थत्वात् यथा यस्मात् मृता हि, एवं तस्मात् भर्तृविनाकृ(ता)तां श्रियमपि न कामये ॥

वरातिसर्गः शतपुत्रतेत्यत्र शतपुत्रता शतपुत्रताख्यः ॥

यदि सह्यं समुत्तिष्ठेत्यत्र सह्यं सहनयोग्यम् ॥

मात्रा पित्रा च सुभृशमित्यत्र मात्रा पित्रा चेति द्वाभ्यां दुःखिताभ्यामिति योजना ॥

यावद्धरिष्यसे पुत्र इत्यत्र धरिष्यसे प्राणान् धारयिष्यसि ॥

अध्यायः २८५ ॥

पार्थिवी चैव वृद्धिस्त इत्यत्र पार्थिवी पृथिवीसम्बन्धिनी अभिवृद्धिः राज्यप्राप्तिरित्यर्थः । यथा भवतीति पूर्वेणान्वयः ॥

नाकस्मादेव जानीम इत्यत्र अकस्मादकारणान्न ॥

चतुर्वर्षशतायुर्मे इत्यत्र यः सत्यवान् तस्य मे भर्तुरिति सम्बन्धः ॥

अध्यायः २८७ ॥

यत्तदेत्यत्र हेति पदच्छेदः ॥

प्राणिनां प्राणभृत्परमित्यत्र यः प्राणभृत् तेन इष्यन्त इति सम्बन्धः ॥

गमिष्यति शमक्षयमित्यत्र सा कीर्तिः ते प्राणान् अक्षयं शं च आदाय गमिष्यति ॥

पुरुषेण निबोध त इत्यत्र पुरुषेणेत्यस्य जीवतेति पूर्वपदेन सम्बन्धः ॥

मामित्येव महाभुजेत्यत्र मामुद्दिश्येति योग्यपदाध्याहारः ॥

विशाखयोर्मध्यगत इत्यत्र विशाखयोः विशाखानक्षत्रस्य द्वयोस्तारयोः ॥

अध्यायः २९१ ॥

भगवन्तमहमित्यत्र नान्यं देवं कथञ्चनेत्यत्र च उद्दिश्येति योग्यपदाध्याहारः ॥

अर्जुनप्रतिमं चेत्यत्र कार्तवीर्यार्जुनप्रतिममित्यर्थः ॥

शशंसास्मै वृषस्तदेत्यत्र सूर्यं प्रति कर्णेन प्रेपितः कर्णपुत्रः ॥

अध्यायः २९२ ॥

प्राणानुपस्पृश्य तदेत्यत्र प्राणानुपस्पृश्य प्राणायामं कृत्वा ॥

त्वया प्रलब्धमित्यत्र प्रलब्धं वञ्चितम् ॥ अध्यायः २९४ ॥

आदित्ये कुण्डले राज्ञीत्यत्र आदित्ये सूर्यसम्बन्धिनी मत्समे मम कुण्डलसदृशे कुण्डले, मूलरूपस्थितकुण्डले इति यावत् ॥ अध्यायः २९५ ॥

शुक्ले दशोत्तरे पक्ष इत्यत्र दशोत्तरे दशदिनोत्तरे शुक्ले पक्षे ॥

चक्षुपा वाहिनीगतमित्यत्र वाहिनी प्रवाहिनी नदी ॥ अ० २९६ ॥

दत्तरक्षप्रतिसरामित्यत्र प्रति प्रवाहाधोभागं प्रति सरतीति प्रतिसरा, रज्ज्वादिना दत्तरक्षा च सा प्रतिसरा च दत्तरक्षप्रतिसरा ॥

जातो जातोऽस्मि भामिनीत्यत्र एतावत्कालमारभ्य जातोऽप्यहं इदानीं दिष्टवान् भाग्यवान् जातोऽस्मि । 'दैवं दिष्टं भागधेयम्' इत्यमरः ॥

अध्यायः २९८ ॥

निर्वापां बहुवार्षिकीमित्यत्र निर्वापां बीजावापरहितां बहुवार्षिकीं बहु-वर्षमारभ्य फलन्तीं अवनिम् ॥

विदितोऽहं रवेः पूर्वमायान् देवस्तवान्तिकमित्यत्र तव अन्तिक-मायान् आगच्छन् देवः अहं रवेः सकाशात्पूर्वमेव विदित इति योजना ॥

यद्यमोघामसंशय इत्यत्र असंशये प्राणसंशयरहितकाले ॥

कर्णिनालीकनाराचानित्यत्र आकर्णान्तमाकृष्टाः कर्णिनः, 'नालीकं पद्मबाणयोः' इत्यभिधानात् नालीकाः नाराचाश्च शरविशेषाः ॥

अनुत्तराः सर्ववर्णेष्वित्यत्र न विद्यते उत्तरमुत्तमं येभ्यस्ते तथोक्ताः ॥

अध्यायः २९९ ॥

न निमित्तं न कारणमित्यत्र दृष्टं निमित्तकारणं उपादानकारणं च । किन्त्वदृष्टमेव कारणमित्याह—धर्म इति । अधर्मस्याप्युपलक्षणमेतत् ॥

प्रातिकामेन यदित्यत्र यत् यदा प्रेप्यवत् कृता ॥

मम पूर्वपरिग्रह इत्यत्र पूर्वं पूर्वमारभ्य इदं जलं परिगृह्यत इति व्युत्पत्त्या मम परिग्रहः मदधीनम् ॥

प्रश्नानु माद्रेयेत्यत्र प्रश्नानु प्रश्नानामुत्तरदानानन्तरम् ॥

किं विद्या वै न त इत्यत्र हे पार्थ तव विद्या न किम्॥ अ० ३०० ॥

स ददर्श हतान् भ्रातॄनित्यत्र हतान् मृतप्रायान् ॥

उपांशु विहितं कृतमित्यत्र विरुद्धं हितं विहितं अहितमित्यर्थः ॥

प्रयोगोऽयं दुरात्मन इत्यत्र प्रयोगः जले विपादिप्रयोगः ॥

तस्यासीन्न विपेणेत्यत्र तस्य दुर्योधनस्य विपेण दूपितं नेति चिन्तये। यतः मे भ्रातॄणां मुखवर्णाः यथा पूर्वं यथा तथा प्रसन्नाः ॥

कोऽन्यः प्रति समासेनेत्यत्र समासेन सङ्कोचेन प्रति प्रतिगच्छेत् ॥

मारुतानां प्रधानधृगित्यत्र प्रधानं रूपं धारयतीति स तथोक्तः ॥

कामं नैतदित्यत्र एतत् स्वेनैव स्वस्य प्रशंसनम् ॥

के चेतश्चाभितश्चरा इत्यत्र सार्वविभक्तिकस्तसिरिति वचनात् इतः अस्य आदित्यस्य ॥

ब्रह्मा ह्यादित्यमुन्नयतीत्यत्र ब्रह्मा सूर्योदयात्प्राक् प्रतिबन्धकरक्षोवधाय गायत्र्यर्घ्यदातृ ब्राह्मणकुलम् । धर्मः अस्तमयात्प्राक् प्रतिबन्धकरक्षोवधाय गायत्र्यर्घ्यरूपधर्मः ॥

कश्च धर्मः सतामिवेत्यत्र सतां ऋष्यादीनामिव ब्राह्मणानां को धर्म इति प्रश्नार्थः ॥

परित्यागोऽसतामिवेत्यत्र असतां परित्याग इव ब्राह्मणानामपि कश्चित्परित्यागोऽस्ति । सः क इति योजना। परित्यागोऽसतामिवेत्युत्तरवाक्ये असतां दुर्जनानां परित्यागवत् परित्यागः स्वपुत्रमित्रकलत्रादीनां परित्यजनम् । परित्यागः परितः श्लाघ्यस्त्याग इति त्रिरावृत्त्या योजना । अन्ते संन्यासाश्रम एव महांस्त्याग इति भावः ॥

किमेषामसतामिवेत्यत्र असतामिव एषां किं दूषणमिति प्रश्नार्थः ॥

इज्यस्त्वमेषामित्यत्र इज्यस्त्वं सर्वजनपूज्यत्वम्। ज्यायानितिवत् इज्या-नित्यपि वैदिकं पदम्। यज्ञः एषां धर्म इत्यर्थः ॥

वागेषा वृश्चतेऽयज्ञमित्यत्र एषा वाक् सामादिरूपा वाक् अयज्ञं यज्ञ-विरोधिनं वृश्चते छिनत्ति। तां सामयजुषोर्वाचम्। यस्य साम्नो गाने यस्य यजुषः पाठे च यज्ञविरोधिनः नश्यन्ति तत्साम यजुश्च यज्ञियमिति भावः ॥

किंस्विदावपतामित्यत्र आवपतां बीजावापं कुर्वतां कृषीवलानां वस्तु किम्। निवपतां बीजावापं कुर्वतां तेषामेव वरं स्वप्रयत्नेन क्रियमाणं वरं श्रेष्ठं वस्तु ॥

किंस्विज्जातं न चोपतीत्यत्र उपति उकारवाच्यात् पिपासादिक्लेशात पाति स्तन्यपानादिना आत्मानं रक्षतीति उषो मानुषशिशुः, तद्वदाचरति उपति ॥

किंस्विदावपनं महदित्यत्र आवपनं बीजावापस्थानम् ॥

किंस्विदेकपदमित्यत्र पचते कीर्त्यत इत्येकपदं मुख्यम्। दाक्ष्यं दाक्षिण्यं दयेत्यर्थः ॥

सुखानां तुष्टिरुत्तमेत्यत्र तुष्टिः अलम्बुद्धिः ॥

कश्च धर्मः सदाफल इत्यत्र सदा फलं यस्य सः सदाफलः, कीर्तना-दिना फलच्छेदरहित इत्यर्थः। त्रेताधर्मः त्रेतायुगे क्रियमाणो धर्मः सदाफलः। तस्मिन्युगे वर्तमानानां पुण्यश्लोकानां चक्रवर्तिनां श्लाघारहितत्वेन कृतधर्मक्षये कारणाभावादिति भावः। कृतयुगे धर्मफलस्य निर्णीतत्वेन सन्देहमूलप्रश्नायो-गात्, द्वापरकलियुगयोः संशयविपरीतज्ञानाभ्यां प्रायशः धर्मवैफल्यस्य निश्चित-त्वेन सन्देहमूलप्रश्नायोगाच्च त्रेतायुगधर्मस्यायं प्रश्न इति धर्मराजस्य हृदयम् ॥

अतीतानागते चोभे इत्यत्र अतीतं नष्टम्, अनागतं अनागमनमलाभः इत्युभे ॥

सापत्नं जीवमिच्छसीत्यत्र सापत्नं स्वमातृसपत्न्याः पुत्रं जीवं जीवतीति व्युत्पत्त्या जीवन्तम् ॥

आनृशंस्यं पर इत्यत्र आनृशंस्यं दया ॥

· मातृत्वं सममिच्छामीत्यत्र मातृत्वं मातुः पुत्ररूपद्रव्यम् ॥ अ० ३०१ ॥

सुखप्रतिमबुद्धानामित्यत्र सुखस्य प्रतिमा उपमा यथा भवति तथा सुप्त्वा बुद्धानां प्रबुद्धानां मम भ्रातॄणां इन्द्रियाणि उपलक्षये । सुप्त्युत्थितानामेतेषां प्रसन्नचक्षुरादीन्द्रियदर्शने सुखकार्येव सुप्तिस्त्वया दत्ता, न तु दुःखकरो मोह इति भावः ॥

दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट् सदा जिताः । द्वे पूर्वे मध्यमे द्वे च द्वे चान्तेऽसाम्परायके इत्यत्र पञ्चसु पञ्चमहायज्ञेषु वेदपञ्चरात्राख्यपञ्चविद्यासु वा रक्तः अनुरागवान् । द्वे कामक्रोधौ पूर्वे शैशवमारभ्य विद्यमाने; द्वे लोभमोहौ, लोभो धनलोभः मोहः पुत्रमित्रकलत्रादिषु ममतारूपः ईश्वरोऽहमहं भोगीत्यादिमिथ्याज्ञानरूपो वा; असाम्परायके मोक्षविरोधिनी द्वे मदो मत्सरश्चेति द्वे, अन्ते वार्धके पुत्रपौत्रधनधान्यादिसम्पत्त्या मदोऽपि प्रायः वार्धके भवतीति भावः । एवं षट् त्वया जिता इति पूर्वेणान्वयः ॥

स्वनिवासं धृतव्रता इत्यत्र स्वनिवासं स्वेषां अज्ञातनिवासम् ॥

अपि नस्तद्भवेदित्यत्र तत् पुनर्द्वादशवर्षपर्यन्तं वने निवसनम् ॥

प्रच्छन्नमेव हरिणेत्यत्र हरिणा इन्द्रेण बलनिग्रहे परबलनिग्रहे । मुनिरूपाय 'अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूय' इत्यादिना हरिस्मरणं कुर्वते ॥

हुताशनेन यच्चाप इत्यत्र आपः समुद्रोदकानि ॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां वनपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचितलक्षालंकाराख्यटीकायां द्व्यधिकत्रिशततमोऽध्यायः ॥

॥ अरण्यपर्व समाप्तम् ॥

---

# अथ विराटपर्व ४

## ॥ प्रथमोऽध्यायः ॥

गुप्तकाराश्च मत्ताश्चेत्यत्र गुप्तकाराः गूढतया परद्रोहं कुर्वन्तः ॥

हरिणा वृत्रनिग्रह इत्यत्र हरिणा नारायणेन ॥

इति विराटपर्वणि लक्षालंकारे प्रथमोऽध्यायः ।

---

यानि यानीह कर्माणि तस्मै चक्रमहे वयमित्यत्र तस्मै विराटाय चक्रमहे । 'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन भण्यत' इति वचनात् लिट्-प्रयोगः ॥

सभास्तारो भविष्यामीत्यत्र 'सभासदः सभास्ताराः सभ्याः सामाज-काश्च त' इत्यभिधानात् सभास्तारः सभ्यः सभायां पूज्य इति यावत् ॥

वैडूर्यकाञ्चनानित्यत्र वैडूर्यकाञ्चनान् वैडूर्यकाञ्चनखचितान् अक्षानक्ष-क्रीडासाधनान्, कृष्णाक्षान् कृष्णवर्णानक्षक्रीडासाधनान्, लोहिताक्षान् लोहित-वर्णानक्षक्रीडासाधनान् सुवेष्टितान् चीलान्तःस्थापितान् धारयिष्ये विराटं धार-यिष्ये तस्मै दास्यामीत्यर्थः ॥ अध्यायः २ ॥

पौरोगवो ब्रुवाण इत्यत्र 'पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवा' इत्यभिधानात् पौरोगवः सूपकाराणामध्यक्षः ॥

आरालिको गोविकर्तेत्यत्र 'आरालिका आन्धसिकाः सूदा औदनिका गुणा' इत्यभिधानात् आरालिकः अन्नकर्ता, गोविकर्ता गवां विशेषेण क्षीरादि-कर्ता, सूपकर्ता सूपादितत्साधनकर्ता ॥

दक्षिणे चैव सव्ये च गवामिव हविष्कृतावित्यत्र दक्षिणे सव्ये च गवां शराणां हवींपि शरास्त्यहवींपीत्यर्थः । कृतौ कुर्वाणाविव तिष्ठतः ॥

संवर्तुं नृप दुष्करावित्यत्र संवरणमाच्छादनं कर्तुम् ॥

अश्वान् परिभविष्यन्तीत्यत्र अश्वान् वडवा वाम्यः जातु कचिच्च परिभविष्यन्ति, तथा वडवाः शिक्षिताः करिष्यामीति भावः ॥

तथा सज्वलितमित्यत्र तद्विदो जनाः नीतिशास्त्रविदो जनाः तथा तथाविधं सहदेवं किञ्चित्सज्वलितं ददृशुः, पूर्वोक्तप्रकारादपि नीत्यादिशास्त्रे किञ्चिदभ्यधिकबुद्धिप्रकाशसहितं ददृशुरिति योजना ॥

सुनीतमायी शूरश्चेत्यत्र सुष्ठु नीताः नीतिमन्तः मायिनो यस्मात्स तथोक्तः ॥

यथा न दुर्हृदः पापा इत्यत्र त्वां दृष्ट्वा दुर्हृदः पापाः पुनः सुखिनो यथा न भवन्ति तथा कुर्याः । भवती वर्णतः क्षत्रियवर्णतः यथा वर्तते तथा कुर्या इति पूर्वेणान्वयः ॥ अध्यायः ३ ॥

हन्तेमां राजवसतिमित्यत्र राजवसतिं राज्ञो निकटे निवसनप्रकारम् । राजकुलं राज्ञां निकटम् ॥

दुर्वसन्नेव कौरव्याजानता राजवेश्मनीत्यत्र राजवेश्मनि तेन राज्ञा अजानता सता दुर्वसन् दुःखेन वासं कुर्वन्नेव भवेत् ॥

दृष्टद्वारो लभेदित्यत्र दृष्टद्वारः द्वारे दृष्टः सन् द्रष्टुं राजानं द्रष्टुं लभेत् गच्छेत् ॥

यत्र नाभिपजेत्पर इत्यत्र यत्र परः नाभिपजेत् अभिपङ्गं सम्बन्धं न प्राप्नुयात्, ममेदमासनमिति कलहं न कुर्यादिति भावः ॥

यो नयानयपर्यङ्कमित्यत्र इतस्ततः नीयते, आनीयत इति नयानयः स चासौ पर्यङ्कश्च तम् ॥

शङ्केरन् दृष्टचारिण इत्यत्र दृष्टचारिणः दृष्टे एतद्दर्शनविपये अन्तःपुरे चारिणः दासीदारादिजनाः ॥

न चानुशिष्येदित्यत्र अनुशिष्येत् एवं कुर्विति अनुशिक्षणं कुर्यात ॥

द्वेष्टि यानहिताश्च त इत्यत्र यान् अन्तःपुरचरेपु दसीजनेपु दारेपु च मैत्रीं कुर्वतः ॥

यस्य भर्ताऽनुयुञ्जीतेत्यत्र भर्ता राजा यस्य पुरुषस्य ॥

समर्थनासु सर्वास्वित्यत्र समर्थनासु यत्किञ्चित्कार्यसमर्थनसमयेपु ॥

न च सन्दर्शने किञ्चित्प्रवृद्धमित्यत्र किञ्चित्प्रवृद्धं अल्पबहुकालम् ॥

अपि ह्येतद्दरिद्राणामित्यत्र एतत् दर्शनानन्तरमपि आभिमुख्येन· बहुकालावस्थानं दरिद्राणामपि व्यलीकस्थानं 'व्यलीकं त्वप्रियेऽनृत' इत्यभिधानात् अप्रियस्थानम्, किमु राज्ञामिति भावः ॥ अध्यायः ४ ॥

नातिगाढं प्रहृष्येदित्यत्र प्रहृष्येत् प्रहर्षेण अट्टहासं कुर्वीत ॥

संविन्दति हि राजानमित्यत्र राजानं राजानमेव विन्दति सेवते ॥

धनं किञ्चिदपि स्पृशेदित्यत्र धनं राजधनं वियोगरूपधनं वा । धृतं कट्टलिकया कृतं द्रव्यं धनं न भवतीति नधनं अन्नपानादिरूपं प्राप्नोति राजकरादेव प्राप्नोति । तदेव विवेचयति—यानमित्यादिना ॥

लुब्धान् ब्रुवाणा इत्यत्र लुब्धान् मृगयून् ब्रुवाणाः स्वान् ब्रुवाणाः ॥

शार्दूलः पृषतीमिवेत्यत्र 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृग' इत्यमरः। पृषती मृगी ॥ अध्यायः ५ ॥

उद्बन्धमिव कृष्णं चेत्यत्र उद्बन्धं उत्कृष्टबन्धनसहितं शवमिव स्थितं कृष्णं कृष्णवर्णं संवृतमाच्छन्नं यथा भवति तथा धनूंषि आवह अन्तः प्रापय ॥

सह धर्मेण धर्मात्मेत्यत्र भ्रातृभिः सह स्थितो यो धर्मात्मा धर्मराजः तं विवित्सता वेत्तुमिच्छता धर्मेण यमेन । अन्यत् स्पष्टम् ॥

इदं गोमृगमित्यत्र गौश्च मृगश्च गोमृगम् । हार्यं हर्तुं योग्यं चर्म ॥

तानि वीरयशोज्ञाननिराबाधानीत्यत्र वीराणां पाण्डवानां यशसा ज्ञानेन च निराबाधानि तान्यायुधानि ॥

तच्चानीय धनुर्मध्य इत्यत्र आनीय धनुर्मध्ये प्रापयित्वा निक्षिप्येत्यर्थः ॥

यानि चात्र विशालानीत्यत्र तानि लतामयदामानि । तेषामायुधानाम् ॥

अथ छन्नानि नामानीत्यत्र अथ धौम्यपरित्यागानन्तरं विराटनगरप्रवेशपर्यन्तम् ॥ अध्यायः ६ ॥

महाहवे यज्ञभृतेव दानवा इत्यत्र यज्ञभृता नारायणेन महाहवे दानवा इव ॥

सचन्द्रनक्षत्र इवांशुमानह इत्यत्र अहः अह्नि सचन्द्रनक्षत्रः अंशुमान् सूर्य इवेत्यभूतोपमा । मन्दस्मितं चन्द्रवत्, दन्तावली नक्षत्रवत्, स्वयं सूर्यवदित्यर्थः ॥

न चोष्णरश्मिः किरणैः समुच्छ्रित इत्यत्र अयमागच्छन् यतिः किरणैः समुच्छ्रितः उष्णरश्मिश्च न । अस्य राजोचितानुचरादिश्च न; अतः महाराजोऽपि न । तथापि विचित्रता तेजोरूपादिना अतिचित्रत्वं दृश्यत इति योजना ॥

समुद्यता साऽऽस सभेत्यत्र सा सभा समुद्यता सन्नद्धा आसेति पदच्छेदः ॥

क्व वास्यसे किं करवाणीत्यत्र वास्यसे केन वास्योऽसि । यतः परेणैव स्थाप्यत्वादेवमुक्तम् ॥

अहं संन्यासीत्युक्ते मिथ्यावादः स्यादित्यत आह—यथाप्रतिज्ञं चेति । यथाप्रतिज्ञं प्रतिज्ञामनतिक्रम्य । स्वभावतः यतित्वाभावेऽपि अज्ञातवासाय पञ्चानां पञ्चविधरूपस्य प्रतिज्ञातत्वात् प्रतिज्ञानुसारेण यतित्वमप्यस्तीति भावः॥

गुरूपदेशान्नियमादित्यत्र गुरूपदेशात् गुरोर्धौम्यस्योपदेशात्, नियमात् असत्प्रतिज्ञारूपनियमाच्च कुलक्रमार्थं कुले ब्राह्मणकुले क्रमः क्रमणं पादविक्षेपः तदर्थं पितृभिः अस्मत्पितृभूतयमदेवेन, गुरुत्वाद्बहुवचनम् । नियोजितं आज्ञप्तं व्रतमस्ति । तेन व्रतेन द्विजोऽस्मि । अत एव द्विजो न । स्वभावतः क्षत्रियत्वेऽप्यौपाधिकद्विजत्वमस्ति, अतो नासत्यमिति भावः ॥

ममैवं पञ्चेन्द्रियगात्रदर्शिन इत्यत्र पञ्चेन्द्रियसहितं गात्रं ये पश्यन्ति ते ज्ञानिनः पञ्चैव पञ्चमहाभूतान्येव पितॄन् वदन्ति । 'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः' इत्याद्या स्मृतिः श्रुतिश्च यथा, तथेति पूर्वेणान्वयः । अस्य शरीरस्य पञ्चमहाभूतेभ्यो जातत्वात् पितृरेतसा उत्पत्तावपि उपचायकपञ्चमहाभूतानामेव देहासाधारणकारणत्वान्मुख्यं पितृत्वमिति भावः।

पाण्डुपुत्रत्वकथने अज्ञातवासभङ्गः, अन्यपुत्रत्वकथने मिथ्यावादः स्यादित्यत एवमुक्तम् ॥

मनुष्यजातित्वमचिन्तयन्नित्यत्र पञ्चभूतकार्ये मम देहे यन्मनुष्यजातित्वम्, औपाधिकत्वात्तदचिन्तयन् अहं पितृभिः पञ्चमहाभूतैः अतुल्यो नास्मि । औपाधिकमानुषत्वस्योपेक्षायां पञ्चमहाभूतानां देहस्य च साम्यमेवेति भावः ॥

कङ्कोऽस्मि नाम्नेत्यत्र स्वकृतेन कर्मणा सङ्केतेन । इदमपि सत्यरक्षणार्थम् ॥

द्यूतप्रसङ्गादित्यत्र द्यूते पणं दत्त्वा दत्त्वा धनक्षयात् संन्यासी जात इति बाह्यो भावः । शकुनिना सह द्यूतप्रसङ्गात् राज्ये गते सति अज्ञातवासार्थं संन्यासी जात इत्यान्तरो भावः ॥

युधिष्ठिरस्यासमीत्यत्र स्वस्य स्वात्मानं प्रति निरु(पा)पधिप्रेमास्पदत्वात् युधिष्ठिरस्य सखा असमीत्युक्तम् । तस्य शरीरमेव अहमस्मि स्वशरीरे यथा प्रीतिं करोति तथा मय्यपीति बाह्यो भावः । तच्छरीरमेव मच्छरीरमित्यान्तरो भावः ॥

राजाऽस्मि तस्य स्म पुरे भवन् पुरेत्यत्र पुरा तस्य पुरे विद्यमानः अहं राजाऽस्मि राजवत्सर्वजनपूज्यत्वात् राजाऽसमीत्येको भावः । वस्तुतस्तु तस्य पुरे अहमेव राजेत्यान्तरो भावः ॥

सोऽहं पुरेत्यत्र आवां समानवयस्काविति बाह्यो भावः । तदुत्पत्तिदिनमेव मदुत्पत्तिदिनम्, तन्मरणदिनमेव मन्मरणदिनम् । अतः स एवाहमित्यान्तरो भावः ॥

वैयाघ्रपाद्योऽस्मीत्यत्र व्याघ्रपदः गोत्रापत्यं पुमान् वैयाघ्रपाद्यः । 'वैयाघ्रपादगोत्राय' इति भीष्मस्य कथनात् सोमवंशप्रवर्तकः व्याघ्रपादपि कश्चिदस्ति ऋषिरिति बाह्यो भावः । तदेव सख्यं पूर्वं राजसखत्वात् इदानीमपि तदेव राजसख्यमेव मृगयामह इत्यर्थः ॥

न मेऽद्य माता न पितेत्यत्र यतित्वादहं मात्रादिकं विहायैवागतोऽस्मि । अतस्ते सर्वे मम अद्य अविद्यमानप्राया इति भावः । रूपं लावण्यम् ॥

पराजितः शकुनिरुतानि चिन्तयन्नित्यत्र शकुनेः शकुन्तपक्षिणः रुतान्यशुभसूचकध्वनीन् चिन्तयन् पराजितः गृहस्थाश्रमात्पराजयं प्राप्तः भ्रंशितोऽस्मीत्येको भावः। सौबलस्य शकुनेः कुत्सितवाक्येन पराजितोऽस्मीति हृदयम्॥

मृगद्विजानामित्यत्र मृगाणां द्विजानां शकुन्तेतरपक्षिणां रुतानीत्येको भावः । अरणीहरणसमये मृगरूपस्य यमस्य द्विजानां धौम्यादीनां च वाक्येन प्रव्रजितोऽस्मीत्यान्तरम् ॥

प्रिया हि धूर्ता ममेत्यत्र अक्षकोविदाः धूर्ताः प्रियाः ममापि सन्ति । तस्मादक्षक्रीडार्थं त्वां न वरये । किन्तु महाल्लक्षणभरितस्त्वं राज्यमेव पालयेति भावः ॥

न मे जितं किञ्चनेत्यत्र मे जितं वैराग्येण वशीकृतं मनः ॥

स वाऽस्य कश्चिच्च न तं बुबोध तदित्यत्र तत्तस्याद्यतिवेषधारित्वात् स वा विराटो वा अस्य कश्चिद्भृत्यजनो वा तं न बुबोधेति योजना ॥ अ० ७॥

खजं च दर्वीं च करेण धारयन्नित्यत्र खजं अन्नरसनिष्क्रमणाय खमवकाशं दातुं जातमिति व्युत्पत्त्या खजपदेन शमी कथ्यते । यस्समुचलु इत्यपभ्रंशभाषा ॥

गिरिराजसारवानित्यत्र गिरिराजसारवान् पर्वतराजवत्सत्ववान् ॥

तमिस्रया रात्रिमिवावभासयन्नित्यत्र तमिस्रया अन्धकारेण । भीमदर्शने सति भयेन सभास्थितानां निमीलितचक्षुस्त्वात् तमिस्रया रात्रिमिवेत्युक्तम् । यद्वा तमि अन्धकारं स्रावयति गमयतीति तमिस्रा चन्द्रज्योत्स्ना । सहस्रनेत्रावरजान्तकोपमः सहस्रनेत्रस्य इन्द्रस्य अवरजः अनन्तरदिक्पालः अन्तकः यमः ॥

भृशातुरोष्णं परिनिश्वसन्नित्यत्र भृशातुरं च उष्णं च यथा भवति तथा भृशातुरोष्णम् ॥

त्वां जीवितुं शत्रुदमेत्यत्र त्वामाश्रित्य जीवितुम् ॥

रागप्रकारांश्च बहून् फलाश्रयानित्यत्र रागं स्नेहं प्रकर्षेण कुर्वन्तीति रागप्रकाराः तान् ॥

अनीककर्णाग्रधर इत्यत्र अनीकस्य कर्णाग्रधरः कर्णधारः सेनानायक इत्यर्थः ॥

रा(ज्ञा)जा नियुक्त इत्यत्र रा(ज्ञा)जा धर्मराजेन ॥

प्रबलो भवेदित्यत्र मत्तः प्रबलोऽपि न भवेदिति नञावृत्त्या योजना ॥

एवं हि मन्ये तव कर्म तदित्यत्र तव कर्म तत् उपरि वक्ष्यमाणम् ॥

अध्यायः ८ ॥

प्रवालचित्रे प्रविमुच्य कुण्डले इत्यत्र कुण्डले प्रविमुच्य त्यक्त्वा परिवर्तके परितो वर्तमाने वर्तुले इत्यर्थः । कम्बू शङ्खकृतताटङ्कौ धृत्वा ॥

विशेषकेष्वस्त्यपीत्यत्र 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । विशेषकेषु तिलकेषु ॥

पुत्रेण तुल्यं भवेत्यत्र तुल्यं यथा भवति तथेति क्रियाविशेषणम् ॥

न मादृशाः सन्ति धनुर्धरा इत्यत्र मादृशाः स्त्रियः ॥

उत्तरायाः परिदत्स्व नर्तनमित्यत्र नर्तनं कारयितुं परिदत्स्व दिश ॥

न नृत्तभेदे भवतीदृशो जन इत्यत्र नृत्तभेदे ईदृशो जनो न । इयमेव महानर्तकीति भावः ॥

अध्यायः ९ ॥

वादितं वादित्रम् ॥

तुरगानवेक्षिता तुरगसादी ॥

रथानि यानानीत्यत्र ददानीति योग्यक्रियाध्याहारः॥ अध्यायः १० ॥

वालैश्च दामैरित्यत्र वालैः पुच्छाग्ररोममयैः दामैर्दामभिः ॥

अवल्लवत्वं अगोपालताम् ॥ अध्यायः ११ ॥

जुगूह दक्षिणे पार्श्वे इत्यत्र दक्षिणे पार्श्वे वेणीकेशान् जुगूह कबरीभारान्तः प्रवेश्य आच्छादितवती ॥

न च श्रद्दधतां दासीमित्यत्र श्रद्दधतामिति लोटि आत्मनेपदे बहुवचनम् । न श्रद्धधिर इत्यर्थः । कैकेयी केकयविषयजाता सुदेष्णा ॥

अथ सा छिन्नपक्षाभ्यामित्यत्र प्राक् अच्छिन्नपक्षवस्त्राभ्यामिव वल्कलाजिनसंवृतेत्यर्थः ॥

ह्रीनिषेधान्विता बालेत्यत्र ह्रिया लज्जया इतस्ततो दर्शनस्य निषेधेन अन्विता ह्रीनिषेधान्विता ॥

मृगरोहीमिवानीतामित्यत्र मृगरोहीं मृगबालाम् ॥

मृगीणामिव किन्नरीमित्यत्र मृगीणां मध्ये स्थितां किन्नरीमिव ॥

त्रिगम्भीरेत्यादेरयमर्थः—त्रिगम्भीरा नाभौ श्रोत्रयोश्चेति त्रिषु गम्भीरा। षडुन्नता कपोलयोः कुचयोः श्रोण्यां च अङ्गुल्यग्रे चेति षट्सु स्थानेषु उन्नता। पञ्चसु अधरे हस्ततलयोः पादतलयोश्चेति रक्तेषु रागयोग्येषु स्थानेषु रक्ता ॥

अरालपक्ष्मनयनेत्यत्र 'अरालं वृजिनं जिह्मं' इत्यभिधानात् अराले जिह्मे पक्ष्मणी नयने च यस्याः सा ॥

गूढसिरेत्यत्र 'नाडी तु धमनिः सिरा' इत्यमरः । गूढसिरा गूढनाडीनाला ॥

अस्मद्गुरुरमर्षण इत्यत्र अमर्षणः मारको न भवतीत्यमर्षणः शान्त इत्यर्थः ॥

भर्तुश्च ब्रह्मचारिणीत्यत्र भर्तुर्निमित्तात् ब्रह्मचारिणी । भर्तुः सहस्थित्यभावादिति भावः ॥

वीरपत्नी द्रौपदी ॥

वृक्षांश्चोपस्थितानित्यत्र उप प्रासादसमीपस्थोपवने स्थितान् वृक्षान् ॥

यदि त्वं पुरुषं स्वजेरित्यत्र स्वजेः आलिङ्गयसि ॥

सुस्नाताऽलङ्कृता च त्वमित्यत्र यं भर्तृभूतं मानवम् ॥

अध्यारोहेद्यथा वृक्षं वधायारुह्य तिष्ठतीत्यत्र वधाय स्वशत्रौ वृक्षमारुह्य तिष्ठति सति तमेव वृक्षं यथा आरोहेत् राजवेश्मनि स्थिता लेखया लावण्यलेखया अग्र्या त्वं मम तथा स्याः ननु ॥

सुतेषु च विसत्वमित्यत्र मे सुतादिषु विसत्वं विशेषेण सत्वमस्ति। तत् सुतादीनां सत्त्वात्कारणात् विश्वमपि ईदृशं स्प्रष्टुमशक्यम् ॥

दासीभावेन स्वस्या अपि कदाचिदुच्छिष्टं दद्यात्, स्वकरेण पादप्रक्षालनं वा कारयेदिति शङ्कया आह—या मे न दद्यादुच्छिष्टमित्यादि । प्रियैः प्रियोक्तिभिः रत्नेन वस्त्रैर्वा दत्तैरपि या मे उच्छिष्टं न दद्यादित्यादिपादत्रयस्य योजना । मम पतयो गन्धर्वाः तस्यास्त्राणं कुर्युरिति पूर्वक्रियाध्याहारेण योजना ॥

वाक् च त्वमसि भूतानामित्यत्र वक्तुं स्तोतुं योग्या वाक् ॥ अ० १२ ॥

अतिसृष्टानि मत्स्येनेत्यत्र अतिसृष्टानि दत्तानि विक्रीणन्निव विक्रयं कुर्वन्निव । तूष्णीं दाने अन्योन्यसम्बन्धं ज्ञास्यतीति भीत्या विक्रयव्याजेन प्रयच्छतीति भावः ॥

असकृल्लब्धलज्जा इत्यत्र अन्योन्यकलहे पराभवेन लब्धलज्जाः ॥

अणुत्वमपर इत्यत्र अणुत्वं बालकत्वम् ॥

महादेवस्य भक्त्या चेत्यत्र महांश्चासौ देवश्च महादेवो नारायणः । वैष्णवत्वगूहनार्थमिदं वचनम् ॥

न हि शक्नोमि विवृतमित्यत्र विशेषेण अभ्यासादिना वृतं विवृतम् ॥

शार्दूलशिथिलं चरन्नित्यत्र शार्दूलवत् शिथिलं यथा भवति तथा चरन् शनैः शनैश्चरन्नित्यर्थः ॥

बद्धकक्ष्योऽथ कौन्तेय इत्यत्र 'दूष्या कक्ष्या वरत्रा स्यात्' इत्यभिधानात् बद्धकक्ष्यः बद्धोदरबन्धनः ॥

प्रत्यपिङ्क्षन्महाबाहुरित्यत्र प्रत्यपिङ्क्षत् पिष्टं कृतवान् । 'पिपि पिष्टौ' इति धातोः लुङि रूपम् ॥ अध्यायः १३ ॥

नान्यस्त्रियं सम्परिचर्तुमर्हसीत्यत्र परिचर्तुं परिचरितुम् ॥

परैहि चाद्येत्यत्र परा उत्तमा, द्रौपद्या विशेषणम् । एहि ॥

श्यालप्रियत्वान्मम चेत्यत्र 'श्यालाः स्युर्भ्रातरः पत्न्याः' इत्यमरः । श्यालः पत्नीभ्राता । 'सूतपुत्रावमन्यस' इति वक्ष्यमाणत्वात् सुदेष्णाकीचकयोः क्षत्रस्त्रीसूतस्त्रीजातत्वेऽपि पित्रैक्यात् पत्नीभ्रातृत्वम् ॥

पापमाचरन्नित्यत्र पापं गले रज्जुबन्धादिना आत्महत्याम् ॥

त्वदर्थं तु हि जीवितं ममेत्यत्र त्वदर्थं त्यक्ष्यामि । मम जीवितं तु, त्वदर्थं हीति उभयत्राप्यावृत्त्या योजना ॥

अवारयन्तं वारयितुमशक्तम् ॥ अध्यायः १४ ॥

अभव्यरूपैः पुरुषैरित्यत्र तैः यः पन्थाः गतः तं पन्थानम् ॥

भार्याभिमत्तः पुरुष इत्यत्र भार्याभिमत्तः परभार्याभिमत्तः महात्मा महात्माऽपि ॥

मा तारकाणामित्यत्र माशब्दस्य प्राप्स्यसीत्यनेन सम्बन्धः ॥

उत दुष्प्रवेशनमित्यत्र दुःखकरं प्रवेशनं यस्य तदन्धं तमः ॥ अ० १५ ॥

प्रोवाच च सुदुःखार्तो भगिनीं निश्वसन्निव । अव्यक्तमृदुना नाम्ना शुष्यमाणः पुनः पुनरित्यत्र अव्यक्तमृदुना नाम्ना सुदेष्णां सम्बोध्य प्रोवाचेति सम्बन्धः ॥

मा गमिष्यसि वै इत्यत्र मा एतद्गोष्ठी तव माऽस्तु इति योजना ॥

सा त्वं दृष्ट्वेत्यत्र सा त्वं जीवितं मम जीवितं इच्छसि यदीच्छसि तर्हि दृष्ट्वा अवसरं दृष्ट्वा एनां मयि नयस्वेति योजना ॥

यत्त्वमेवमभीप्सित इत्यत्र यद्यस्मात्त्वं एवमभीप्सितः एवं अभीप्सितं यस्य स तथोक्तोऽसि ॥

विदितार्था भविष्यामीत्यत्र विदितः अर्थः मदुक्तवाक्यस्य अर्थः यया सा तथोक्ता ॥

मध्वन्नार्थं तवेत्यत्र मधु मद्यम् ॥

विजने निरवग्रहामित्यत्र अव अधःकृत्य ग्रहः ग्रहणं बलात्कारेण ग्रहः तद्रहितां निरवग्रहाम् ॥

सम्पाकायां सुरायामित्यत्र सम्यक् पाको यस्याः, सम्पाका ॥

व्यवस्यति निराकृत इत्यत्र निराकृतः मया निराकृतोऽपि व्यवस्यति बलाद्ग्रहीतुं निश्चयं करिष्यति ॥

सापिधानं हिरण्मयमित्यत्र 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः। अपिधानेन सहितं सापिधानम् ॥

या सुरेत्यत्र जातमन्था सारोद्धाराय जातमथना ॥ अध्यायः १६ ॥

अन्तर्हितं तत इत्यत्र अन्तर्हितं रक्षः ॥

नावं लब्ध्वेव पारग इत्यत्र पारगः पारं गन्तुमिच्छन् ॥

दुरात्मा ह्यात्मसम्मतेरित्यत्र आत्मसम्मतेः तादर्थ्ये षष्ठी । आत्मसम्मत्यर्थम् ॥

मा गमिष्यसि दुर्बुद्धे इत्यत्र मा इदं वचनं माऽस्तु । दुर्गान्तरान्तरां दुःखेन गन्तुं योग्यमन्धं तमः तस्य अन्तरन्तर्विद्यमानाम् ॥

कीटपुञ्जगुहाशया इत्यत्र कीटपुञ्जवत् वनगुहायां निलीनाः ॥

न युक्तं सूतपुत्रेणेत्यत्र सूतपुत्रेण कृतं न युक्तम् ॥

क्रोधादस्तमवर्ततेत्यत्र कीचकस्य अस्तं अस्तमयो यथा भवति तथा अस्तं धूमोच्छ्वासः अवर्ततेति योजना ॥

जहि मा चापलं कुर्वित्यत्र जहि क्रोधं जहि । विपक्षः अस्मदज्ञातवासस्य विरुद्धः पक्षः पञ्चदशदिनात्मकः अपूर्णः । अतश्चापलं मा कुर्विति हृदयम् । ध्वनिस्तु अपूर्णः सम्पूर्णशाखारहितः अयं तरुः विपक्षः विगतः पक्षः पाकसहायो यस्मात् स तथोक्तः ॥

अथाङ्गुष्ठेनेव गृह्णन्नित्यत्र अङ्गुष्ठेन स्वहस्ताङ्गुष्ठेन भीमस्याङ्गुष्ठं गृह्णन्निव प्रत्यषेधयत् नखरेखया निषेधं कृतवान् ॥

आकारं परिरक्षन्तीत्यत्र धर्मसंहितां प्रतिज्ञां आसंवत्सरमेवं स्थास्याम इति भर्तॄणां स्वस्याश्च प्रतिज्ञां आकारं प्रतिज्ञानुगुणाकारं च परिरक्षन्ती ॥

धर्मे सत्ये प्रतिष्ठतामित्यत्र धर्मे सत्ये च प्र प्रकर्षेण तिष्ठतां राज्ञामिति सम्बन्धः ॥

विनियुक्तमथापि वै । क्रियाणामक्रियाणां च प्रवणे पुण्यपापयो-

रित्यत्र क्रियाणामक्रियाणां च फलभूतयोः पुण्यपापयोः प्रवणे नम्रे आसक्ते सज्जीवदुर्जीववृन्दे अथापि पूर्वोक्तद्वन्द्वद्वयादनन्तरमपि विनियुक्तं द्वन्द्वं वै इति योजना ॥

सभ्यास्ते कर्मजं फलमित्यत्र कर्मजं फलं प्राप्नुवन्ति । निस्सङ्गं एकाकितयेत्यर्थः ॥

सुबुद्धो मरणं गत इत्यत्र सुबुद्धः प्रबुद्धः पश्चात् पापकरणानन्तरमेव तापेन तप्येत । अप्रबुद्धस्तु मरणं गतः पश्चात् मरणानन्तरं तापेन तप्येत ॥

कार्याकार्यस्थितो भवेत्यत्र कार्ये अकार्ये या स्थितिर्ब्रह्मणा उक्ता तद्वान् भव ॥ अध्यायः १७ ॥

कीचकं कृतकिल्बिषमित्यस्य स्मरन्तीत्युत्तरेणान्वयः ॥

मा मर्षयतीत्यत्र मा माम् ॥

केचिद्देवीं च तां नरा इत्यत्र तां सुदेष्णाम् ॥

विवक्षन्तं युधिष्ठिरमित्यत्र दृष्ट्वेति योग्यपदाध्याहारः ॥

मन्ये न काल इत्यत्र गन्धर्वाणां प्रायशो दिवा सञ्चाराभावादिति बाह्यो भावः । इदानीमेव कीचकशिक्षायां अज्ञातवासभङ्गः स्यात् । अतो रात्रावेव भविष्यतीत्यान्तरो भावः ॥

भर्तुर्भीरु भयादन्या इत्यत्र अन्याः सपत्नीः न क्रुध्यन्ति ॥

न क्रुद्धे प्रतियायादित्यत्र क्रुद्धे कीचके ॥

शैलूषं विद्धि मां पुनरित्यत्र 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यभिधानात् शैलूषो बिल्वः । बिल्वफलस्य सज्जनायोग्यत्वात् असज्जोऽपि तव योग्यं फलमिदानीं नास्तीति सूचनाय शैलूषोपमा ॥

कुर्यात्क्रुद्धो निशामिमामित्यत्र निशां यावत्पश्यति तावत् संक्रुध्यत इति सम्बन्धः ॥

कुलं तेन विनश्यतीत्यत्र तेन आत्मापराधेन तस्य कुलं विनश्यति ॥
अध्यायः १८ ॥

प्रादुर्भूतक्षणेत्यत्र रात्रौ प्रादुर्भूतक्षणा लब्धावसरा ॥

वृषेन्द्रमिव माहेयीत्यत्र 'माहेयी सौरभेयी गौः' इत्यभिधानात् वने वृद्धा अभिवृद्धा त्रिहायनी सुरभिकुमारी गौर्वृषेन्द्रमिवेति योजना ॥

मृगराजं यथा द्दप्तमित्यत्र मृगराजं श्रेष्ठमृगं मण्डनी वनं मण्डयती मृगवधूरिव ॥

यथा षष्ठी गुहं तथेत्यत्र षष्ठी षष्ठ्यामागता देवसेना गुहं षण्मुखम् ॥

दिशांगजसमाकारमित्यत्र दिशांगजो दिग्गजः तस्य समः आकारो यस्य तं भीमम् ॥

तत्कर्म कृतवतीत्यत्र तत् मम पादघाताख्यं कर्म कृतवति तस्मिन् कीचके ॥

संवेजितः कुरुश्रेष्ठ इत्यत्र तोत्रैः कशाविशेषैः संवेजितः कुपित इत्यर्थः ॥

यद्यप्यसुकृतं कर्मेत्यत्र सुष्ठु कर्तुमशक्यं असुकृतम् ॥

गोशीर्षकं पद्मकं चेत्यत्र 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यभिधानात् गोशीर्षकं चन्दनं पद्मकं पद्मवद्रागोपेतं हरिं हरिद्वर्णं पिष्ठे पेषणं कुर्वे ॥

गणयामि कृते न त इत्यत्र ते कृते बहूनि दुःखानि न गणयामि तानि श्रुत्वा तव क्लेशो भविष्यतीति न गणयामीति भावः ॥

स्वरूपं तव कौन्तेयेत्यत्र सु सुष्ठु अरूपं अननुरूपं गच्छ अनुगच्छ ॥

गमने पुरुषव्याघ्रेत्यत्र गम्यते सर्वैर्जनैरत्रेति गमने धरणीतले राजमार्ग इत्यर्थः ॥

शापितोऽसि मम प्राणैरित्यत्र शापः शपथः तं प्राप्तोऽसि ॥

अजनैःपरिवारितमित्यत्र जनैः परिवारितं न भवतीत्यजनैःपरिवारितमित्यलुक्समासः अरण्यमिति सम्बन्धः ॥

सारवद्धनमित्यत्र दिने दिने पणाय अभविष्यदिति योग्यक्रियाध्याहारः ॥

न जातु क्षयमाव्रजेदित्यस्य तर्ह्येदेविप्यदिति पूर्वेणान्वयः ॥

सहस्रमग्निकुण्डानामित्यत्र अग्नेः कुण्डानि परितो येषां ते अग्निकुण्डाः पञ्चाग्निमध्ये तपस्तपन्तः ॥

जीवितार्थेन संवृतमित्यत्र जीवितार्थेन जीवनाख्यप्रयोजनेन संवृतं यतिवेषेण च्छन्नम् ॥

तत उत्थायेत्यत्र ततः युद्धदर्शनार्थं उपविष्टमञ्चात् सर्वास्ताः युद्धदर्शनार्थमागताः सर्वा नारीः ॥

स धारयति कुण्डले इत्यत्र कुण्डले ताटङ्कौ ॥

कम्बुपाणिमथायान्तमित्यत्र कम्बुपाणिं शङ्खमयकङ्कणालङ्कृतपाणिम् ॥

मात्स्यं पार्थं चेत्यत्र मात्स्यं विराटं गायन्तं पार्थम् ॥

कृच्छ्रं प्राप्तं धनञ्जयमित्यत्र कृच्छ्रं शिखण्डिनीरूपादिसङ्कटम् ॥

अध्यायः १९ ॥

स्थितं पूर्वं जलमित्यत्र यत्र तटाके पूर्वं पूर्वसंवत्सरे जलं स्थितं, पुनः संवत्सरान्तरे वर्षाकाले तत्रैव तिष्ठति, इति अनेन प्रकारेण पर्यायं पुनः सम्पदागमनं इच्छन्ती अहं उदयं भवतामभ्युदयं प्रतीच्छामीति योजना । यद्वा निम्नस्थलात् कराभ्यां परितो निक्षिप्तं जलं शनैर्निम्नस्थले यथा गच्छति इति अनेन प्रकारेण । शेषं पूर्ववत् ॥

दैवसंयागमे यत्र इत्यत्र आगमे स्वानुकूल्येनागमने ॥

न दैविकमिदमित्यत्र दैविकं केवल(दै)देवनिमित्तं न । किन्तु धर्मराजस्य दुर्द्यूताख्यदुष्प्रयत्नकृतं च भवति ॥

वर्णकः सुकरो न चेत्यत्र वर्णकः कुङ्कुमादिभिः चन्दने कृतवर्णविशेषो वर्णकः ॥

अध्यायः २० ॥

यत्ते रक्तावित्यत्र यदस्मात् ते रक्तौ उभौ पाणी पराभूत्वा परसेवकौ भूत्वा कृतकिणौ, तस्माद्वाहुमूलं धिगिति पूर्वेणान्वयः ॥

तदहं तस्येत्यत्र तव संज्ञया कृतं शासनं धर्मराजस्य शासनम्, तस्य कृते अस्मि तूष्णीमस्मि ॥

वृत्तैषां चेत्यत्र एषां अर्जुनादीनां मतिः वृत्ता धर्मराजमनुसृत्य प्रवृत्ता। अहं तु धर्मराजमगर्हयम् ॥

मुनेर्धौम्यस्य शासत इत्यत्र धौम्यस्य मुनेः शासतः सत इति योजना ॥

अनुनीतेषु दारेष्वित्यत्र भर्त्रनुकूलतया नीतिमत्सु दारेषु अरुन्धत्यादिषु त्वमपि अनुनीता भर्त्रनुकूलनीतिमती असि ॥

वल्मीकभूतमित्यत्र शाम्यन् शमवान् तम् ॥

गुरुभर्तृकृतमित्यत्र गुरुभिः भर्तृभिः कृतं कार्यं ज्ञात्वा तदनुसारेण चरित्वा चेति योग्यपदाध्याहारः ॥

आवृतदर्शनः आवृतं दर्शनं ज्ञानं यस्य सः मिथ्याज्ञानीत्यर्थः ॥

कुरु मे क्षणमित्यत्र क्षणमवसरम् ॥ अध्यायः २१ ॥

दृढाङ्गं सुप्रतिष्ठितमित्यत्र दृढानि पट्टमञ्चपादाद्यङ्गानि यस्य तत् दृढाङ्गम् ॥

अह्नाय तवेत्यत्र अह्नाय शीघ्रम् ॥

तत्र दोषः परिहृत इत्यत्र दोषः परस्त्रीगमनाख्यदोषः ॥

कालेन नियतमित्यत्र कालेन मृत्युना ॥

नाग इवारुज इत्यत्र अरुजः नाशय ॥

मया हतांश्चेदित्यत्र मुख्यान् मात्स्यान् मात्स्यामात्यादीन् ॥

नाहं चोपासितुं शक्त इत्यत्र तव कीचकान्महाव्यसने समागते सति धर्मराजसेवां कृत्वा न तिष्ठामीति भावः। अन्ये अर्जुनादयः ॥

कथं वधमुपानीयामित्यत्र राजा धर्मराजः स्वकृतप्रतिज्ञाया अपरिपूर्तेः मरिष्यतीति भावः ॥ अध्यायः २२ ॥

तमिस्रायां सकुण्डलमित्यत्र 'तमिस्रा तामसी रात्रिः' इत्यभिधानात् तमिस्रायां रात्रौ ॥

उपरंस्यसि नारीष्वित्यत्र उपरंस्यसि उपरमं समाप्तिं करिष्यसि ॥

काये निवेशयामासेत्यत्र गुदरन्ध्रद्वारा प्रवेशयामास ॥ अ० २३ ॥

तमेव पर्यङ्कतले शुभाङ्गीत्यत्र तमेव कीचकहन्तारमेव प्राक्रोशदित्युत्तरेणान्वयः ॥ अध्यायः २४ ॥

विनिष्क्रम्य सभाजना इत्यत्र 'आनन्दनसभाजने' इत्यमरः । सभाजनाः आनन्दयन्त्यः ॥

तिर्यग्योनिगतां बाले इत्यत्र तिर्यग्योनिः शिखण्डिनीवेषः ॥

रक्तानि स्पर्शजे सुख इत्यत्र रक्तानि अनुरक्तानि ॥ अध्यायः २५ ॥

आत्माहितं चिन्तयित्वेत्यत्र आत्मना परमात्मना आहितं अर्पितं दैवाधीनमित्यर्थः ॥

साम्परायापरिक्लिष्ट इत्यत्र 'मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायकम्' इत्यमरः । साम्पराये युद्धे अपरिक्लिष्टः क्लेशरहितः ॥

सूतानजुगता वयमित्यत्र सूतान् पाण्डवसारथीन् ॥

विधिवत्स्यादनन्तरमित्यत्र विधिवत् विधिर्यथा करोति तद्वत् ॥

अध्यायः २६ ॥

प्रत्यागता वा गूढास्त इत्यत्र प्रति जनान् प्रति गताः अवगताः ज्ञाता इत्यर्थः । परमूर्तगुणाः मूर्तेभ्यः पराः परमूर्ताः गगनादयः तेषां गुणा इवेति गूढत्वे नाशाभावे च उपमा ॥ अध्यायः २७ ॥

त्वं वै तन्मनसा श्रेय इत्यत्र तत् अस्मदादिभिरुक्तं श्रेयः त्वं आत्मनः अहितं बुध्यसीति योजना ॥

सारं वल्गुफलमित्यत्र सारं उत्तमम्, वल्गु अल्पं फलं यस्य तत् अधमम्, मध्यस्थं मध्यममिति बलस्य विशेषणम् ॥

दण्डेन बलिकर्मणेत्यत्र बलिकर्मणा बलेः पूजायाः योग्यसेवारूपकर्मणा अनन्यबलिनः असदृशबलिष्ठान् न्यायेन सान्त्वयित्वा, अनन्यदुर्हृदः असदृश-

दुःखितान् अतिदुर्बलानिति यावत् बलेन सान्त्वयित्वेति योजना । मित्राणि स्वमित्रजनान् प्रति । हीनस्वबलवाहनैरित्येतस्य पाण्डवैरिति सम्बन्धः ॥

श्रुतः कृष्णानिमित्तेनेत्यत्र श्रुतः प्रसिद्धः ॥

तस्मादनन्तरेणापीत्यत्र तस्मात् गोग्रहणात् अनन्तरेण युद्धायागतपाण्डवदर्शनेन ॥

कथं सुयोधनं गच्छेदित्यत्र युधिष्ठिरभृतः युधिष्ठिरः भृतो येन स विराटः पुरा युद्धात्पूर्वं गच्छेत् शरणं गच्छेत् ॥

कृष्णपक्षस्य चाष्टमीत्यत्र यदेति योग्यपदाध्याहारः ॥ अध्यायः २९ ॥

उत्कृत्य पाशान्मौर्वीणामित्यत्र उत्कृत्य ऊर्ध्वं कृत्वा ॥ अ० ३० ॥

ग्रामणीयैः समारूढा इत्यत्र ग्रामणीः ग्रामाधिपतिर्विराटः तत्सम्बन्धिभिः ॥

भीमस्तु भीमसङ्काश इत्यत्र भीमसङ्काशः 'व्योमकेशो भवो भीम' इत्यमरः । रुद्रसदृशः ॥

हीनिषेधा यतव्रता इत्यत्र हीनिषेधाः परसेनायाः ह्रियं लज्जां निषेधन्तीति तथोक्ताः पाण्डवाः ॥ अध्यायः ३१ ॥

यतश्च जात इत्यत्र यतः सुशर्मणः सकाशात् ॥

प्रतीपस्ते पुनरित्यत्र ते प्रतीपः वैरी सुशर्मा दारैः पुत्रैश्च संश्लिष्टः पुनः प्रवेक्ष्यति स्वगृहप्रवेशं करिष्यति । एतत् इदमेव वरं वृण इत्युत्तरेण सम्बन्धः ॥

नान्दीमघोषयन्नित्यत्र नान्दीं सन्तोषसम्बन्धिनीं वार्ताम् ॥ अ० ३२ ॥

हन्यतां वै महारथैरित्यत्र हन्यतां हन्यमानानाम् ॥

दृष्ट्वा भूमिञ्जयं नामेत्यत्र भूमिञ्जय इत्यप्युत्तरकुमारस्य नाम ॥

प्राप्य दण्डसमस्वरामित्यत्र दण्डसमस्वरां अन्तर्दण्डाहतघण्टासमस्वराम् ॥

ध्वजं च सिंहसौवर्णमित्यत्र सौवर्णः सिंहो यस्य स सिंहसौवर्णः तम् ॥

अध्यायः ३३ ॥

स नीतसमये काल इत्यत्र नीतः समाप्तः समयः अज्ञातवाससङ्केतो यस्मिन् तस्मिन् काले ॥

अमर्षयन्ती सैरन्ध्रीत्यत्र अमर्षयन्ती अथापि यतिवेषेण स्थितमसहमाना ॥

गवां मुमुक्ष इत्यत्र गवां गाः मुमुक्षे मोचयितुमिच्छे ॥ अ० ३४ ॥

प्रदक्षिणावर्ततनुः शिखण्डिनीत्यत्र शिखण्डं ऊर्ध्वे निवद्धशिखा तद्वती शिखण्डिनी ॥

अत्रोत्तरः पारशवमित्यत्न 'तीक्ष्णमयः पारशवम्' इत्यभिधानात् पारशवं तीक्ष्णायोमयं वर्म ॥

सा कर्तुकामेवेत्यत्र कर्तुकामेव सारथ्यं कर्तुकामेव ॥

स तत्र नर्मसंयुक्तमित्यत्र 'अग्राम्यः परिहासोक्तिर्नर्म इत्यभिधीयत' इति वचनात् परिहाससंयुक्तम् ॥

ततः शिरःखं निकृत इत्यत्र शिरः शिरसि शिरस्थानीये ऊर्ध्वभागे खं शिरःप्रवेशार्हं छिद्ररूपमाकाशं यस्य तत् कवचम्, निकृतः कापट्यवान् ॥

पर्यभवद्धनञ्जयमित्यत्र पर्यभवत् परिभवमकरोत् ॥

समनह्यत् सम्यक् वद्धमकारयत् । 'नह वन्धन' इति धातुः । सहस्रराजिना रत्नसहस्रराजिना ॥

सुवर्णजालान्तरयोक्त्रभूषणमित्यत्र सुवर्णजालस्य अन्तरे मध्ये मध्ये योक्त्रं योगः स एव भूषणं यस्य तम् ॥

पालितार्थानि सूक्ष्माणीत्यत्न पालितः अर्थो द्रव्यं यैस्तानि वहुद्रव्याणीत्यर्थः'॥

अथोत्तरो वर्मेत्यत्न वर्म प्रगृह्य उपादाय इत्युत्तरपदावृत्त्या योजना ॥

अध्यायः ३५ ॥

ददृशे पार्थिवो रेणुरित्यत्र पार्थिवः पृथिवीसम्वन्धी रेणुः तेन सैन्येन ॥

---

'वहुद्रव्याऱ्हाणीत्यर्थः ।

मध्यमामिषगृध्राणामित्यत्र आमिषगृध्राणां 'गृधु आकाङ्क्षायाम्' इति धातोः शत्रूणामामिषाकाङ्क्षिणाम् ॥

कोऽयं धावत्यसङ्गेनेत्यत्र असङ्गेन युद्धादिप्रसङ्गाभावेन ॥

किञ्चित्तस्य यथा पुंस इत्यत्र किञ्चित् शीलम् ॥

मतौ शुक्राङ्गिरोपम इत्यत्र मतौ बुद्धौ ॥

किं विचारणया कार्यमित्यत्र एतेन पूर्वं गतेनोत्तरकुमारेण, अनु अनन्तरं सूतेन गतेन सारथिना च निमित्तेन विचारणया किं कार्यम् । पलायमानयोर्विचारः किमिति भावः ॥

नटे वैतच्छिरोग्रीवमित्यत्र शिरश्च ग्रीवा च शिरोग्रीवं एतस्य शिरोग्रीवं नटे वा नटे यथा तथाऽस्ति ॥

एकोऽस्माननुयात्येष इत्यत्र पृष्ठतो गन्तुरर्जुनस्य धैर्योद्रेकं दृष्ट्वा, तस्य शिखां गृहीत्वा युद्धायायास्यतीति भावेन अस्माननुयातीत्युक्तम् ॥

स नो मनो ध्वजानित्यत्र नः मनः धैर्ययुक्तं मनः ध्वजांश्च दृष्ट्वेति सम्बन्धः ॥

इति स्म वक्ष्यमाणप्रकारेण ॥

संशयितं बलमित्यत्र संशयितं संशयोपेतम् ॥

सङ्गच्छामि पदान्यस्येत्यत्र यः स उत्तरः भीतः पलायति अस्य पदानि न सङ्गच्छामि नानुसरामि ॥

सः अर्जुनः उत्तरं सारथिं कृत्वा स च स्वयं च समायाताम् ॥ अ० ३६ ॥

तानवेक्ष्य महोत्पातानित्यत्र महोत्पातान् उल्कापातादीन्, उत्पातान् गोमायुरोदनादीन् । तान् स्वसैनिकान् ॥

दक्षिणाः दक्षिणदिक्स्थाः ॥

एते भयं च तिष्ठन्तीत्यत्र एते उत्पाताः भयं यथा भवति तथा ॥

नदीजेति श्लोके हे नदीज भीष्म अयं लङ्केशवनारिकेतुः लङ्केशवनारि-

हनूमान् स एव केतौ यस्य, नगः अर्जुनवृक्षः तद्वदाह्वयो यस्य, नगानां पर्वतानां अरिः इन्द्रः तस्य सूनुः, गत्या पादविन्यासेन सुरेश इव, क्वचिच्छिरोभागे अङ्गनेव वेणीधारणादिना ॥

अतीतं चक्रमस्माकमित्यत्र अस्माकं चक्रं अस्मत्सम्बन्धि चक्रं चक्रवत्पुनर्वनवासाय परिवर्तनम् । समयः त्रयोदशवर्षात्मकः कालः । विषयान्तरं अज्ञातवासात् अन्यं ज्ञातवासाख्यविषयम् । शत्रुतः पाण्डवशत्रोर्दुर्योधनात् भयं ज्ञाते सति पुनर्वनवासो भविष्यतीति भीतिः ॥

दुर्योधनस्य मम च अपूर्णे न किलेति योजना ॥

भीष्मो द्रोण इत्यत्र भीष्मो द्रोण इति द्वौ कृपो द्रौणिश्चेति द्वौ पौरुषं दुर्योधनपराक्रमं अवमर्शतां अवामर्शतां विचारितवन्तौ ॥

अनेन धनुषेत्यत्र अनेन त्वदीयेन, गुरुं भारं सेनाभारम् ॥

नैभिः काममित्यत्र एभिः त्वदीयैरायुधैः ॥

पलाशिनीं पत्रवतीम् ॥

अस्माभिः पाण्डुपुत्राणामित्यस्य निविष्टानीति अन्तर्णीतणिजन्तेन वक्ष्यमाणपदेन सम्बन्धः ॥

दृश्यन्त इति व्युत्पत्त्या दर्शनानि दर्शनीयानि ॥

गुरु चैतदित्यत्र गुरु च गुर्वपि एतत् अस्त्रानयनाख्यं कार्यम् ॥ अ० ३७ ॥

कस्येम इत्यत्र लोमवाहिनः पुङ्खे पत्ररूपपक्षिरोमधराः प्रत्यक्ताः प्रत्येकं तैलार्द्राः, उपासङ्गे 'तूणोपासङ्गतूणीरनिषङ्गा' इत्यमरः । तूणीरे ॥

दिव्यशाखो महाप्रभ इत्यत्र दिव्यशाखः दिव्यशाखारूपः इति दण्डस्य विशेषणम् ॥

कस्यायमसिरावास इत्यत्र आवासः आ समन्तात् कोशे आच्छादनं यस्य सोऽयमावासः ॥

जीवेत् कश्च न कुञ्जर इत्यत्र कश्च कोऽपि ॥ अध्यायः ३८ ॥

प्रजापतिरधारयदित्यत्र प्रजापतिः स्वायम्भुवमनुः ॥

विपत्त्रा भीमसेनस्येत्यत्र विपदस्त्रायन्तीति विपत्त्राः ॥

रुचिरत्सरुरित्यत्र 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यभिधानात् त्सरुः खड्गस्य आदौ मुष्टिग्रहणप्रदेशो यस्य ॥

आयुधानि कलापानीत्यत्र 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः । कलापानि तूणीरान् ॥ अध्यायः ३९ ॥

त्रिदिवस्येश्वरो दिव इत्यत्र 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यभिधानात् दिवः अन्तरिक्षलोकस्य ॥

न कुर्यां कर्म बीभत्समित्यत्र बीभत्सामेव बीभत्सयतीति कृत्वा बीभत्सुरिति भावः ॥

उत्तराभ्यां तु पूर्वाभ्यामित्यत्र फल्गुनीभ्यां फल्गुनीशब्दवाच्याभ्यां, पूर्वाभ्यां पूर्वानक्षत्रस्य द्वितारभ्यां, उत्तराभ्यां उत्तरानक्षत्रस्य द्वितारभ्यां चेति क्रमेण अह्नि निशि च युक्ता या पौर्णमासी सा फल्गुनमासस्य आरम्भदिनम्, तत्रोत्पन्नत्वात् फल्गुन इति भावः ॥

यो ममाङ्गे व्रणं कुर्यादित्यत्र मम अङ्गे, मम पश्यतः सतः ज्येष्ठस्याङ्गे च यः व्रणं कुर्यादिति सम्बन्धः ॥

यास्यामि तैरित्यत्र यास्यामि युद्धार्थं यास्यामि ॥

सागरोपमसत्तमावित्यत्र सागरोपमौ च तौ सत्तमौ च सागरोपमसत्तमौ ॥ अध्यायः ४० ॥

क्षिप्रं नह्यीहि वै रथ इत्यत्र 'नह्य वन्धन' इति धातोः सन्नद्धं कुरु ॥

सङ्कल्पगाढपरिखमित्यत्र सम्यक्कल्पः कल्पना यस्याः सा सङ्कल्पा गाढपरिखा यस्मिन्, त्रिदण्डतूणसम्बाधं त्रिमानदण्डप्रमाणाः त्रिदण्डाः तूणाः स्थूणाः तेषां सम्बाधा यस्मिन्, ज्याक्षेपनिनदारावं ज्याक्षेपनिनदैः सह आरावो वादित्रध्वनिर्यस्मिन्, नेमीनिनदैः सह दुन्दुभयो यस्मिन्, शरैः जालैर्गवाक्षैः वितानैः उल्लोचैश्च आढ्यम् ॥

परवान् नाथवान् ॥

यस्य यातो न पश्यन्तीत्यत्र यातः गच्छतः यस्य अश्वस्य ॥

ततो विमुच्य बाहुभ्यामित्यत्र विमुच्य शवाकारचर्मणो विमुच्य ॥

अध्यायः ४१ ॥

मुखेनाश्वासयन् क्षिताविल्यत्र आश्वासयन् दीर्घश्वासममुञ्चन् । क्षितौ विद्यमानाः प्राणिनः ॥ अध्यायः ४२ ॥

निमित्तं दुर्निमित्तम् ॥

गम्भीरः स्थूणमायत इत्यत्र स्थूणा यथा भवति तथा स्थूणम् ॥

अध्यायः ४३ ॥

ते वा गाव इत्यत्र गावः गाः ॥

अथवा तानित्यत्र तान् पाण्डवान् ॥

अनाच्छिन्ने पुनरित्यत्र द्रव्ये गोधनाख्यद्रव्ये अनाच्छिन्ने अस्माभिरनपहृते सति ॥

तथा नीतिरित्यत्र तथा अश्वपदातीनां प्राणसंशयमरणादिकं यथा न भवति तथा ॥

जानामि विजितमित्यत्र तेषां भीष्मादीनां विजितं विजयम् ॥

इष्टास्त इत्यत्र चापसन्धाने धनुर्विद्याभ्यासकाले ॥ अध्यायः ४४ ॥

बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव । पततां पततां घोषः पततां पततामिवेत्यत्र बर्हिणां बर्हिणामिव एकैकस्य पृष्ठे पृष्ठे गच्छतां मयूराणां मयूराणामिव बर्हिबर्हिणराजानां बर्हिणः मयूरस्य बर्हिणैः शरमूले पत्ररूपेण स्थितमयूरपत्रैः राजानां राजमानानां, 'राजृ दीप्तौ' इति धातोः कर्त्रर्थे पचाद्यचि कृते राजानामिति शब्दनिष्पत्तिर्भवति । पततां पततां एकैकस्य शरस्य पृष्ठे पृष्ठे निपततां निपततां शराणां घोषः पततां मालारूपेण निपतमानानां पततां 'पतत् पतङ्गः पतगः पत्री' इत्यभिधानात् पक्षिणां घोष इव अखिलैः श्रूयतामिति योग्यक्रियया सम्बन्धः । यद्वा बर्हिणां बर्हवतां उत्पन्नबर्हाणामित्यर्थः ।

बर्हिणां मयूराणामिव बर्हिवर्हिणराजानां पततां पततां पुङ्खानुपुङ्खतया क्षणे क्षणे पततां पततां शराणां घोषः पततां पक्षिणां घोष इव पततां दिशि दिशि निपतता इति लोडन्तक्रिया । सर्वैः श्रूयतामिति भावः ॥ अध्यायः ४५ ॥

नानुबन्धमवेक्षस इत्यत्र अनुबन्धं युद्धायानुकूलकालसम्बन्धम् ॥

नया हि बहव इत्यत्र नयाः सामदानाद्याः सन्धिविग्रहाद्याश्च । तेषां नयानां मध्ये युद्धं प्रागेव युद्धं सुपापिष्ठं अतिशयेन पापम् ॥

भारं हि रथकारस्येत्यत्र 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठकृत्' इत्यमरः । रथकारस्य कर्मकारस्य भारं मनसि निहितकार्यभारम् ॥

एकः कुरूनित्यत्र कुरून् दिग्विजयकाले उत्तरकुरून् ॥

एकः संयमनीमित्यत्र संयमनीं यमपुरीम् ॥

समुद्रं प्रतरन्नित्यत्र प्रतरन्निव यस्त्वं वर्तसे, हे कर्ण तत्र त्वयि किं पौरुषमस्ति । न किञ्चिदपीत्यर्थः ॥

अस्माभिरेव निकृत इत्यत्र निकृत्या कपटेन जितः ॥ अध्यायः ४६ ॥

यथावृत्तं सरूपेणेत्यत्र अन्यः प्राकृतः कृपणो जनः यथावृत्तं स्वनीचवर्तनमनतिक्रम्य सरूपेण तस्य वृत्तस्य समानेन नानाविकृतरूपेण धनमधिकमिच्छति । तथा तेन नीचजनयोग्यद्यूतेन अनृते योगविधिं उपायत इति कल्पनां वैतण्डिकः वितण्डावादी ॥

कुलमेषामित्यत्र एषां पुण्यकर्मणां कुरूणाम् ॥

न कृतं द्वापरं न चेत्यत्र कृतं भवद्द्यूतकर्मणः प्रतिकर्म न क्षिपति शकुनिं भवच्छकुनिवत् कश्चन शकुनिं च न क्षिपति ॥ अध्यायः ४७ ॥

नैव पश्यति नाघ्रातीत्यत्र नाघ्राति अर्जुनकीर्तिसौरभं नाघ्राति ॥

पश्यतो हि गुरोरित्यत्र मत्स्यान् प्रतिभटतया उपस्थितान् मत्स्यान् पश्यतः गुरोः कोपः कारितो येन तत्कोपकारिणं कर्णं कोपकरणमित्यर्थः, निवृत्तम् । युद्धार्थं वैरिपु सन्नद्धेषु सत्सु अन्तःकलहस्य नायं काल इति भावः ॥

पुरस्ताद्वाक्यमीदृशमित्यत्र ईदृशं अज्ञातवासकालः पूर्णो नाभूदितीदृशम् ॥ अध्यायः ४८ ॥

तेषां कालातिरेकेणेत्यत्र तेषां ज्योतिषां सूर्यादिज्योतिषां व्यतिक्रमात् त्रिंशद्दिनैः राशितो राश्यन्तरगमनमिति सामान्यन्यायमतिक्रम्य पुनर्दिनद्वयानन्तरं राश्यन्तरे यत्संक्रमणं सोऽयं व्यतिक्रमः, तस्मात्कालातिरेकेण कालस्याभिवृद्ध्या पञ्चमे पञ्चमे वर्षे द्वौ मासौ। सार्धवर्षद्वये एकोऽधिमासः, पुनः सार्धवर्षद्वये अपरोऽधिमास इति द्वौ मासावधिमासकौ। तेषां लोकरीत्या अधिकमासैः सह त्रयोदशानां वर्षाणां पञ्च अधिमासाः, दशवर्षाणां चत्वारः, पुनः सार्धवर्षद्वयस्य एको मासः, एवं सार्धद्वादशवर्षाणां पञ्च अधिकमासाः। पुनरुर्वरितषण्मासानां द्वादश क्षपाः। क्षपापदेन त्रिंशद्घटिकात्मकमर्धदिनमुच्यते। सम्पूर्णाः षड् दिवसा इति यावत्। तस्मात् आपातदर्शिनः त्रयोदशवर्षाणां षड्दिनाधिकपञ्चमासैर्न्यूनतामाशङ्कन्ते। विवेकिनस्तु त्रयोदशवर्षान्तर्गतषड्दिनाधिकपञ्चमासान् बहिष्कृत्य त्रिंशत्रिंशद्दिनात्मकद्वादशद्वादशमासानां एकैकः संवत्सर इति षड्दिनाधिकपञ्चमासन्यूनत्रयोदशवर्षाण्यपि सम्पूर्णत्रयोदशवर्षाणि वर्णयन्ति। देवपितृकार्यार्थे साधिकमाससंवत्सरानुसरणेऽपि स्वोक्तनियमरक्षणाय पौर्णमासीतः पौर्णमासीपर्यन्तमेको मास इति चान्द्रमासानुसरणेनैव कृतकृत्यत्वादिति भावः॥

कस्माद्धर्मे परायथुरित्यत्र परायथुः पराजयं प्राप्नुयुः। जयिधातोर्भूधातोश्च पराभवार्थकपरेत्युपसर्गयोगवत् व्यासानुशासनात् यातेरपि तस्योपसर्गस्य योगो द्रष्टव्यः॥

यश्चानृत इति ख्यायेदित्यत्र तावुभौ लोके स्त इति योग्यपदाध्याहारेणान्वयः॥

एकान्तसिद्धिं नियमेन कार्यसिद्धिम्॥

तस्माद्यद्दानचरितमित्यत्र दानचरितं पाण्डवानामर्धराज्यप्रदानस्य चरितं आचरणं वा। धर्मसंहितं क्षत्रधर्मेण सहितं कर्म युद्धकर्म वा॥

---

'क्षत्रिय.

तद्वाक्यं न कृतं तेनेत्यत्र तद्वाक्यं राज्यं देहीति पूर्वोक्तं वाक्यम् ॥

कौरवाणामनन्तरमित्यत्र कौरवाणां राजा यत् युद्धकर्म कुरुष्वेत्यनन्तरं वाक्यं तथा कृतवान् हीति योजना ॥

प्रकाशं त्रिदिवः सर्वादर्शनीयमित्यत्र त्रिदिवः स्वर्गस्य ॥

प्रासादं गामगामिनमित्यत्र यत्र देवानां गामः गमनं तत्र गच्छतीति गामगामी तम् ॥ अध्यायः ४९ ॥

द्वाभ्यां द्वाभ्यां तथाऽऽचार्यमित्यत्र द्वाभ्यां द्वाभ्यां शराभ्याम् ॥

बन्धुराग्रनिपातौ बन्धुरौ स्नेहबन्धनशीलौ अग्रनिपातौ ययोस्तौ ॥ अध्यायः ५० ॥

परिक्षिप्य गवां यूथमित्यत्र परिक्षिप्य परितः परहस्तादपहृत्य ॥

तेषां नैवाभियाने चेत्यत्र अभियाने पार्थे प्रत्यभिगमने, नाभियाने अभियानादन्यस्मिन् परावृत्य गमने ॥

सामुद्रं समुद्रोत्पन्नम् ॥

रेभमाणाः समन्तत इत्यत्र 'रिभु शब्द' इति धातोः रेभमाणाः क्रन्दन्त्यः ॥ अध्यायः ५१ ॥

बालसूर्यसमप्रभा इत्यत्र बालस्य सौवर्णसिंहपुच्छस्य सूर्यसमप्रभाः सूर्यसमकान्तयः ॥ अध्यायः ५२ ॥

अर्जुनेनापरं सहेत्यत्र अर्जुनेन सह अपरं अन्यं सन्तम् ॥

अभिविद्धैः (सि)शितैर्बाणैरित्यत्र अतिशयेन विद्धं वेधो येभ्यस्तैः, भावे क्तप्रत्यये कृते विद्धमिति वेधो लभ्यते । बाणैः रथानां अश्वादिभ्यः अनन्तरं विद्धं वेधो नासीत्; किन्तु युगपदेव । एवमुत्तरत्रापि योजना ॥

न च रुध्येद्गतिरित्यत्र रोधं प्रतिबन्धं न प्राप्नुयात् ॥

रथाङ्गदेशमुत्सृज्येत्यत्र रथाङ्गदेशं रथचक्रप्रदेशम् ॥

चक्षुर्नसि विषाणेष्वित्यत्र चक्षुर्नसि चक्षुर्नसोः । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः ॥

खगयानाभिसंवीतैरित्यत्र खगानां यानानि गमनसाधनानि पत्राणि यात्यनेनेति व्युत्पत्त्या यानपदस्य निष्पन्नत्वात्, तैः संवीतैः सम्बद्धैरिति शराणां विशेषणम् । संविष्टैर्वनं प्रविष्टैः खगमैः पक्षिभिरिव लोहितेषु रक्तेषु प्रवणैर्नम्रैः खगैः खे गच्छन्तीति खगाः शराः तैः ॥

सकृतेऽप्यकृतं शेकुरित्यत्र सकृते कृतेन युद्धकर्मणा सहिते पार्थे सति अवकृतं स्वाधोभागे कृतं रथं अर्जुनरथं अभ्यसितुं अभितो निरसितुं परे न शेकुरिति योजना । तैः अनभ्यस्तः अभितोऽप्यनिराकृतः स रथः अभिपपात शत्रुसेनां प्रत्येव पपात ॥

तच्छरा द्विः शरीरेष्वित्यत्र तच्छराः पार्थशराः शरीरेषु वैरिशरीरेषु यथा द्विः द्विवारं न ससज्जिरे, तथा वीभत्सोः रथोऽपि अनीकेषु वैरिसेनासु द्विधा न ससज्ज । एकवारं परावृत्य पुनर्वैरिसेनायां न सक्तो भवति । किन्तु पार्थशरवत् अनिवृत्त एव अग्रे अग्रे गच्छतीति भावः ॥

सायकासनमण्डलमित्यत्र सायकासनं शरासनं तस्य मण्डलं मण्डलाकारः सततं दृश्यते ॥

कालपङ्क्तिसमन्वयादित्यत्र कालपङ्क्तेः समन्वयात् बहुकालसम्बन्धात्य-परिपाकात् ॥

चकार चार्जुनीकत्वमित्यत्र अर्जुनीकत्वं अत्रार्जुनस्तत्रार्जुन इत्यर्जुन-मयत्वमित्यर्थः ॥ अध्यायः ५३ ॥

शरसङ्कोणामित्यत्र 'कोणो वीणादिवादनम्' इत्यभिधानात् कोणः वीणावादनशलाका ॥

गतासुराजौ निपपातेत्यत्र गतासुः मूर्च्छां प्राप्तः विकर्णः ॥

सहतोः शरौघानित्यत्र शरौघान् सहतोः सहमानयोः तयोः ॥

पार्थेषुमार्गेष्वित्यत्र पार्थस्य इषूणां मार्गेष्वित्यर्थः ॥

पूर्वममृष्यमाण इत्यत्र पूर्वं पराभवम् ॥ अध्यायः ५४ ॥

अविक्लवमित्यादि क्रियाविशेषणम् । यथा भवति तथा स्थिरो भवेति पूर्वेण सम्बन्धः ॥

अद्भुतं मम पश्य चेत्यत्र अद्भुतं वीर्यं च पश्येत्यन्वयः ॥

एको दीर्घ इवापाङ्गादित्यत्र पुङ्खानुपुङ्खतया निरन्तरशरागमनात् दीर्घ एकः शर इव अपाङ्गात् द्रोणकटाक्षमनुसृत्य महाशराः प्रदृश्यन्ते इति योजना ॥

पार्थस्य पततोऽपि चेत्यत्र पततः दिशि दिशि निपततः ॥ अ० ५५ ॥

व्यचलीयन्त भागश इत्यत्र व्यलीयन्त चेति पदयोजना ॥

अपारामनवारां चेत्यत्र 'पारावारे परार्वाची तीरे पात्रं (त)यदन्तरम्' इत्यमरः । पारः परतीरं ततोऽन्यत्तीरमवारः तदुभयरहितमित्यर्थः ॥

अस्याददानस्य शरानित्यत्र 'असु निरसन' इति धातोः अस्य एकं शरं प्रयुज्य पुनः शरानाददानस्येति योजना ॥ अध्यायः ५७ ॥

अयं जिष्णुरुदाहृत्येत्यत्र उदाहृत्य तूणीरादूर्ध्वमाहृत्य ॥ अ० ५९ ॥

दुर्द्रवाः प्रत्यवस्थायेत्यत्र दुर्द्रवाः द्रवः द्रवणं पलायनं तद्रहिताः ॥

व्यवधीयन्त सर्वश इत्यत्र व्यवधीयन्त व्यवधानं प्राप्नुवन् ॥

पुरा ह्येष न मे शब्द इत्यत्र पुरा युद्धात्पूर्वं पृष्ठतः भटानां पृष्ठतः एष शब्दः इदं करोमीत्यादिशब्दः मे न साधीभवति साधीयान्न भवति ॥

नैषोऽभयं न निर्यात इत्यत्र एषोऽर्जुनः अभयं यथा भवति तथा निर्यातः पुरान्निर्यातो नेति न ॥

मुक्तं मुक्त्वैव सङ्ग्राम इत्यत्र मुक्तं दुर्योधनं मुक्त्वैव गावः पलायिता इति सम्बन्धः ॥ अध्यायः ६० ॥

शतह्रदां जृम्भमाणामित्यत्र 'शतह्रदा ह्रादिनी तटिद्विद्युत्' इत्यभिधानात् शतह्रदा विद्युत् ॥

भीष्मं भीष्मस्य वाजिभिरित्यत्र भीष्मं भयङ्करं भीष्मस्य रथानीकं वाजिभिरगाहतेति सम्बन्धः ॥

रथसिंहमनाक्षिप्येत्यत्र रथसिंहं रथश्रेष्ठं अनाक्षिप्य अनिक्षिप्य अस्थापयित्वेत्यर्थः ॥

परीप्सन् भारतं रण इत्यत्र भारतं सैन्यं परीप्सन् परिपातुमिच्छन्॥

एतदैन्द्रं पञ्चवार्पिकमित्यत्र चत्वारो दिशः ऊर्ध्वं चेति पञ्चसु दिक्षु वार्पिकं शरवर्पसम्बन्धि शरवर्पणशीलमिति यावत् । पञ्चे प्रपञ्चे शरवर्पणशीलं वा ॥ अध्यायः ६१ ॥

दक्षिणामेव तु दिशमित्यत्र दक्षिणां सेनाया दक्षभागे[1] विद्यमानां दिशम् । अत्र तिष्ठतामेपां कुरूणां पुरार्थी स्वपुरं प्रति गमनार्थी अयं शब्दः पुरं गच्छाम इति शब्दः भवति । तस्मात् तान्निरोद्धुं सेनाया दक्षिणभागे रथं वाहयेति योजना ॥

इदं त्विदानीमनयत्कुरूणामित्यत्र इदं धनुः कुरूणां शिवं शोभनं अनयत् अहरत् ॥

मन्ये मयेत्यत्र मया युद्धं कुतः कार्यमिति मन्ये ॥

तदर्थमाहृत्येत्यत्र तदर्थं धर्मराजस्य द्रव्यम् ॥

दुर्योधनः सन्निकृतिप्रधान इत्यत्र निकृतिप्रधानः सन् त्वं दुर्योधनः नाममात्रेण दुर्योधनः ॥ अध्यायः ६३ ॥

गजो यथा मत्त इवेत्यत्र तद्यथेति प्रश्नः ॥ अध्यायः ६४ ॥

धनुर्वक्र इवोरग इत्यत्र धनुराकारेण वक्रः धनुर्वक्रः ॥

निर्याहि वाहानित्यत्र वहन्ति रथिन इति वाहाः परसेनारथाः तान् प्रति ॥ अध्यायः ६५ ॥

कन्याः सहकन्यकाश्चेत्यत्र दासीभूतकन्याभिः सहिताः कन्याः राजकन्याः ॥

शृङ्गाटकेपु सर्वेष्वित्यत्र 'शृङ्गाटकचतुष्पथे' इत्यमरः । शृङ्गाटकेपु चतुष्पथेपु ॥

सकंसतालमित्यत्र सकंसतालं कांस्यतालेन सहितम् ॥ अध्यायः ६६ ॥

---

[1] दक्षिणभागे.

ततः स करिभोगाभमित्यत्र भुज्यते अनेनेति भोगः हस्तिहस्तः। करभोगमिति पाठे करो हस्तिकरः, भोगः सर्पशरीरम् ॥ अध्यायः ६७ ॥

सर्वेषां परितुष्टाश्चेत्यत्र सर्वेषां अर्जुनकृतसकलयुद्धकर्मणाम् ॥

किं नु खल्वपयाता इत्यत्र पुरं गतास्ते कुरवः अपयाताः परावृत्य आगताः किं नु। सचेतसः ते कुरुसेनामहेष्वासाः आभिः अस्मदीयसेनाभिः न जिता एव स न जिता एव किम्। अव्ययानामनेकार्थत्वात् सशब्दः किमुशब्दार्थे ॥

अश्वाश्च वर्जिता इत्यत्र वर्जिताः युद्धसन्नाहवर्जिताः ॥ अ० ६८ ॥

पित्रे सम्प्रत्यहारयदित्यत्र सम्प्रत्यहारयत् द्वास्थं प्रेषयामास ॥

पदं पदसहस्रेणेत्यत्र प्रतिभटानां पदसहस्रेण सह एकं पदं चरन् तैरितस्ततः पदसहस्रे कृते सति स्वयमेकेनैव पदेन तिष्ठन् न पराधुयात् 'धूञ् कम्पन' इति धातोः कम्पनं प्राप्नुयात्, महाधैर्यवानिति भावः। यद्वा अन्येषां पदसहस्रेण यः प्राप्यो देशः, तं एकपदेन चरन् न पराधुयात्, महावेगवानिति भावः ॥

व्यायामेन परीप्सस्वेत्यत्र व्यायामेन परावृत्य गमनेन ॥

दूरात् स्तम्भश्च मेऽभवदित्यत्र स्तम्भः मनोवाक्कायादीनां स्तम्भनम् ॥

शुक्लवस्त्रमथाददे इत्यत्र अथ भीष्मजयानन्तरं शुक्लवस्त्रं शुक्ले वस्त्रे यस्य तं द्रोणं कृपं च आददे 'दो अवखण्डन' इति धातोः शरेण खण्डयामास। यद्वा युद्धायाददे ॥ अध्यायः ६९ ॥

उपतिष्ठ आसमित्यत्र उप समीपे तिष्ठतीत्युपतिष्ठः ॥

त्वरतैष मात्स्य इत्यत्र त्वरता वेगवता एष धर्मराजः मात्स्यः मत्स्यविषयाधिपतिः क्रियतामिति योग्यपदाध्याहारेण सम्बन्धः ॥

कुम्भं घनेनेवेत्यत्र घनेन दृढेन दण्डेन ॥ अध्यायः ७० ॥

शुद्धं जितेन्द्रियम्मन्यमित्यत्र शुद्धं जितेन्द्रियम्मन्यं त्वां मे पुत्रार्थमिमामामन्त्रये। तत्र एतादृशकार्ये कृते सति शुद्धिः ममापि शुद्धिः कृता।

पुत्रे स्वस्नमात्रादिविपये, आत्मनि स्वस्मिन् स्नुषायाः दुहितुर्वा विपये अतिशङ्कां न पश्यामीति योजना ॥ अध्यायः ७३ ॥

नटा वैतालिकास्तथेत्यत्र वैतालिकास्तालधारिणः ॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचितलक्षालंकाराख्यटीकायां पंचसप्ततितमोऽध्यायः ॥

॥ विराटपर्व समाप्तम् ॥

---

व्यासायाप्रतिमेतिहासरचनोल्लासाय दुर्वादिनां
त्रासायासकराय सत्सु कृतविश्वासाय दोपद्विपे ।
भासा यामुनरम्यतोयसदृशायासायमासेविने
दासायाभयदाय मध्वगुरुहृद्वासाय तुभ्यं नमः ॥ १ ॥

अगाधव्यासबोधाब्धौ निगूढाः शब्दराशयः ।
न विवेदयितुं शक्या मादृशैर्मन्दबुद्धिभिः ॥ २ ॥

प्रक्रान्तार्थानुसारेण शिक्षाशून्यपदस्य च ।
अर्थं कथञ्चिद्वक्ष्यामि तत्क्षन्तव्यं महात्मभिः ॥ ३ ॥

योक्षरत्यागयोगाभ्यां क्षत्रं शूद्राभिधं व्यधात् ।
तस्य व्यासस्य वचसो वैदग्धीं वेत्ति कः कविः ॥ ४ ॥

---

# अथ उद्योगपर्व ५

## ॥ प्रथमोऽध्यायः ॥

भूमिषु तान् प्रमथ्येत्यत्र तान् तत्तद्भूमिपतीन् ॥

बलाभिगुप्तैरविपह्यपीडैरित्यत्र अविपह्या पीडा येभ्यस्तैः ॥

सुहृज्जनास्तान् परिवारयेयुरित्यत्र तान् दुर्योधनादीन् परिवारयेयुः पार्थैर्वैरं माऽस्त्विति परितः निवारयेयुः ॥

इति श्रीमन्महाभारते उद्योगपर्वणि प्रथमोऽध्यायः ।

---

तस्य कृते यतन्त इत्यत्र तस्य अर्धराज्यस्य ॥

तेन कोपाद्धृस्ता हीत्यत्र तेन राज्यापहारेण ॥

दुरोदरास्तत्र सहस्रश इत्यत्र दुरोदराः दुरोदरवन्तः द्यूतज्ञा इत्यर्थः ॥

स दीव्यमान इत्यत्र सः धर्मराजः एनं शकुनिम् ॥ अध्यायः २ ॥

तेषु वै दारुणध्वजेत्यत्र तेषु दुर्योधनादिषु । तालवृक्षस्य क्रूरत्वात् दारुणध्वजेत्युक्तम् ॥

अभिगम्य जयेयुस्त इत्यत्र ते वृष्णयः ॥

य आहुर्विजिता इत्यत्र ये दुर्योधनादयः विजिताः त्रयोदशवर्षापूर्तेः पुनरपि विजिता इत्याहुः ॥

म(र्त्वा)त्वा मर्दयित्वा ॥ अध्यायः ३ ॥

उग्राय उग्रसेनाय ॥ अध्यायः ४ ॥

निष्ठामापत्स्यते मूढ इत्यत्र 'निष्ठा निष्पत्तिनाशान्ता' इत्यभिधानात् निष्ठां नाशम् ॥ अध्यायः ५ ॥

ध्रुवमार्जवयिष्यतीत्यत्र आर्जवयिष्यति दुर्योधनेऽवक्रं करिष्यति ॥

पुनरैकाग्र्यकरणमित्यत्र एकाग्रस्य भावः ऐकाग्र्यं चित्तसमाधानं तस्य करणं यस्मिन् ॥

प्राप्यान्येनेत्यत्र अन्येन सन्धिकार्येण प्राप्य एतत्प्रयोजनं सेनाकर्मा- करणं उपलभ्यते प्राप्यते ॥ अध्यायः ६ ॥

पश्चार्धेन स कृष्णस्येत्यत्र पश्चार्धेन पश्चात् पूर्वार्धाङ्गादधस्तात् यद- ङ्गार्धं तेन पादसमीपेनेत्यर्थः ॥

पूर्वं चाभिगताः सन्त इत्यत्र पूर्वं केनचिदभिगताः सन्तः [1] सज्जनाः पूर्वसारिणः पूर्वागतानुसारिणः ॥

प्रवारणं च वालानामित्यत्र 'वृञ् वरण' इति धातोः प्रकर्षेण वरण- मङ्गीकारः प्रवारणम् ॥

गोपानामर्बुदं महदित्यत्र सहस्राणि सहस्राणीति वक्ष्यमाणत्वात् अर्बुदं दशलक्षम् ॥

भवांश्च कीर्तिमाँल्लोक इत्यत्र कीर्तिमान् नियतकीर्तिमान् । त्वं यत्र तिष्ठसि तत्कीर्तिरेव भवतीति भावः ॥

चिररात्रेप्सितं काममित्यत्र 'चिराय चिररात्राय चिरस्याद्या' इत्यमरः। चिररात्राय ईप्सितं चिररात्रेप्सितम् ॥

यत् स्पर्धेथा मया सहेत्यत्र त्वमपि रिपुसंहरणे समर्थः, अहमपीत्या- कारेण स्पर्धेथाः ॥ अध्यायः ७ ॥

दुःखमेव कृतं सौख्यमित्यत्र वनवासादिषु कृतं समये समये उत्पन्नं दुःखं सौख्यमेव च परं केवलं सुखमेव कृतम् । दुःखस्य सुखरूपत्वं प्रारब्ध- दुष्कर्मक्षयरूपत्वादिति ज्ञेयम् ॥

व्यथितं ते परन्तपेत्यत्र ते तव राज्यभ्रंशनिमित्तेन ॥

सौतेरस्मज्जयावह इत्यत्र सूतस्यापत्यं पुमान् सौतिः कर्णः ॥

अहं तथा करिष्यामीत्यत्र सः कर्णः रणमूर्धनि हृतदर्पः गततेजाः सन् सुखं सुखेन हन्तुं अर्जुनस्य हन्तुं यथा भविष्यति तथा सङ्ग्रामे करिष्यामीति योजना ॥

---

[1] तत्तत्.

दमयन्त्या यथाऽशुभमित्यत्र दमयन्त्याः अशुभं यथेति योजना ॥
अध्यायः ८ ॥

स भीतस्तत्र तक्षाणमित्यत्र 'तक्षा तु वर्धकिस्त्वष्टा' इत्यभिधानात् तक्षा विश्वकर्मा ॥ अध्यायः ९ ॥

[1]विष्णोः क्षयमुपागम्येत्यत्र 'निवेशः शरणं क्षय' इत्यमरः । विष्णोः क्षयः स्थानम् ॥

यत्रासौ विश्वरूपधृगित्यत्र विश्वव्यापिरूपधृक् वृत्रासुरः विश्वरूपधृक् ॥

ततः परं भविता भव्यमेवेत्यत्र 'भव्यं कुशलं क्षेममस्त्रियाम्' इत्यभिधानात् भव्यं क्षेमं भविता ॥ अध्यायः १० ॥

पतिमन्वास्य तं प्रभुमित्यत्र अन्वास्य अनुकूलतया स्थित्वा ॥

न सोऽन्तरं लभते त्राणमिच्छन्नित्यत्र 'अन्तरमवकाशावधी'त्यभिधानात् अन्तरं त्राणावकाशं रक्षणावसरमित्यर्थः ॥

मोघमन्नं विन्दतीत्यत्र अप्रचेताः प्रकृष्टचित्तरहितः मोघं व्यर्थं कोद्रवाद्यन्नं विन्दति, न तु शाल्यन्नम् ॥

किञ्चित्कालान्तरं शुभेत्यत्र अन्तरशब्दस्यावधिवाचकत्वात् किञ्चित्कालान्तरं किञ्चित्कालावधि । बहुविघ्नकरः कालः कालः सन् मृत्युः सन्नित्यर्थः ॥
अध्यायः १२ ॥

कालमिच्छामीत्यत्र किञ्चित्कालमवधिं लब्ध्वा त्वामिच्छामीति सम्बन्धः॥

न हि विज्ञायते शक्र इत्यत्र शक्रः कुतः कारणात् कुतः कुत्र प्राप्तो गतः, त्वं कुतः कारणादागत इति मया न हि विज्ञायते । एतत्त्वं शक्रगमनकारणं तवागमनकारणं च विज्ञाय यदि शक्रः कुत्रापि न ज्ञायते ततस्तर्हि । अन्यत् स्पष्टम् ॥

मोचध्वं पाकशासनमित्यत्र मोचध्वं ब्रह्महत्यायाः मोचध्वम् ॥

देवीं रात्रिं नमस्यामीत्यत्र रात्रिं रात्र्यभिमानिनीं दुर्गाम् ॥

---

[1] रात्रीं.

सोपश्रुतिमथाकरोदित्यत्र सा रात्रिर्देवी उपश्रुतिं प्रतिध्वनिम् ॥

उपश्रुतिं उप श्रुतिः प्रतिशब्दश्रवणं यस्याः सकाशात्ताम् ॥ अ० १३ ॥

आपः शेषा इत्यत्र आपः उदकानि शिष्यन्ते अवशिष्यन्त इति शेषाः अवशिष्टाः । तदन्तः प्रविश्य न विचारितमिति भावः ॥

तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यतीत्यत्र तेषां अग्निर्ब्रह्माश्मनां मध्ये सर्वत्र गं गच्छत्तेजः स्वासु स्वसम्बन्धिषु योनिषु कारणभूतास्वप्सु ॥

अध्यायः १५ ॥

स्वां योनिं भजते सर्वं इत्यत्र सर्वोऽपि क्षत्रलोहादिः स्वां योनिं स्वकारणभूतं ब्रह्माश्मादिकं भजते । तस्मात्कारणात् विशङ्कितः जलप्रवेशे शङ्कायुक्तोऽपि त्वं विश्वस्य मम वचने विश्वासं कृत्वा स्वां स्वसम्बन्धिनीं योनिं कारणभूतमुदकं भज प्रविश । ते सर्वोऽपि प्रपञ्चः प्रवेशयोग्योऽस्तु ॥

ततो भीताः शक्रमकामयन्तेत्यत्र यत इति योग्यपदाध्याहारः ॥

अध्यायः १६ ॥

य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवामित्यत्र प्रोक्षणे तादर्थ्ये सप्तमी । प्रकृष्टज्ञानरसोक्षणाय ब्रह्मणा चतुर्मुखब्रह्मणा प्रोक्ताः 'स्वर्गेषु पशुवाग्वज्रे'त्यनुशासनात् गवां वेदरूपवाचां य इमे मन्त्राः मन्त्ररूपाः शब्दराशयः । गायत्र्यादिवेदवाक्यानां अङ्गीकरणादौ मन्त्रत्वेन दृष्टफलसद्भावात् प्रामाण्यमावश्यकमिति सूचनाय मन्त्रा इत्युक्तम् । स्वर्गादिषु प्रामाण्यसंशयायोगात् वेदा एवात्र गावः । वेदाप्रामाण्यकोटौ पदा स्वशिरसि ताडनेन शापदानाय, प्रामाण्यकोटौ च 'न स्त्रियमुपगच्छेत्' इत्यादिश्रुत्या शच्याख्यपरदारगमनप्रतिषेधरूपप्रकृतकार्याय चोपयोगित्वात् वेदप्रामाण्यसन्देह एव पृष्टो न तु तत्वान्तरसन्देह इति ज्ञेयम् । अत एव 'वेदप्रामाण्यविषये पृष्टो नेत्याह मूढधीः । प्रमाणमिति तेनोक्ते शिरस्येनं पदाऽहनत्' इति तात्पर्यमाहुः ॥

ततस्तमहमाविश्नमित्यत्र नहुषदृष्टिविषयस्य अगस्त्यस्य शापासमर्थत्वात् 'य इमे ब्रह्मणा प्रोक्ता मन्त्रा' इत्युक्त्या ब्रह्मप्रोक्तत्वेनोक्तमन्त्राणां निन्दने

ब्रह्मणोऽपि कोप इति सूचनाय च 'तदा भृगुं तस्य जटासु लीनं कदाऽपि तस्याक्षिपथं न यातम्। आविश्य कञ्जप्रभवः शशाप' इति तात्पर्यमाहुः ॥

दशवर्षसहस्राणीत्यत्र नहुषः स्वराज्यपरिपालनसमये देवैः स्वर्गं नीतः। स्वर्गपरिपालनकाले च बहूनि वर्षाण्यतिक्रान्तानि। अन्ते अगस्त्यशापात् सर्पत्वं दशवर्षसहस्रपर्यन्तमिति भावः ॥ अध्यायः १७ ॥

युयुधानस्ततो वीर इत्यत्र युयुधानः सात्यकिः। यद्यपि सात्यकिः पूर्वमेवागतः। सेनासन्नाहप्रदर्शनाय पुनरुक्तिः ॥ अध्यायः १८ ॥

शेषवन्तो न शकिता इत्यत्र शेषवन्तः आयुःशेषवन्तः शकिताः शक्या नेति योजना ॥ अध्यायः २० ॥

भगवान् प्रतियात्वद्येति पुरोहितब्राह्मणं प्रति वचनम् ॥

इति पुरोहितप्रतियानं नाम एकविंशोऽध्यायः ॥ २१ ॥

---

दिष्ट्या भवान् ग्राममुपागत इत्यत्र ग्रामं लब्धग्रामादलब्धग्रामम् ॥

यो न गर्भेऽपि पार्थानित्यत्र यो दोषः पार्थान्न स्पृशेदिति योजना ॥

तेषां हि मेऽहीनसुखः प्रियाणामित्यत्र मे प्रियाणां तेषां अहीनसुखः अमन्दबुद्धिः विवेकी महात्मनां तेषां भागं कर्तुं घटत इति योजना। महात्मनां दीप्ततेजसाम् ॥

उत्थानवीर्यमित्यत्र उत्थाने ग्रामाद्वनं प्रत्युत्थाने सति वीर्यं यथा भवति तथा उत्थानवीर्यं, सुखं यथा भवति तथा एधमान इति योजना। तत् वनगमनमेव सुकृतं सुष्ठु कृतं न्यायेन कृतं मन्यत इति योजना। यद्यस्मात्कारणात् तेषां पाण्डवानां अभागं मन्यते, जीवितं हर्तुं शक्यं च मन्यते तस्माद्बालः ॥

यस्याजातशत्रोः पदवी(मुप)मनुगच्छन्तीति योजना ॥

पर्जन्यघोषानित्यत्र शरानिति जनौघान् प्रतीति च योग्यपदाध्याहारः ॥

तान् केकयेभ्यो राज्यमाकाङ्क्षमाणानित्यत्र राज्यं स्वराज्यम् ॥

तेषां मध्ये सूर्यमिवातपन्तमित्यत्र तेषां राजसूये मिलितानां राज्ञां मध्ये सूर्यमिवातपन्तं शिशुपालं लोको ददर्शेति समग्रश्लोकस्य योजना ॥

स धर्मराजो ह्रीनिषेध इत्यत्र ह्रिया अधर्मस्य निषेधो यस्मिन् स तथोक्तः ॥

स्थाने जातमित्यत्र स्थाने कोपयोग्यस्थाने जातमिति क्रोधस्य विशेषणम् ॥

न तस्य किञ्चिद्वचनं न कुर्यादित्यत्र वचनं न कुर्यादिति नेति सम्बन्धः ॥

न मूर्च्छयेद्यन्न भवेच्च युद्धमित्यत्र यत् वाक्यं न मूर्च्छयेत् परशिरोव्यथां न जनयेत्, यत् यस्माद्वाक्यात् युद्धं न च भवेत् तद्वापेथा इति योजना॥

इति संजयप्रेषणं नाम द्वाविंशोऽध्यायः ।

---

सुयोधनो यस्य मन्दो विधेय इत्यत्र 'विधेयो विनयग्राही वचनेस्थित आश्रव' इत्यभिधानात् विधेयः यस्य कर्णस्य वचनेस्थितः, आश्रवश्च तदुक्तपैशुन्यवचनश्रोतेत्यर्थः ॥

माहानस्यः महानसे विद्यमानाः माहानस्यः ॥

एतज्ज्योतीरुत्तमं जीवलोक इत्यत्र एतत् यथायोग्यं सकलप्रजापालनम् ॥

युधां प्रणेतुरित्यत्र युधां योधानां प्रणेतुः राज्ञः ॥

मौर्वी भुजाग्रे प्रहितामित्यत्र दोधूयमानेन चामराभ्यां वीज्यमानेन धनुर्धरेण अर्जुनेन भुजाग्रे निहितां आकर्णान्तमाकृष्टामित्यर्थः ॥

नतं दृष्ट्वेत्यत्र नतं अवनतं प्रतीपं वैरिणं तमर्जुनं दृष्ट्वा पुरतो गत्वा युद्धरङ्गात् गृहं न जग्मुः कश्चित् । रङ्ग एव मृता इति भावः ॥

हस्तवापा इत्यत्र हस्त एव शत्रुदेहेषु बीजावापकर्ता येषां ते शराः हस्तवापाः ॥

चङ्क्रम्यते अतिशयेन पादविक्षेपं करोति ॥

न कर्मणा साधुनैकेनेत्यत्र वयं सर्वात्मना धृतराष्ट्रस्य पुत्रान् जेतुं न शक्नुमश्चेत्, एकेन षट्सु नीतिषु मुख्येन साधुना कर्मणा सन्धिकर्मणा कार्यमसत्कार्यं शक्यं न भवति । नूनं निश्चयः ॥ अध्यायः २३ ॥

यत्तद्युष्मासु वर्ततेऽसावधर्ममदुग्धेषु दुग्धवत्तच्च साध्वित्यत्र अदुग्धेषु दुग्धानि न भवन्तीत्यदुग्धानि भवद्वेषाख्यविषाणि तेषु दुग्धवत् दुग्धे यथा, तथा बुद्धिं करोति । तच्च साध्विति योजना ॥

मित्रद्रोहं ब्राह्मणानां समेत्येत्यत्र ब्राह्मणानां सङ्घं समेत्य पापकेभ्यः पापेभ्यः गरीयः श्रेष्ठं मित्रद्रोहं शृणोतीति सम्बन्धः ॥

माद्रीसुतौ चापि रणाजिमध्य इत्यत्र शत्रूणां रणं प्रति यो रणः स रणाजिः तस्य मध्ये ॥

नन्वेव मन्ये पुरुषस्य राजन्नित्यत्र पुरुषस्य यज्जायते, यच्च भविष्यत् तत् स्वभावत एव जायते ननु इति योजना ॥

त्वमेव चैतत्सर्वमतश्च भूय इत्यत्र एतत्सर्वं अतः अस्मात् भूयः उपरि भवच्च समीक्ष्य कुर्या इति सम्बन्धः ॥ अध्यायः २४ ॥

सर्वक्षयो दृश्यत इत्यत्र यत्र यस्मिन् पापे सर्वक्षयो दृश्यते, स कृ(त्स्नः)त्स्नं पापोदयः कुरूणां भावसंस्थः । यत्र पराजयो जयश्च समः एकवारं पराजयः पश्चाज्जयश्च भविष्यति । तत्कर्म दुर्धूताख्यं कर्म कः कुर्यादिति सम्बन्धः ॥

न चेत्कुरूननुशिक्षामीत्यत्र न चेत् उक्तस्वभावो न चेत् निर्णीय कुरूणां मनोगतं निश्चित्य द्विषतः सन्धिकार्यं द्विषतः निगृह्य कुरूननुशिक्षामि सत्स्वभावमेवानुशिक्षामीति योजना ॥

न ह्येव मे वचनमित्यत्र न कुर्यामिति नञोः सम्बन्धः ॥

साधनार्थं मयोच्यमानकार्यसाधनार्थम् ॥ अध्यायः २५ ॥

कां नु वाचमित्यत्र युद्धैषिणो मे कां नु वाचं शृणोषि । युद्धं कार्यमिति वाक् मया नोक्तैवेति भावः ॥

[1] भवति.

अकुर्वतश्चेदित्यत्र 'अन्यत्र युद्धात्' इति वक्ष्यमाणत्वात् अकुर्वतः युद्धमकुर्वतः ॥

न कर्म कुर्यादित्यत्र कर्म युद्धकर्म। युद्धादन्यत्र युद्धं विना यल्लघीयः अल्पतरं लाभादिकं, तदेव बहु इति योजना ॥

धर्मोदयं धर्मस्य उदयो यस्मात्तत्कर्म । कृच्छ्रोदयं कृच्छ्रस्य युद्धादि-सङ्कटस्य उदयो यस्मात्तत्कर्म परधनापहारादिकम् ॥

क इन्द्रियाणामित्यत्र कर्माभिज्ञः कर्मकुशलः प्रीतिवशानुगानामिन्द्रि-याणामर्थे कः स्वशरीरं दुनोति ॥

भूयो भूयो न तृप्यत इत्यत्र तृष्णेति योग्यपदानुवृत्तिः ॥

सम्पश्येमं भोगमयं महान्तमित्यादेरयमर्थः— अस्माभिः सह धृत-राष्ट्रस्य राज्ञः भोगमयं तस्य यादृशो भोगः तादृग्भोगमिति यावत् । महान्तं इमं कृष्णं सम्पश्य सम्यक्पश्य, अश्रेयसां दरिद्राणां विग्रहाणां देहानां ईश्वरो न । कृष्णसेनास्थाः सर्वेऽपि सभाग्या इति भावः । अश्रेयसां दरिद्राणां गीत-शब्दं न शृणोति । किन्तु गन्धर्वाणां गीतशब्दं शृणोतीति भावः । अश्रेयसः दरिद्रस्य प्रावरान् प्रावरणानि न वस्ते ॥

कथं न्वस्मानित्यत्र सोऽयं कृष्ण इति योग्यपदाध्याहारः ॥

अत्रैव सर्वानवधूयेत्यत्र अत्र शरीरे कृष्णभक्तानां शरीरे यः कामः काम्यत इति कामो भोगः, स सर्वान् कुरूनवधूय हृदयं दुनोति ॥

आसन्नमग्निमित्यत्र आसन्नं स्वसमीपस्थम् । 'कक्षौ तु तृणवीरुधौ' इत्यमरः । गम्भीरकक्षे गम्भीरतृणे ॥

प्रगृह्य दुर्बुद्धिमित्यत्र यो दुर्योधनः आप्ततमस्य विदुरस्य वाचमव-म(न्य)त्य अनाप्तः सन् तिष्ठति, तं दुर्बुद्धिं दुर्योधनं प्रगृह्य अधर्ममेव विशत इति योजना ॥

कुरूणामवासृजदित्यत्र कुरूणां देशादिति योग्यपदाध्याहारः ॥

प्रदर्शमान इत्यत्र प्रदर्शमानः प्रपश्यमान इत्यर्थः ॥

अत्यासन्नं मद्गतं मन्यतेऽर्थमित्यत्र मद्गतं मत्तो गतम् ॥

यत्तत्कर्णो मन्यत इत्यत्र युद्धे आयुधं गृहीत्वा अर्जुनेन वारणीयमात्मानं मन्यते इति योजना ॥

ततोऽर्थबन्धमित्यत्र अर्थे बध्नतीत्यर्थबन्धं राज्यं ततः अर्जुनात् मम हर्तुं शक्यमिति मन्यते ॥ अध्यायः २६ ॥

महास्रावं जीवितमित्यत्र महान् स्रावः नवद्वारेषु स्रवणं यस्य तत्तथोक्तम् । मा विनङ्क्षीः अन्तर्णीतो णिच्, मा विनाशयेत्यर्थः ॥

अपाक्रमः स्वपदा यस्त्वमेभ्य इत्यत्र यस्त्वं स्वपदा अपाक्रमः पादविक्षेपमकरोः, स त्वं एभ्यः अमात्येभ्यः मा मा क्रमः । देवयानात्पथश्च माऽपगाः ॥ अध्यायः २७ ॥

असंशयं सञ्जयेत्यत्र कर्मणः युद्धकर्मणः ॥

यदि धर्मं चरामीत्यत्र यदि पाषण्डिवत् धर्मं अधर्मं चरामि धर्मे अधर्मबुद्धिं करोमीति यावत् । यदि च अधर्मं धर्मं चरामि अधर्मे धर्मबुद्धिं करोमीत्यर्थः । तर्हि मां गर्हयेः । धर्म एव धर्मबुद्धिं कुर्वेति, अधर्मे चाधर्मबुद्धिं कुर्वेति मयि निन्देयमसङ्गतेति भावः ॥

यत्राधर्मो धर्मरूपाणि बिभ्रदित्यत्र यत्र पाषण्डिनां देशे अधर्मः भस्मधारणादिरूपः धर्मरूपाणि बिभ्रत्, कृत्स्नो धर्मः ऊर्ध्वपुण्ड्रधारणादिः अधर्मरूपः दृश्यते । यत्र विवेकिनां देशे धर्मः ऊर्ध्वपुण्ड्रधारणादिः धर्मरूपं धारयन् दृश्यते, उपलक्षणं चैतत् । अधर्मः अधर्मरूपं धारयन् दृश्यते, तत्र विद्वांसः ज्ञानिनः तं धर्ममधर्मं च बुद्ध्या संप्रपश्यन्ति । अयमधर्मः अयं धर्म इति निश्चिन्वन्तीति भावः ॥

एवं तथैवापदि लिङ्गमेतदित्यत्र एवं उक्तरीत्या वृत्तिनित्यौ वृत्त्या स्थित्या नित्यौ नियतौ धर्माधर्मौ आपदि उक्तसाधूनामेव महापद्यागतायां सत्यां एतत्पाषण्डिनां लिङ्गं भजेताम् । म्लेच्छदेशे तद्भयात् साधूनामपि स्वधर्मत्यागेन स्वशिरोमुण्डन–श्मश्रुधारण–शून्यललाटत्वादितद्धर्मलिङ्गस्यैव धर्मतया

म्रियमाणत्वात् यस्य साधोः आद्यं लिङ्गं पाषण्डिनां लिङ्गं प्रमाणं प्रमाणवदङ्गी-कार्यमभूत्, तस्य साधोः तमधर्मं आपद्धर्मं वदन्ति । अधर्मस्यापि तस्य आपदि धृतत्वेन नरकाद्यनर्थाहेतुत्वात् धर्मप्रायतया धर्मत्वमिति भावः । एवमस्माक-मपि आपद्ग्रस्तत्वात् सुहृदां वधोऽपि धर्म एवेति भावः ॥

लुप्तायां तु प्रकृतावित्यत्र दुर्जनसंसर्गवशात् प्रकृतौ स्वस्वभावे लुप्तायां सत्यां आपदि कर्म आपद्धर्मरूपं कर्म यो न निष्पादयेत्; प्रकृतिस्थः स्वस्व-भावस्थः पुरुषः अनापद्यपि, वर्तमानः आपद्धर्मे वर्तमानो यः एतावुभावपि हे सञ्जय गर्ह्यौ भवतः । अहीनं उत्तमम्, पुरुषः तदुभयमपि परीप्सेद्विचारयेत् । आपद्यपि मया युद्धं न कृतं चेत् लोको मामपहसिष्यतीति भावः ॥

अविलोपमित्यत्र प्रमादात् कर्मविलोपे सतीति वाक्यमध्याहृत्य व्याख्येयम् ॥

तदर्थिनः पितर इत्यत्र तदर्थिनः अन्नक्षण्यक्षयार्थिनः ॥

नान्यत्तत इत्यत्र ततः पितृपितामहाद्याचारात् अन्यत् न नास्ति नास्ति इति त्रिवाचा शपथः ॥

यदि ह्यहमित्यत्र अस्य कृष्णस्य शासनमिति योग्यपदाध्याहारः । उभयोः वंशयोः ॥

काश्यो बभ्रुरित्यत्र बभ्रुरिति पौण्ड्रकवासुदेवानुजस्य नाम ॥ अ०२८॥

पाण्डवानां समर्थमित्यत्र सं समीचीनमर्थं पुरुषार्थमित्यर्थः ॥

अथो कस्मादित्यत्र अधर्मः कस्मादिति योग्यपदाध्याहारः ॥

नाभुञ्जानो भक्ष्यभोज्यस्येत्यत्र भोजनविषयज्ञानवत् भोजनकर्मवच्च ज्ञानकर्मणोरुभयोरप्यावश्यकतेति भावः ॥

ते चेदिमं कौरवाणामित्यत्र उपायं सामाख्योपायम् ॥

भैमसेनाभिगृह्येत्यत्र भीमसे(ना)नसम्बन्धिनो राज्ञः निगृह्य नितरा-मनुगृह्य अनाक्रम्येत्यर्थः ॥

सतां दुष्टानित्यत्र सतामर्थे, इति अनेन प्रकारेण वर्तमाने तस्मिन् राज्ञि असाधु अमङ्गलं न गृध्येद्वै नाकाङ्क्षेत् ॥

निधिप्रकोपाद्विधिमित्यत्र 'विधिर्विधाने दैवेऽपि' इत्यभिधानात् विधिना परकृतसेनाविधानेन जातप्रकोपात् विधिं स्वभटान् प्रति एवं कुरु एवं कुर्विति कर्तव्यार्थोपदेशं आदधानः कुर्वन् ॥

स्तेनो हरेदित्यत्र यत्र यस्य राज्ञः देशे प्र(न)णष्टः 'नश् अदर्शने' इति धातोः प्रकर्षेणादर्शनं प्राप्तः । उभावेतौ राजानौ ॥

किं पृच्छसे धृतराष्ट्रस्य पुत्र इत्यत्र धृतराष्ट्रस्य पुत्र इति विषयसप्तमी ॥

भागः पुनरित्यत्र पाण्डवानां भागः निविष्टः कौरवराज्ये प्रविष्टः । परे पाण्डवाः । अस्मत्पदे अस्मदीयराज्यस्थानविषये । पित्र्यः भागः परराज्यात् परेण दत्तराज्यात् ॥

एते दुर्योधनसहायार्थमागता राजानः ॥

पुत्राणां च कृतमित्यत्र अस्मात् धृतराष्ट्रात् पुत्राणां कृतं शर्म कृतं भविष्यत् अभविष्यत् ॥

सहितास्तत्र राज इत्यत्र 'राजा राट् पार्थिवो नृप' इत्यभिधानात् राजः राजानः ॥

अध्यायः २९ ॥

विशुद्धकृत्यांश्चरणोपपन्नानित्यत्र चरणमाचरणं आचारः ॥

योऽसौ चतुष्पादित्यत्र चतुष्पात् चत्वारो धर्मपादा यस्य स तथोक्तः ॥

वृन्दारकं कविमित्यत्र वृन्दं क्षत्रियवृन्दं सौजन्यादिना आ सम्यक् रमयतीति वृन्दारः, स्वार्थे कप्रत्ययः । वृन्दार एव वृन्दारकः ॥

यस्य काम इत्यत्र शमादन्यः कामो न वर्तेत इति योजना । मा मां प्रति प्रसन्नः यथा अभिवदेत् अभिमुखः सन् वदेत् तथा कुर्विति योजना ॥

अन्तर्भूताः सेनान्तर्विद्यमानाः ॥

कच्चित्पुत्रा इत्यत्र जीविकादानेन गृहीताः पुत्राः जीवपुत्राः ॥

या नो भार्या इत्यत्र भार्याः स्वपतीनामभावे भर्तुं योग्याः दुर्योधना-दीनां पत्न्यः सुरतयः सुष्ठु रतिर्यासां ताः सुरतयः ॥

खञ्जः एकपादः ॥

ध्वस्ताजीवा इत्यत्र ध्वस्तः आजीवः जीविका येषां ते स्थविराः सेवका इत्यर्थः ॥

ये चान्यथेत्यत्र अन्यथा वैपरीत्येन प्रयतन्त इति सम्बन्धः ॥ अ० ३० ॥

अलं विज्ञापनायेत्यत्र विज्ञापनाय यदलं शक्यं भवति तदाचक्षीथा इति योजना ॥

भारतानाममद्यपमित्यत्र राजानः प्रायो मद्यपा भवन्ति । भीष्मस्तु व्रतशीलत्वात् मद्यं न पिबतीति सूचनाय अमद्यपमित्युक्तम् ॥ अध्यायः ३१ ॥

आचक्ष्व मां सुखिनमित्यत्र काल्यं कालः अवकल्नं दर्शनं तस्य योग्यमाचक्ष्व ॥

अभ्येत्य त्वां तात वदामीत्यत्र अजातशत्रुं पार्थमभ्येत्य सुखेन आगतं त्वामिति योग्यपदाध्याहारेण योजना ॥

भूयश्चाहो यत्र तेऽग्रे मनोऽभूदित्यत्र अग्रे विभागसमये यत्र राज्ये ते मनोऽभूत्, भूयश्च तदेवाकाङ्क्षते, अहो । बुभूषत इति पाठे स्पष्टम् । निर्णिक्तधर्मार्थकरः 'निर्णिक्तं शोधितं मृष्टम्' इत्यभिधानात् शुद्धधर्मार्थौ करोतीति स तथोक्तः ॥

धर्मः परो वित्तचयात्मनोऽस्येत्यत्र वित्तचयात्मनः वित्तसमूहरूपस्य, अस्य राज्यस्य मध्ये ॥

नन्वेव मन्य इत्यत्र यत्र पुरुषे यत्कर्म यथावत् युक्तं भवति, तस्य पुरुषस्य तदेव कर्म सम्पद्यत इति मन्ये ननु इति पदयोजना ॥

पौरुषं कर्मणो हीत्यत्र कर्मणः पौरुषं सामर्थ्यं आहुः ॥

मातुः पितुः सकाशात् । कर्मणा सिद्धेन भोजनेन ॥

शुष्ककर्मैव नालम्, किन्तु हर्येनुग्रहोऽप्यपेक्षित इत्याह—परेति । परप्रयुक्तः परमात्मना प्रयुक्तः ॥

मन्ये वैरमित्यत्र मनुष्यात् मनुष्यप्रयत्नात् । इमं तव कर्मदोषं च दृष्ट्वा मनुष्यात् कर्म दैवं च वैरं मन्ये इति पूर्वेणान्वयः ॥

अङ्गात्मन इत्यत्र 'अङ्गेत्यामन्त्रणेऽव्ययम्' इत्यमरः । अङ्गेति धृतराष्ट्रस्य सम्बोधनम् । विशेषेण सृजन् विसृजन् अमुत्र इह च उपक्रोशं उपक्रोशति रोदित्यनेनेति उपक्रोशो दुःखं गतोऽसीति योजना ॥

एवंधर्मा नापद इत्यत्र एवंधर्मा पूर्वोक्तपापमेव धर्मो विशेषणं यस्य स तथोक्तः ॥

व्यपायी विशेषेण धर्मार्थयोः सभ्योदितमन्त्राणां च अपायोऽस्यास्तीति व्यपायी ॥

कालिकाः मृत्युकालवन्तो न भवन्तीत्यकालिकाः, अकालिका यथा भवन्ति तथा अकालिकम्, अजातशत्रुः त्वयि जातु पापं हिंसारूपपापं विसृज्य अकृत्वा पापे साक्षाद्दुर्द्यूताख्यपापकर्तरि दुर्योधने पापं तदैव हननाख्यपापं इच्छेच्चेत् चरेच्चेत् तदैव कुरवो नाभविष्यन् । यद्यस्मात्कर्मणः त्वयि निन्दा च द्यूतं न निवारितवानिति अकीर्तिश्च तत् तदैवाभविष्यत् ॥

किमन्यत्र विषयादित्यत्र ईश्वराणां समर्थानामर्जुनादीनां विषयात् अन्यत्र किं किं वीर्यमस्ति । यत्र यस्मात् मनुष्यकारः मनुष्यान् अधः करोतीति स तथोक्तः ॥

नान्यप्रीत इत्यत्र अन्यप्रीतः हरेरन्येषु विषयेषु प्रीतः । तत्र इन्द्रियेषु । मातुः पितुः सकाशात् । कर्मणा स्वकर्मणा । भोजनेन कर्मणा प्राप्तभोजनेनैव ॥

प्रजानामित्यत्र प्रजानां सन्ततीनाम् । नो चेत् सन्ततिक्षयो नो चेत् ॥

नागाः शममित्यत्र शमं न अगा इति सम्बन्धः ॥ अध्यायः ३२ ॥

नाकाल्यो जातुदर्शन इत्यत्र अकाल्यः कालायोग्यः न[1] ॥

आविशन्ति प्रजागरा इत्यत्र प्रजागरा जाग्रदवस्थाः ॥

राजलक्षणसम्पन्न इत्यत्र त्रैलोक्यस्यापि प्रियः यः राजलक्षणसम्पन्नो भवति, तं युधिष्ठिरं प्रति दूताः प्रेपिताः, उपरि प्रेष्यन्ते च । राजलक्षणसम्पन्ने

---

[1] परम्.

युधिष्ठिरे राज्यादानात् दूतप्रेषणं व्यर्थमिति भावः । एतदेव सूचयितुं प्राक् तद्विशेषणम् ॥

विपरीतः दुश्शीलदुर्योधनादिभ्यो विपरीतः धर्मराजः ॥

एकस्माद्वृक्षादित्यत्र एकस्माद्वृक्षात् अश्वत्थवृक्षात् यज्ञपात्राणि स्रुक् च काष्ठादिना जायते, तथा पीडिनी पीडाकर्त्री, लोडिनी विषादिरसानां लोडनकर्त्री, द्रोणी द्रोणाख्यः पात्रविशेषश्च जायते । एवं तव कुल एव सुपुत्रोऽपि जातः, दुष्पुत्रोऽपि जात इति भावः ॥

क्रोधो हर्ष इत्यत्र हर्षः धनमदादिना हर्षः । ह्रीः पूज्यपूजने लज्जा । मान्यमानिता 'मानश्चित्तसमुन्नतिः' इति वचनात् अहं सर्वेभ्यो मान्य इति चित्तसमुन्नतिः । अर्थाः अर्थरूपा इमे पदार्थाः ॥

यस्य कृत्यं न विघ्नन्तीत्यत्र विघ्नन्ति विशेषेण घ्नन्ति विघ्नन्ति ॥

नान्तर्वसतीत्यत्र कर्मणः अन्तः मध्य एव न वसति, कर्मासमाप्य न तिष्ठतीत्यर्थः ॥

प्रवृत्तवाक् 'वृत्तं पद्ये चरित्रे च' इति वचनात् प्रकृष्टानां वृत्तं चरित्रं वक्तीति प्रवृत्तवाक् ॥

अश्रुतः शास्त्रश्रवणरहितः ॥

स्वमर्थं यः परित्यज्येत्यत्र स्वं स्वकीयं अर्थं स्नानजपादिकम् । परार्थं परेषां शूद्रादीनां अर्थं नीचसेवनादिकम् ॥

अकामान् कामायोग्यान् परदारादीन् । कामयानान् स्वदारान् ॥

संसारयति कृत्यानीत्यत्र कृत्यानि पुण्यकर्माणि संसारयति 'सृ गतौ' इति धातोः सर्वान् प्रति प्रापयति उपदिशतीत्यर्थः । स्वयं तु नाचरतीति भावः । विचिकित्सते संशयं करोति ॥

एकः पापानि कुरुत इत्यत्र फलं तत्संसर्गवशात् ऐहिकानर्थरूपम् । मुच्यन्ते पारत्रिकनरकाद्यनर्थात् ॥

एकया द्वौ विनिश्चित्येत्यत्र एकया कर्मकाण्डब्रह्मकाण्डयोः अन्यतरया कर्मकाण्डरूपया वेदवाचा द्वौ प्रवृत्तिनिवृत्तिमार्गौ विनिश्चित्य विभागेन निश्चित्य पुनः 'अथातो धर्मजिज्ञासा' इति प्रथमसूत्रोक्तरीत्या 'अपाम सोममभृता अभूमागन्म ज्योतिरविदाम देवान्' इति श्रुत्यर्थपर्यालोचनया ज्ञानद्वारा मोक्ष-साधननिवृत्तिधर्माणामेव सर्वत्र जिज्ञासितत्वान्निवृत्तिमार्गो विशिष्ट इति च निश्चित्य, चतुर्भिः फलमनपेक्ष्य केवलं कृष्णार्पणबुद्ध्या कृतैः 'त्रयो धर्म-स्कन्धाः— यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव' इति श्रुतेः 'यज्ञो दान-मध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः' इति अत्रैव वक्ष्यमाणत्वाच्च यज्ञाध्ययनदानतपोरूपैश्चतुर्भिर्निवृत्तिधर्मैः त्रीन् धर्मार्थकामरूपान् प्रवृत्तिधर्मान् वशे कुरु तद्वशस्त्वं मा भूः । किन्तु तानेव वशीकृत्य प्राणधारणार्थं यावदेव भवेत् तावदेव कुरु, न तु तत्रैव श्रद्धां कुर्वित्यर्थः। 'कर्मणा ज्ञानमातनोति' इति श्रुतेः उक्तैर्निवृत्तिधर्मैः शुद्धान्तःकरणस्त्वं पुनरेकया ब्रह्मकाण्डरूपया वेद-वाचा द्वौ 'द्वा सुपर्णा' इत्यादिश्रुत्युक्तौ जीवपरमौ विनिश्चित्य प्रथमद्वितीया-ध्यायोक्तैः 'भेदव्यपदेशात्' 'स्थित्यदनाभ्यां च' इत्यादिभेदप्रतिपादकसूत्रैः विलक्षणाविति निश्चित्य पुनः समन्वयाविरोधाध्यायद्वयोक्तगुणपूर्णत्वनिर्दोषत्वा-ख्यधर्मबलात् तयोर्मध्ये विष्णुर्विशिष्ट इति च निश्चित्य पुनः साधनाध्यायोक्त-रीत्या चतुर्भिः वैराग्यभक्त्युपास्त्यपरोक्षज्ञानाख्यैश्चतुर्भिः साधनैः तदनन्तरं फला-ध्यायोक्तरीत्या 'यत्र तत्परमं पदं विष्णोर्लोके महीयते । लोका यत्र ज्योति-ष्मन्तस्तत्र माममृतं कृधि' इत्यादिश्रुतेः 'येनापवर्गाख्यम्' इति स्मृतेश्च त्रीन् अपवर्गाभिधान् वैकुण्ठश्वेतद्वीपानन्तासनाख्यान् त्रीन् विष्णुलोकान् वशे कुरु। यदा यस्मिन् लोके तिष्ठासा तदा तत्र स्थितिर्यथा भवेत् तथा हरेरनुग्रहं सम्पा-दयेति भावः । तदनन्तरं प्रारब्धकर्मभोगानां परिपाके सति पञ्च बाह्यज्ञाने-न्द्रियाणि तथा पञ्च कर्मेन्द्रियाणि च जित्वा षट् कामक्रोधादीन् अन्तःकरण-धर्मान् विजित्वा सप्त त्वक्चर्मरुधिरमांसमेदोमज्जास्थिरूपान् सप्तधातून् हित्वा सुखी आनन्दमीमांसोक्तस्वरूपसुखानुभववान् भव । न तु तार्किकोक्तरीत्या आत्यन्तिकदुःखनिवृत्तिमात्रेण तुष्टो भव । नापि मायिमते विश्वासेन 'यतो

वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्' इति श्रुतौ कार्त्स्न्येन जीवमनोवाचामप्यगोचरतयोक्तस्य अत एव जीवैरलभ्यस्य सामान्यतो जीवानां वेदनमात्रयोग्यस्य च ब्रह्मानन्दस्याप्यनुभववान् भव । अनवच्छिन्न-ब्रह्मसुखस्य अलभ्यतयाऽभवत्याशीर्वादायोगात्[1] स्वयोग्यसुखमेवात्रोच्यत इति भावः । सु शोभनानि प्रसन्नानि खानि येन भवन्ति तत्सुखमिति व्युत्पत्तेः स्वरूपभूतज्ञानेन्द्रियैर्व्यज्यमानसुखवान् भव । न तु मायिरीत्या स्वरूपभूत-चिद्रूपदेहस्याप्यभाववान् भव । सुखीत्युक्त्या स्वरूपभूतदेहसुखादावपि विशेष-शक्त्या अङ्गाङ्गिभावः सुखत्वं सुखित्वमित्यादिभेदव्यवहारोऽप्यस्तीति समग्र-वाक्यार्थो ज्ञेयः ॥

एकमेवाद्वितीयं तदित्यत्र एकं स्वगतभेदवर्जितम् । 'अस्य गोर्द्वितीयेन भवितव्यमित्युक्ते सदृशो गौरेवानीयते, नाश्वो न गर्दभ' इति वचनात् अद्वितीयं असदृशम् ॥

सर्पो बिलेशयानिवेत्यत्र बिलेशयान् मूषिकान् ॥

शत्रोश्च मोक्षणमित्यत्र शत्रोः सकाशात् ॥

महच्च दण्डपारुष्यमित्यत्र राज्ञो दण्डदानसमये पारुष्यं दण्डपारुष्यम् । अर्थदूषणं दत्तस्य द्रव्यस्य दूषणम् ॥ अध्यायः ३३ ॥

मिथ्योपेतानीत्यत्र मिथ्योपेतानि छद्मना सहितानि अनु अनन्तरं तापप्रयुक्तानि तापैः तपस्तपनादितापैः[2] प्रकर्षेण युक्तानि कर्माणि यदि सिध्येयुः, तात्कालिकजयाख्यफलेन फलवन्ति भवन्ति । तेषु मनः मा स्म कृथा इति योजना ॥

उपाययुक्तं उप समीपे कालान्तरे जन्मान्तरे वा आयेन फललाभेन युक्तं योगविहितं योगः नियोगः विधिः तेन विहितं कर्म यदि न सिध्येत्, तत्र तस्मिन् कर्मणि ॥

अनुबन्धानित्यत्र अनुबन्धान् सहायान् ॥

---

[1]भवेत्याशीर्वादायोगात्. [2]तमःपतनादितापैः.

उत्थानं अभिवृद्धिम् ॥

वर्तितव्यमसाम्प्रतमित्यत्र असाम्प्रतं अयुक्तं यथा भवति तथा ॥

केचिन्नित्यं तथागता इत्यत्र तथा आगताः स्वप्रयत्नं विना दैवेनैव आगताः । पुरुषकारः पुरुषप्रयत्नः ॥

आसीनमपि तूष्णीकमित्यत्र 'तूष्णींशीलस्तु तूष्णीकः' इत्यभिधानात् तूष्णीकं तूष्णींशीलम् ॥

शिलाहारी शिलां यथेत्यत्र शिलाहारी शिलाकणभक्ष(णः)कः पारावतः ॥

यदतप्तं प्रणमते इत्यत्र अतप्तं अयस्सारकृतशस्त्रादि ॥

अश्वान् रक्षेदनुक्रमादित्यत्र अनुक्रमात् अनुकूलात् पादविक्षेपात्' इतस्ततो धावनादित्यर्थः ॥

समाख्या गोमता जितेत्यत्र समाख्या सं सम्यगाख्या प्रकथनं यस्याः सा विद्वत्सभा गोमता वाक्यवता वाग्मिनेत्यर्थः ॥

आढ्यानां मांसपरममित्यत्र आढ्यानां स्थूलकायानां मदान्धानां इदानीं तव पुत्राणाम् । मध्यमानां ईषद्भाग्यवताम् । दरिद्राणां अर्थरहितानां पाण्डवानां लवणोत्तरं लवणसमुद्रा एव उत्तरा यस्य एतादृशं राज्यमेव भोजनम् ॥

सम्पन्नतरमेवान्नमित्यत्र दरिद्राः पाण्डवाः सम्पन्नान् सम्यग्युद्धाय प्राप्तान् तरन्त्यतिक्रामन्त्यनेनेति सम्पन्नतरं शौर्यं तदेव अन्नं अन्नमिव भुञ्जते 'भुज पालनाभ्यवहारयोः' इति धातोः पालयन्ति ॥

नक्षत्राणि ग्रहैरिवेत्यत्र गृह्णन्त्यप इति ग्रहाः सूर्यकिरणाः तैः ॥

यो जित इत्यत्र पञ्चवर्गेण पञ्चेन्द्रियसमूहेन ॥

आत्मनाऽऽत्मानमन्विच्छेत्यत्र आत्मानं परमात्मानम् । आत्मा अन्तःकरणः । तस्य जीवस्य, येन पुरुषेण 'आत्मा देहे धृतौ यत्न' इति वचनात् आत्मना प्रयत्नेन ॥

क्षुद्राक्षेण क्षुद्रमनसा ॥

शुष्केणार्द्रमित्यत्र शुष्केण काष्ठेन आर्द्रं इन्धनम् ॥

पञ्चप्रयोजनादित्यत्र पञ्च इन्द्रियाणि पञ्चप्रयोजनात् रूपरसादिपञ्चविषयानुभवप्रयोजनात् ॥

असानयं बाधत इति सर्वान् प्रति रोदनमाक्रोशः ॥ अध्यायः ३४ ॥

प्राजापत्या वयमित्यत्र प्राजापत्याः कश्यपप्रजापतेः पुत्राः ॥

न त्वासेयं त्वया सहेत्यत्र त्वया सह न तु आसेयं नोपविशेयम् ॥

धृतराष्ट्रं महाप्राज्ञमित्यत्र धृतराष्ट्रेति हंसस्य नाम ॥

पृष्टो धर्मं न विब्रूयादित्यत्र गोकर्णशिथिलं गौः वाक् कर्णात् शिथिला स्रंसिता यथा भवति तथा गोकर्णशिथिलं चरन् आचरन् ॥

धर्म एतान् संरुजतीत्यत्र अनुकूलजान् कूलमनुसृत्य जातान् वृक्षान् नदी यथा ॥

भवेत्पादश्च कर्तरीत्यत्र कर्तरि निन्दायोग्यपापकर्तरि ॥

यां रात्रिमधिविन्ना स्त्रीत्यत्र अधिविन्ना अधि अधिकं विन्ना पतिवियोगाद्वेदनां प्राप्ता ॥

बहिर्द्वारो बुभुक्षित इत्यत्र 'स्त्री द्वार्द्वारं प्रतीहार' इत्यमरः । द्वारः द्वारस्य ॥

पञ्च पश्वनृतं हन्तीत्यत्र महिष्यादिपशोरर्थे अनृते उक्ते सति पञ्च पुरुषान् हन्ति ॥

सुधन्वा त्वद्विरोचनेत्यत्र सुधन्वा त्वत् त्वत्तः श्रेयान् ॥ अ० ३५ ॥

चोरपूर्वं पूर्वं चोरश्चोरपूर्वः तम्, शलाकसूत्रं शलाके सूत्रं परिवेष्टयित्वा विक्रेता शलाकसूत्रः तम् ॥

सुराप्रहापण इत्यत्र पुष्पाग्रं छित्त्वा हापयति त्याजयतीति सुराप्रहापणः ॥

तृणोल्कया ज्ञायते जातरूपमित्यत्र तृणोल्कया तृणोपरि पतितकान्त्या जातरूपं सुवर्णम् ॥

चत्वार्येतान्यन्ववेतानीत्यत्र अन्ववेतानि अनु अनुकूलतया अवेतानि ज्ञातानि । यज्ञादीनि चत्वारि स्वर्गसाधनत्वात् स्वर्गात्प्रागनुकूलतया ज्ञातानीति भावः । अन्ववयन्ति अनुकूलतया जानन्ति । स्वर्गेऽप्यपेक्षितत्वात् दमादीनि चत्वारि स्वर्गे वर्तमानाश्च अनुकूलतया जानन्तीति भावः ॥

गुरुरात्मवतामित्यत्र आत्मवतां वशीकृतचित्तानां मुनीनाम् ॥

बुद्धिश्रेष्ठानीत्यत्र केवलं बुद्ध्यैव कृतत्वाच्छ्रेष्ठानि, आज्ञामात्रेण राज्यपरिपालनादीनि वीरक्षत्रियकर्माणि बुद्धिश्रेष्ठानि । बाहुभ्यां कृतत्वान्मध्यानि, कृषिवाणिज्यादीनि वैश्यकर्माणि बाहुमध्यानि । भारप्रत्यवराणि भारेण प्रत्यवराणि नीचानि यानि शूद्रादीनां काष्ठोद्वहनादिकर्माणि, अत एव जघन्यानि अधमानि तानि, 'सर्वं वाक्यं सावधारणम्' इति न्यायात् तान्येव जह्यात् । न तु प्रागुक्तमध्यमोत्तमकर्माणीति योजना ॥ अध्यायः ३६ ॥

रुशतीं वर्जयेतेत्यत्र 'रुशती वागकल्याणी' इत्यमरः । रुशतीं अमङ्गलाम् ॥

विरिञ्चमानोऽप्यतिरिच्यमान इत्यत्र विरिञ्चमानः विशेषेण सृष्टिं कुर्वन्, अत एव अतिरिच्यमानः अतिशयं प्राप्नुवन् ब्रह्मादिरपि वाणैर्वाग्बाणैः नाभिविध्येत, स कविरिति विद्यात् ॥

यो ना हतः प्रतिहन्यान्नेत्यत्र यो ना पुरुषः ॥

सत्यं वदेद्व्याहृतमित्यत्र सत्यं व्याहृतं वदेत् तत् द्वितीयं श्रेय इति सम्बन्धः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

निवर्तितात्तु सर्वत इत्यत्र निवर्तितात् निवर्तनात् ॥

भावं भद्रम् ॥

परेभ्योऽप्यात्मशङ्कित इत्यत्र आत्मशङ्कितः आत्मनि शङ्कितः, किं कुर्यादिति शङ्कावान् ॥

महाकुलानां अतिशयेन कुलरहितानां वृत्तिं नाप्नोति ॥

न्यासापहरणेन चेत्यत्र न्यस्यत इति न्यासो न्यस्तं द्रव्यम् ॥

कुलानि समवेतानीत्यत्र गोभिः प्रियवचनैः, पुरुषतः पुरुषसत्त्वभावात्, अर्थतः परोपकारकरणात् समवेतानि सदा युक्तानि कुलानि भवन्ति। वृत्ततः हीनानि कुलसंख्यां कुलेषु सङ्ख्यां न गच्छन्ति ॥

राज्ञा वध्य इत्यत्र राज्ञा परराष्ट्राधिपेन ॥

यश्च नो ब्राह्मणं हन्यादित्यत्र नः अस्माकं मध्ये इत्युत्तरत्रापि। समितिं सभाम् ॥

तृणानि भूमिरुदकमित्यत्र तृणानि दर्भाद्यासनतृणानि, भूमिः उपवेशनाय स्थलम्, उदकं पानाय उदकम् ॥

श्रद्धया परयेत्यत्र पुण्यकर्मिणां धर्मिणां प्रवृत्तानि प्रकृष्टानि वृत्तानि वर्तनानि परया श्रद्धया सत्कृतिं अतिथ्यभ्यागतादीनां पूजां उपनीतानि उप उपपन्नतया नीतानि एभ्यस्तानि भवन्ति इति योग्यक्रियया सम्बन्धः ॥

महीजाः वृक्षाः ॥

एवं युक्ता इत्यत्र युक्ताः अन्योन्यं स्नेहेन युक्ताः ॥

यद्वै मित्रमित्यत्र कोपने श(क्त्यं)क्यं नो ॥

पारिप्लवमतेः 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यभिधानात चञ्चलबुद्धेः ॥

सत्कृताश्च कृतार्था इत्यत्र कृतार्थास्तृप्ताः। अथवा कृतः अर्थः प्रतिप्रयोजनं यैस्ते कृतार्थाः ॥

नानर्थयन्विजानातीत्यत्र अनर्थयन् द्रव्यस्याप्रदाने[1] अनर्थं कुर्वन् ॥

अनवाप्यं च शोकेनेत्यत्र शोकेन प्रयोजनमनवाप्यं इति योग्यपदाध्याहारेण योजना ॥

तनुरुच्चशिखीत्यत्र तनुः अल्पकः मया मिथ्या वृथा राजा राजेत्युपचरितः दुर्योधनः ॥

न वै भिन्ना इत्यत्र भिन्नाः बुद्धिभेदं प्राप्ताः ॥

[1]दानेन.

सम्भाव्यं गोपु सम्पन्नमित्यत्र सम्पन्नं क्षीरं गोपु सम्भाव्यम् ॥

सतां पेयं संहर्तुं शक्यम् ॥

मृदुप्रौढा गच्छतीत्यत्र मृदुभिः प्रकर्षेण ऊढा श्रीः पुत्रपौत्रान् गच्छति॥

अध्यायः ३७ ॥

वध्वा वासं श्वशुरोऽयमन्यत इत्यत्र 'वधूर्जाया स्नुषा स्त्री तु' इत्यभिधानात् वध्वा स्नुषया सह वासम् ॥

नेदं युक्तं वचनं प्रातिपेयमित्यत्र प्र प्रकर्षेण अत्यन्तं पेयं पानयोग्यं तव नाभूत् ॥

चत्वरे प्राङ्गणे ॥

न निह्नवं मन्त्रगतस्य गच्छेदित्यत्र 'अपलापस्तु निह्नव' इत्यभिधानात् निह्नवं अपलापम्, कुत्सङ्गतस्य कुत्सितैः सह सङ्गतस्य संसृष्टमन्त्रस्य कुत्सितेषु स्वस्मिंश्च समानतया सृष्टमन्त्रस्य (श्रु)स्रुतमन्त्रस्येत्यर्थः, मन्त्रगतस्य राज्ञः निह्नवमपलापं न गच्छेत् न कुर्यात् । तादृशस्थले प्रियमेव कुर्यादिति भावः ॥

सकारणं व्यपदेशं च कुर्यादित्यत्र सकारणं मध्ये नदी वर्तते, वर्षाकालः, कथमिदानीं राजकार्यमिति कारणेन सहितं कार्यव्यपदेशं कुर्यात् । न तु तूष्णीमेव वदेत ॥

विधवा बालपुत्रेत्यत्र बालाः बालकाः पुत्राः यस्याः सा विधवा । साऽपि स्वपुत्रजीवनाशया उक्तं शृणोतीति भावः ॥

न चैनमाद्यून इति क्षिपन्तीत्यत्र 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जित' इत्यमरः । आद्यूनः उदरम्भरः ॥

अनिष्टवेषमित्यत्र इष्टो न भवतीत्यनिष्टो वेषः अलङ्कारो यस्य वेश्यागन्तृवत् विकृताकार इत्यर्थः । 'स्यादर्यः स्वामिवैश्ययोः' इत्यभिधानात् कदर्यः कुत्सितस्वामी । अश्रुतं न विद्यते श्रुतं शास्त्रश्रवणं यस्य तम् । वनौकसं धूर्तमिति पाठे वनौकसं किरातम् । अमान्यमानिनं अमान्यान् मानयितुमयो-

ग्यान् नीचान्मानयतीत्यमान्यमानी तम् । निष्ठूरिणं 'अपि मापं मपं कुर्याच्छन्दोभङ्गं न कारयेत्' इति वचनात् निष्ठूरिणमित्युक्तम् ॥

संश्लिष्टकर्माणमित्यत्र संश्लिष्टं संश्लेपः भावे क्तप्रत्ययः बहुजनसमागम इत्यर्थः, तस्मिन् सति कर्म सन्ध्यावन्दनादिकं यस्य तम्, डम्भमित्यर्थः ॥

सहायबन्धना इत्यत्र अर्थाः प्रयोजनानि सहायबन्धनाः जनसहायनिमित्तकाः, सहायाश्च अर्थबन्धनाः स्वस्वप्रयोजननिमित्तकाः ॥

तस्य वृत्तिभयं कुत इत्यत्र वृत्तौ वर्तने भयं कुतः ॥

श्वेतो ग्रहस्त्वापतन्नित्यत्र श्वेतो ग्रहः धूमकेतुः उल्कापातो वा ॥

अध्यायः ३८ ॥

शल्यकर्ताऽवकीर्णी इत्यत्र 'अवकीर्णी हतव्रत' इत्यभिधानात् अवकीर्णी व्रतभ्रष्टः ॥

अग्निकार्येष्वशोध्य इत्यत्र अशोध्यः करोति न वेति शोधनायानर्हः, निश्चयेन कर्तेत्यर्थः ॥

धर्मकामार्थकार्याणि कृतान्येव दर्शयेदिति सम्बन्धः । तथा तथा सति मन्त्रो न भिद्यते ॥

अरण्ये निःशलाके चेत्यत्र निश्शलाके तृणगुल्मादिशलाकारहिते ॥

अमात्येऽप्यर्थलिप्सा चेत्यत्र अर्थलिप्सा प्रयोजनलिप्सा ॥

आवर्तयन्ति भूतानीत्यत्र आवर्तयन्ति पराङ्मुखान्यपि स्वाभिमुखीकुर्वन्ति ॥

यत्र स्त्री यत्र कितव इत्यत्र वालो मूर्खः ॥

प्रयोजनेषु ये सक्ता इत्यत्र प्रयुज्यते एभिः स्वकार्यमिति प्रयोजनाः स्वकार्यकारिणः । विशिष्यन्त इति विशेषाः अवशिष्टा जनाः ॥ अ० ३९ ॥

भवाभवे शुभाशुभे ॥

यः प्रियः प्रिय एव स इत्यत्र यः प्रमात्मा प्रियः । औपाधिक-

प्रियास्तु उपाध्यभावे अप्रिया अपि भवन्तीति भावः । अन्यः इन्द्रादिः । साधुः द्वेष्यो न भवति । मेधाव्यपि द्वेष्यो न भवति । पण्डितोऽपि द्वेष्यो न भवति । प्रिये शुभानि कर्माणि ज्ञापकानि । द्वेष्ये तु पापानि ज्ञापकानि ॥

निवर्तमाने सौभाग्य इत्यत्र निवर्तमाने स्वसान्निवर्तमाने, नीते विनीते श्रा फलनिर्वृत्तिः फलनिष्पत्तिः, सौहृदे च यत्सुखं तच्च विनश्यतीति पूर्वेणान्वयः ॥

स्वल्पेऽप्यपकृते इत्यत्र अपकृते अपकारे सति ॥

निपुणं तादृशैः सङ्गतं निशम्येति सम्बन्धः ॥

यो ज्ञातिमवसीदतीत्यत्र अवसीदति अवसादयति । 'विपाक्ते दिग्धलिप्तकौ' इत्यभिधानात् दिग्धहस्तात् विपलिप्तहस्तात् पुरुषात् मृगो मृत्युमिव ॥

न कश्चिन्नापनयते पुमानन्यत्र भार्गवादित्यत्र 'कुलालो भार्गवश्चैव कुम्भकारो निगद्यत' इत्यभिधानात् भार्गवात् कुम्भकारात् अन्यत्र कश्चित्पुमान् शेषं दत्तस्य शेषं नापनयते पुनः प्रत्यावृत्य न नयति । कुम्भकारो हि वहुतरब्राह्मणभोजनार्थं अल्पद्रव्याशया प्राग्दत्तमेव भाण्डादिकं पुनर्नीत्वा नवीकृत्य विक्रीणातीति लोकप्रसिद्धम् । सम्प्रतिपत्तिः दत्तस्य पुनरनपहारः ॥

ब्रह्मचर्यया ब्रह्मचर्यधर्मेण वेदाभ्यासेन वा ॥

इद्रियाणामनुत्सर्ग इत्यत्र अनुत्सर्गः विपयेष्वप्रेषणम्, अमृत्युना मृत्युरहितमोक्षेण ॥

अपनीतं सुनीतेनेत्यत्र अपनीतं अविनीतं पुरुषं सुनीतेन सुनयेन अर्थं प्रति प्रयोजनं प्रति आनिनीषति ॥

मार्दवात्सव्यपत्रपमित्यत्र अपगता त्रपा अपत्रपा सा न भवतीति व्यपत्रपा सम्यग्लज्जेत्यर्थः । तया सहितम् ॥

आर्याननतिक्रम्य वर्तमानः अत्यार्यः तम्, व्रतमतिक्रम्य वर्तमानः अतिव्रतः तम् ॥

यः करोत्यौर्ध्वदैहिकमित्यत्र और्ध्वदैहिकं देहादूर्ध्वं विद्यमानस्वर्गादिफलसाधनं कर्म ॥

न तत्परस्य सन्दिह्यादित्यत्र तत्परस्य उक्ताष्टविधधर्मपरस्य विषये ॥

• अनाम्नायमला वेदा इत्यत्र 'म्ना अभ्यास' इति धातोः अनाम्नायोऽनभ्यासः ॥

सीसस्यापि मलं मलमित्यत्र मलं मलोपमं अमेध्यं वा ॥

न कथञ्चन जीर्यतीत्यत्र या इच्छा कथञ्चन न जीर्यति, तामिच्छां विमुञ्चेत्यन्वयः ॥ अध्यायः ४० ॥

यो ह्यर्थितोऽसज्जमान इत्यत्र असज्जमानः दुर्जनेष्वसज्जमानः । यः सद्भिरर्थितः सन् अर्थं तेषामर्थं करोति, सद्भिः प्रशस्तं फलं उपैति ॥

विषमौदुम्बरमित्यत्र विषं उदकम् ॥

नित्ये धर्मे प्रतिष्ठस्व ॥

तद्वै महन्मोहनमिन्द्रियाणामित्यत्र इन्द्रियाणां महन्मोहनं अज्ञानप्रदम्, तत् ऊर्ध्वाधोलोकगमनं बुध्यस्व । त्वां मा प्रलभेत न वञ्चयीत ॥

आत्मा नदीत्यत्र आत्मा देहः पुण्यतीर्था पुण्यानि तीर्थानि शास्त्राणि यस्यां सा । पुण्यवन्तो जनाः आत्मानं परमात्मानं प्राप्य यथा पूयन्ते तथेति पूर्वेणान्वयः ॥

• क्षात्राद्धर्मादीयत इत्यत्र ईयते ज्ञायते ॥ अध्यायः ४१ ॥

न तेन गर्ह्य इत्यत्र तेन कारणेन एतत् न वदामीत्येतत् ॥

सनत्कुमारं रहित इत्यत्र रहिते जनरहिते स्थले परमां बुद्धिं बुभूषन् 'भू प्राप्तौ' इति धातोः बुभूषन् प्राप्तुमिच्छन् ॥

सनत्सुजात यदिममित्यत्र सनदिति पदेन सह सु सुष्ठु जातं प्रसिद्धं नाम कुमारेति नाम यस्य स तथोक्तः । अन्यथा 'सनत्कुमारं रहित' इत्युपक्रमविरोधात् ॥

देवासुराभ्यन्तरचारिणस्त इत्यत्र देवानामसुराणां च अभ्यन्तरे अन्तर्हृदि चारिणः कामरूपेण सञ्चरत इत्यर्थः । अनेन मृत्योरभावे मृत्युपरिहाराय

देवैरमृतपानं किमर्थं कृतम्, असुरैश्च अमृत्यवे रुद्रादीन् प्रति उग्रं तपः कस्मात्कृतमिति ध्वनयति ॥

अमृत्युः कर्मणा केचिदित्यत्र केचित् अस्ति मृत्युः, कर्मणा पुण्यकर्मणा अमृत्युः मृत्युपरिहारो भवतीति वदन्ति ॥

उभे सत्ये क्षत्रियाद्य प्रवृत्ते इत्यत्र हे क्षत्रियाद्य धृतराष्ट्र उभे मृत्युरस्ति नास्तीति चोभे वाक्ये सत्ये ॥

**मोहो मृत्युः सम्मतो यः** कवीनामित्यत्र यो मोहः स मृत्युरिति कवीनां सम्मतः । अमोहश्चामृत्युरिति शेषः । अहं तु प्रमादं मृत्युं ब्रवीमि । सदा अप्रमादं अमृतत्वं ब्रवीमि । तस्मान्मतद्वयमपि प्रामाणिकमिति भावः ॥

**अप्रमादाद्ब्रह्मभूताः सुराश्चे**त्यत्र ब्रह्मणि परमात्मनि भूताः जाताः तद्ध्याननिरता इत्यर्थः । 'वृह वृंह वृद्धौ' इति धातोः वृद्धिमन्तो जाता इति वा । तर्हि मारिका काचन मृत्युर्देवताऽस्तीति लोकप्रवादस्य का गतिरिति चेत्सत्यम्; तस्या अपि मूलभूतत्वात् सर्वैर्दृश्यमानत्वाच्च प्रमादाख्यो मृत्युः प्रबल इति स एवास्माभिरुक्तः । प्रसिद्धा मृत्युदेवता तु प्रमादाख्यमृत्यौ सत्येव मारयति, तत्रापि न प्रत्यक्षतो मारयतीत्युपेक्षितेति भावेनाह— **न वै मृत्युर्व्याघ्र इवात्ति जन्तू**निति । अनेन व्याघ्रान्मृत इतिवत् मृत्योर्मृत इति लोकप्रवादाभावाच्च सा नोक्तेति सूचयति ॥

इतोऽपि मृत्युदेवता उपेक्षितेत्याह— **यमं त्वेके मृत्युमतोऽन्यमाहु**रिति । एके मृत्योरपि प्रेरकत्वाद्यममेव मृत्युमाहुः । केचित्तु अतः यमात् अन्यं मृत्युदेवतामेव मृत्युमाहुः । एवञ्च परप्रेष्यत्वादपि सा नोक्तेति भावः । तर्हि उक्तैर्नानाविधैर्मृत्युभिरस्पृष्टं वस्तु किमित्यत आह— **आत्मा वासीदमृतं ब्रह्मचर्य**मिति । 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुत्युक्तम्, ब्रह्म वेदः तेन 'चर गतिभक्षणयोः' इति धातोः चर्यं [1]अवगमनयोग्यं नारायणाख्यं वस्तु अमृतं मृतिपदोक्तनानाविधमृत्युरहितम् । प्रलयेऽप्यवशिष्टत्वात् तस्यैवामृतत्वं

---

[1] अवगमनहेतुयोग्यं.

शोभत इति सूचनाय श्रुतिप्रतीकग्रहणम् । युक्तिसिद्धं च तस्यामृतत्वमिति भावेनाह— पितृलोक इति । शिवानां शुभजीवानां शिवः शोभनप्रदाता । अशिवानां अशुभजीवानां अशिवः अमङ्गलदाता । 'रामो यमसभातल' इति वचनात् रामचन्द्ररूपी देवो नारायणः पितृलोकराज्यमनुशास्ति । सर्वमारक-यमपूज्यत्वादपि तस्य न मृत्युरिति भावः ॥

नारायणस्य क्रोधप्रमादमृत्युरहितत्वे युक्त्यन्तरं चाह— अस्यादेशा-दिति । अस्य नारायणस्य आदेशात् आज्ञाशक्तेः । आस्यादेप इति पाठे आस्ये भवमास्यं परुषवचनादिकं तस्मादित्यर्थः । तर्हि मृत्युतरणोपायः क इत्यतः परमात्मनो भक्तियोग एव मृत्युतरणोपायः । स चाविवेकिनां न लभ्य इत्याह— अहंगतेनैव चरन्निति । अहमिति गतं राजसभायां विद्वत्सभायां च गमनं येन सोऽहंगतः अहङ्कार इत्यर्थः । तेन विमार्गानेव विरुद्धमार्गानेव चरन् गुरुदेवताद्यवज्ञामेव कुर्वन्नित्यर्थः । आत्मनः परमात्मनः कञ्चियोगं कर्म-योगज्ञानयोगभक्तियोगेपु एकमपि योगं नोपैति ॥

तर्हि तेपां का गतिरित्यतः संसारचक्रे पौनःपुन्येन भ्रमणमेव गति-रित्याह— ते मोहिता इति । तद्वशे मोहवशे, तत्र यमलोके, प्रेताः पुनरितः अस्मिन् लोके पतन्तीत्यर्थः । तर्हि तत्वाभिमानिदेवाः तस्मिन् कुतो नोपकुर्व-न्तीत्यत आह— ततस्तं देवा इति । देवास्तत्वाभिमानिदेवाः तं परमात्मान-मनुसृत्य तं जीवं ततः मातुर्गर्भपतनानन्तरं परि परितः प्लवन्ते आक्रमन्ति । पादघातेन करताडनेन च अयोग्यजीवं पीडयन्तीति सूचनाय प्लवन्त इत्यु-क्तम् । तत्करेण पापं कारयितुमेवायान्ति, न तु तदुपकारायेति सूचनाया-त्मनेपदं च । ततः देवताप्रवेशानन्तरं मरणात् तस्य मरणमुद्दिश्य ल्यब्लोप-निमित्ता पञ्चमी । मृत्युः अभ्युपैति अभितः उपैति । शिखास्थाने मारिका-मृत्युः प्रमादमोहादयः स्वस्वस्थानेपु विशन्तीत्यर्थः ॥

कर्मोदये कर्मफलानुरागा इत्यत्र कर्मोदये प्रारब्धकर्मपरिपाके सति कर्मफलानुरागाः स्रक्चन्दनवनितादिग्राम्यविपयभोगानुरागाश्च । तत्र अनु-यान्ति । तेन कारणेन मृत्युं न तरन्ति ॥

सदर्थयोगानवगमादित्यत्र सन् उत्तमोऽर्थः सदर्थः परमात्मा तस्य योगानवगमात् भोगयोगेन प्रवर्तते ॥

मिथ्यार्थयोगेऽस्य गतिर्हि नित्येत्यत्र 'मिथ्यैष व्यवसायस्त' इति वचनात् मिथ्यार्थो व्यर्थोऽर्थः । 'पदं मिथ्या कारयते, स्वरादिदोषदुष्टमसकृदुच्चारयति' इति वैयाकरणवचनात् दुष्टोऽर्थो वा मिथ्यार्थः ॥

अभिध्या वै प्रथमं हन्ति चैनमित्यत्र अभिध्या अभितो दुर्विषयचिन्ता ॥

धीरास्तु धैर्येणेत्यत्र धीराः परमात्मचिन्तारताः दुर्विषयाणामवशाश्च ॥

योऽभिध्यायन् प्रत्यभीक्ष्णं निहन्यादित्यत्र निहन्यात् पशून्निहन्यात् । 'प्रेत्य खादन्ति ते च तान्' इति वचनात् स वै मृत्युः पशुमारणाख्यो मृत्युः मृत्युर्भूतानीव एनमत्ति । एवं विद्वान् यः सः इह कामान् निहन्ति ॥

गृध्यन्त एव धावन्तीत्यत्र 'गृधु आकाङ्क्षायाम्' इति धातोः गृध्यन्त एव विषयाभिलाषां कुर्वन्त एव धावन्ति इतस्ततो धावन्ति । तेन तं नरकं गच्छन्ति स्म ॥

अमूढवृत्तेः पुरुषस्येह कुर्यात् किं वै मृत्युस्तार्ण इवास्य व्याघ्र इत्यत्र अस्य अमूढवृत्तेः पुरुषस्य मृत्युः तार्णः तृणमयो व्याघ्र इव अकिञ्चित्कर इत्यर्थः ॥

अमन्यमानः क्षत्रियः कश्चिदन्यं नाधीयीत निर्नुदभि वाऽस्य वायुरित्यत्र यः क्षत्रियः कामादन्यं कञ्चित्पुरुषार्थं अमन्यमानः नाधीयीत वेदाध्ययनादिकं न कुर्वीत । निर्नुत् नितरां नुत्, 'नुद प्रेरणे' इति धातोः रजस्तृणादिकं प्रेरयन् अभिवायुः अभितो विद्यमानो वायुः चक्रवायुरित्यर्थः । अस्य पुरुषस्य वा उपमा । 'वा विकल्पोपमानयोः' इत्यमरः । विषयान्धोऽसौ संसार एव भ्राम्यतीति भावः ॥

विनश्यते विषये तस्य मृत्युरित्यत्र मृत्योर्विषयं प्राप्य मर्त्यः यथा विनश्यते तथा अस्य ज्ञानिनो राज्ञः विषये मृत्युः स्वयमेव विनश्यते ॥

तेषामपार्थान् कथयन्तीह वेदा इत्यत्र वेदाः 'नान्यः पन्था अय-

नाय विद्यते' 'नास्त्यकृतः कृतेन' 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्याद्याः। तेषां लोकान् काम्यकर्मफलीभूतलोकान्। एवं विद्वान् कर्म काम्यकर्म कथमेतीति योजना ॥

एवं विद्वानित्यत्र एवं विद्वान् पूर्वोक्तप्रकारेण काम्यकर्मणां लोका अपार्था इति विद्वान् तत्र निष्कामकर्मस्वेव प्रतियाति। तथा प्रतियातानां वेदाः 'अपाम सोमममृता अभूम' 'कर्मणा ज्ञानमातनोति' इत्याद्या वेदाः अर्थजातं ज्ञानमोक्षादिपुरुषार्थसमूहं च वदन्ति। सः पुनः इह काम्यकर्मसु नायाति। सर्वथा काम्यकर्मसम्बन्धाभावं सूचयितुं विसन्धिकरणम्। परात्मा परमात्मनि चित्तवान् मार्गेण अर्चिरादिमार्गेण परं परमपुरुषमेव प्रयाति। मार्गान्—गमयन्ति स्वर्गम्, पुनर्मारयन्तीति प्रवृत्तिमार्गाः तान्निहन्ति च ॥

कोऽसौ नियुङ्क्ते तमजं पुराणमित्यत्र तं अजं पुराणं परमपुरुषं कोऽसौ नियुङ्क्ते। न कोऽपि। अन्यैरनियतोऽपि स परमात्मा स्वेच्छयैव इदं सर्वं अनुक्रमेत चेत् स्वेच्छया कर्तुमारभेत चेत् अस्य परमात्मनः जगत्करणेन कार्यं प्रयोजनं किम्, अथवा सुखं च किम्, तन्मे ब्रूहीति योजना ॥

इति सनत्सुजातीये द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

अयं महानत्र विभेद योगैरित्यत्र महान् सर्वोत्तमः अवाप्तसकलकाम इत्यर्थः। अयं परमात्मा योगैः लीलाख्योपायैः अत्र जगति विभेद जीवादीन् पञ्चधा भिन्नानकरोत्। एते जीवादयः अनादियोगेन अनादिना स्वहृदि परमात्मनः सन्निधानयोगेन नित्याः स्वरूपतो नित्या भवन्ति। तथा अस्य पुंसः अनादियोगेन अनादिकालीनोपायेन भवन्ति देहयोगेनोत्पद्यन्ते। अत एव तेषां जीवानां मध्ये किञ्चिदपि जीवचैतन्यं आधिक्यं अस्मात् पुंसः आधिक्यम्, आधिक्यमित्युपलक्षणम्। साम्यं च नोपैति ॥

प्रधानचेतनसृष्टिमुक्त्वा जडसृष्टिमाह— यदेतदाहेति। यदेतद्दृश्यमानं जडं जगत् आह 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्' इत्यादिवेदः सत्यतया आह। तद्विश्वं स भगवान् नित्यं अनाद्यनन्त-

कालेषु विकारयोगेन प्रकृतेर्विकाराख्योपायेन करोति, न तु मायया करोति। तथा तस्य परमात्मनः शक्तिश्च तथा यथार्थजगन्निर्मातृतयैव इति मन्ये। अशक्तो हि मिथ्यासृष्टिं करोति, न तु शक्त इति भावः। तथा अर्थयोगे हरेर्विचित्रशक्त्याख्यपदार्थयोगे वेदाः 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिवेदाः भवन्ति प्रमाणं भवन्ति ॥

तस्मिंस्थितो वाऽप्युभयमित्यत्र तस्मिन् परमात्मनि नित्यं स्थितः स्थैर्यवान् भगवन्निष्ठ इत्यर्थः। विद्वानपरोक्षज्ञानी उभयं पुण्यपापाख्यमुभयम्, सिद्धिं वा तस्य फलभूतस्वर्गनरकगमनाख्यकार्यसिद्धिं च, वाशब्दः समुच्चये। निहन्ति 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुतेः। अतोऽन्यथा ज्ञानी न भवति चेत् देही देहाभिमानवान् जीवः पुण्यमुपैति, तथा आगतं पापं चोपैति, तयोः सिद्धिं फलं चोपैति ॥

स्थित्वोभयं कर्मणीत्यत्र सः अविद्वान् एवंविधे कर्मणि स्थिरं यथा भवति तथा स्थित्वा शुभस्य पापस्य च कर्मणः उभयं फलं भोज्यते देवदूतैर्यमदूतैश्च बलात् भोज्यते। इह लोके विद्वान् कर्मकौशलं जानन् धर्मेण अत्युत्कटधर्मेण पापं प्रणुदति इति योजना ॥

येषां धर्मेषु विस्पर्धेत्यत्र धर्मेषु प्रवृत्तिधर्मेषु विशेषेण स्पर्धा विस्पर्धा तत्कृतपुण्यादपि मया अधिकं पुण्यं कर्तव्यमिति स्पर्धेत्यर्थः ॥

येषां धर्मे न च स्पर्धेत्यत्र येषां ज्ञानिनां धर्मे प्रवृत्तिधर्मे स्पर्धा न च। किन्तु तमपि धर्मं फलाशां विहाय विष्णुप्रीत्यर्थमेव कुर्वन्ति। तेषां तद्धर्माचरणं ज्ञानसाधनम्। इतः प्रवृत्तिकर्मफलात् स्वर्गात् मुक्तास्ते ब्राह्मणाः त्रिविष्टपं त्रयः विष्टपाः वैकुण्ठादिलोकाः यस्मिन् तं स्वर्गं मोक्षं यान्ति ॥

नैनं मन्येत भूयिष्ठमित्यत्र आभ्यन्तरं स्थितिमात्रेण जनान्तर्विद्यमानं बाह्यं चारित्रेण लोकबाह्यं एनं ज्ञानिनं जनः भूयिष्ठं उत्तमं न मन्येत। भूयिष्ठं बहुशो न मन्येतेति वा। विद्वांस्तु यत्र ज्ञानिनि दृष्टे सति तं प्रावृषि तृणोदकमिव तृणान्तर्निलीनोदकमिव भूयिष्ठं उत्तमं मन्येत ॥

अन्नं पानं ब्राह्मणस्य तज्जीवन्नानुसंज्वरेदित्यत्र यस्मात् अन्नं पानं च ब्राह्मणस्य भाग:, तत्तस्माज्जीवनार्थी ज्ञानी अनु अन्नादिकमनुसृत्य न संज्वरेत् क्लेशं न कुर्यात्। यत्र ज्ञानिनि अकथयमानस्य आह्वानमकुर्वतः पुंसः अशिवं पापं कर्तृ भयं नरकभयं प्रयच्छति ॥

अतिरिक्तमित्यत्र यः आत्मानं अकथयमानस्य नानुसंज्वरेत्. किन्तु अतिरिक्तमिव कोपाद्यतिरेकवन्तमिव आत्मानमकुर्वन् तिष्ठति, सः श्रेयान्, नेतरजनः ॥

नित्यमज्ञातचर्या म इत्यत्र मे नित्यं अज्ञातचर्या कैरप्यज्ञाततया चर्या सञ्चरणं अस्तु इति ब्राह्मणः मन्येत ॥

को ह्यल्पतरमात्मानमित्यत्र अल्पात् प्रयत्नात् तरति संसारमित्यल्पतरः॥

स्ववीर्यस्योपभोजनादित्यत्र स्वं द्रव्यं तद्वीर्यस्य तत्सामर्थ्यलब्धान्नपानादेरुपभोजनात् एवं ते वान्तमश्नन्ति । सर्वं न्यस्तमिति संन्याससमये त्यक्तं द्रव्यं पुनः सङ्गृह्य तेनोपभोजनं कुर्वन् यतिर्वान्तभुगिति भावः ॥

सर्वान् स्विष्टकृतो देवानित्यत्र इह लोके यः कश्चन पुरुषो वर्तते सः सर्वान् देवान् स्विष्टकृतः सुष्ठु स्वस्य अभीष्टं कुर्वन्तीति स्विष्टकृतः तान् विद्यात्॥

न समान इत्यत्र ब्राह्मणः समानः मानेन अहं करोमीत्यभिमानेन सहितो न स्यात् । यस्मिन्नभिमाने सति स्वयमेव प्रयतते, स्वोदरपूरणार्थं गृहे गृहे गच्छतीत्यर्थः ॥

न मान्यमानो मन्येतेत्यत्र यं अप्रयतमानं मानयन्ति सः मान्यमानः नाभिमन्येत अहङ्कारं न कुर्यात् ॥

लोकस्वभाव एषो हीत्यत्र 'इषु इच्छायाम्' इति धातोः भावे पचाद्यचि कृते गुणे च कृते एषः इच्छा वित्तादेरीषणमित्यर्थः । इह लोके मानितः पुरुषः 'परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्त' इत्यादिनीतिं विद्वांस एव मां मानयन्ति, न तु मयि गुणोऽस्तीति मन्येत ॥

अधर्मविदुप इत्यत्र धर्मविदुषो न भवन्तीत्यधर्मविदुषः ॥

न वै मानं च मौनं चेत्यत्र मानं अभिमानः मौनं तूष्णीम्भावश्च इत्येतौ धर्मौ सहितौ सन्तौ न वसतो वै। अतः मानवता अवमाने कृते सति मौनं कर्तुं न शक्यमिति भावः। तर्हि मानः कस्य मौनं च कस्येत्यत उक्तम्—अयं हि लोक इति। अयं हि लोकः मानस्य स्थानम्। असौ मोक्षाख्यो लोकः मौनस्य स्थानम्। मोक्षार्थिनो मौनमेव प्रियम्, संसारिणां तु मानो न मुञ्चतीति भावः ॥

श्रीर्हि मानार्थसञ्ज्ञातेत्यत्र श्रीः सम्पत् मानार्थसञ्ज्ञाता अहङ्कारजननाय निर्मिता ॥ अध्यायः ४३ ॥

मानेन विद्वानित्यत्र मानेन वेदाख्यप्रमाणेन ॥

यतो न वेदा मनसैव हीनमित्यत्र यतः कारणात् वेदा एव मनसा ज्ञानेन सह हीनमेनं मनुष्यं नानुप्रविशन्ति अनुकूलतया न विशन्ति। ततः कारणात् मौनं च नास्ति। वेदं पठित्वाऽपि ज्ञानाभावात् तत्र तत्र कलहं करोतीति भावः ॥

यत्रोत्थितो वेदशब्दश्चेत्यत्र यत्र यस्मिन् पुरुषे वेदशब्दः वेदेन शब्द्यत इति वेदशब्दो नारायणः उत्थितः उत्कर्षेण मनसि स्थितः ध्यानपदवीं गत इत्यर्थः। स पुरुषः तन्मयत्वेन भगवत्प्रधानत्वेन कारणेन विभाति मौनादिगुणविशिष्टो भाति इति योजना ॥

अथ कस्मात्प्रलापोऽयमित्यत्र प्रलापः अनर्थकवेदपाठः कस्मात् ॥

तस्यैव नामादीत्यत्र तस्य परमात्मनः नामादिविशेषरूपैः नामवाक्यादिविशेषरूपैः वेदवाक्यैः इदं जगदपि भाति भगवतः समाकृष्य जगदपि सन्तो वेदैर्व्यवहरन्तीति भावः। निर्दिश्य भगवन्तं सम्यङ्निर्दिश्य जगद्रूपे प्रवदन्ति। तस्मात् मुख्यतः सकलवेदप्रतिपाद्यत्वात् विश्वसाद्रूप्यं भगवत उदाहरन्ति। तदर्थं भगवत्प्रीत्यर्थं एतत्तपः उक्तम्, इज्या च उक्ता। ताभ्यां भगवद्विषयकतपोयज्ञाभ्याम्। केवलं वेदपाठेन पापं न गच्छति। वेदोक्तकर्मानुष्ठानजनितपुण्यात्पापं नश्यतीति समुदायार्थः ॥

ब्राह्मणानां तपस्सर्धमित्यत्र ब्राह्मणानां तपसि यदर्धं अन्येषां क्षत्रियाणां तत्तपः तावदेव सम्पूर्णम् । शिलोञ्छवृत्त्यादिना परपीडाभावात् केवलपुण्यजनकमेतद्ब्राह्मणानां तपः क्षत्रियादितपसोऽपि अत्यर्थं समृद्धं भवति ॥

लोभमोहौ विवित्सेत्यत्र 'विद्ऌ लाभे' इति धातोः विवित्सा धनं लब्धुमिच्छा । अकृपा इति पदच्छेदः । अकृपा कृपाभावः ॥

एकैकमेतदित्यत्र एकैकं यथा भवति तथा एषां क्रोधादीनां अन्तरं अवकाशं लप्स्यमानः पुरुषः मृगाणां लुब्धक इव हिंस्रः स्यात् ॥

विकत्थन इत्यत्र मनस्स्वी मनसि स्वं वित्तं वर्तत इति मनस्स्वी वित्ताकाङ्क्षीत्यर्थः । मानवानहङ्कारी वा ॥

नैव धर्मं सुधर्ममित्यत्र धर्मं प्रवृत्तिधर्मम् । सुधर्मं निवृत्तिधर्मम् ॥

यस्त्वेभ्यः प्रवसेदित्यत्र एभ्यः गुणेभ्यः प्रवसेत् । तादर्थ्ये चतुर्थी । एतद्गुणलाभाय प्रवसेत् । स्वगृहं विहाय गुरुकुले निवसेत् ॥

त्रिभिर्द्वाभ्यामेकतो वाऽविशिष्ट इत्यत्र उक्तगुणानां मध्ये त्रिभिर्गुणैर्द्वाभ्यां गुणाभ्यां एकतो वा यः अविशिष्टः सः संतरस्वी संसारतरणवान् न स्यादिति वेदितव्यः ॥

दमोऽष्टादशदोषः स्यादित्यत्र अष्टादश दोषा यस्येति समासः ॥

विपर्ययान्न् स्मृता एते इत्यत्र स्मृताः पूर्वश्लोकेन स्मारिताः एते प्रागुक्ता दमदोषा एव विपर्ययात् [illegible] विपरीतकरणात् शमदोषा उदाहृताः ॥

त्यक्त्वैव विप्रियमित्यत्र विप्रियं कामं त्यक्त्वैव बाल्य एव त्यक्त्वा भूयः कामतः नोपयुङ्क्ते फलं नोपयङ्क्ते । अप्रिये कामे समुत्पत्य सङ्कल्पतित्वा ॥

अप्रमादी भवेदित्यत्र एतैः उक्तैः लोभमोहकामत्यागैः, एतैः एतत्पङ्क्तिप[illegible]कपायैः [illegible] गैश्चेति षड्भिस्त्यागैः । न चापि अप्रमादोऽपि ॥

सत्यं न्यूनमित्यत्र 'हीनन्यूनावूनगर्ह्यौ' इत्यभिधानात् न्यूनं ऊनशब्दवाच्यगर्ह्यकर्मणो निवृत्तिर्न्यूनम् । चोद्यं कर्मसंशये प्राप्ते गुरून् प्रति विचारणा । स चापि दोषत्यागोऽपि । तानष्टविधान् दोषत्यागगुणान्, सत्यमुखान् प्रागुक्तसत्यादीनष्टगुणान् ॥

निवर्तन्नेव दोषेणेत्यत्र दोषेण दोषात् ॥

अतीतानागतेभ्यश्चेत्यत्र अतीतानि नष्टद्रव्यमुद्दिश्य क्रियमाणदुःखानि, अनागतानि अनागतद्रव्यलाभाय क्रियमाणदुःखानि तेभ्यः ॥

आख्यानं इतिहासपुराणः पञ्चमः पञ्चत्वसङ्ख्यापूरको येषां ते तथोक्ताः ॥

अनृचश्च तथा पर इत्यत्र अनृचः न विद्यन्ते ऋचः वेदा येषां ते अनृचः वेदश्रवणादिकं परित्यज्य ध्यानं गता इत्यर्थः । ब्राह्मणं विप्रम् ॥

एकवेदस्य चाज्ञानादित्यत्र अज्ञानात् ज्ञानशक्त्यभावात् ॥

सत्यस्यैकस्य राजेन्द्रेत्यत्र एकस्यार्थक्रियाकारितया ब्रह्मणा सह एकाकारस्य सत्यस्य पारमार्थिकसत्यस्य जगतः अज्ञानात् बहूनि सत्यानि पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन त्रीणि सत्यानि केचिदाहुः । कश्चित् 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः' इत्यभिधानात् कः वायुरूपः चित् चेतयति सर्वमिति चित् ज्ञानी सत्ये एकस्मिन्नेव सत्ये अवस्थितः । तथा सत्ये सता जगता ईयत इति ये प्राप्ये नारायणे चावस्थितः । तत्तस्मात्कारणात् एनं प्रपञ्चं सत्यं यो वेद, स वायुदेवः प्राज्ञः प्रज्ञासम्बन्धित्वात् पूर्णप्रज्ञाख्यनामवान् भवति । यद्वा एकस्य ब्रह्मणि जगति चैकाकारतया स्थितस्य सत्यस्य भावप्रधानो निर्देशः । पारमार्थिकसत्यत्वस्य अज्ञानात् सत्ये उक्तविधया अनेकस्मिन् सत्यत्वे कश्चिद्वादी अवस्थितः । तस्मात्कारणात् एनं प्रपञ्चं सत्यं पारमार्थिकसत्यं यो वेद स प्राज्ञो भवतीति योजना ॥

लोभात् स्वर्गाख्यफललोभात् ॥

सत्यात्प्रच्यवमानानामित्यत्र सत्यात् परब्रह्मणः ॥

ततः कर्म प्रभासेतेत्यत्र ततः कारणात् सत्यस्य परमात्मनः अनवधारणात् कर्मैव प्रभासेत प्रकृष्टतया अज्ञानां मनसि भासेत ॥

छन्दांसीत्यत्र हे द्विपदां वरिष्ठ स्वच्छन्दयोगेन स्वेच्छानुसारतः पठनेन नाम इन्द्राग्न्यादीनां नामैव भवन्ति । तन्मुख्यार्थं गुरुमुखाच्छ्रवणाभावे कोऽपि न जानातीति भावः । तेन अभ्यासेन तान् वेदान्, वेद्यं वेदस्य मुख्यप्रतिपाद्यं न गताः नावगतवन्तः॥

छन्दांसि नाम द्विपदां वरिष्ठेत्यत्र हे द्विपदां वरिष्ठ 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः' इति वचनात् वस्तुगत्या छन्दांसि नाम भगवन्नामैव । एषोऽर्थ. पुरस्तात् स्वर्गे देवैः ऋषिभिश्च निर्णीतः ॥

छन्दोविदस्तेनेत्यत्र छन्दोविदः केवलच्छन्दोविदः ॥

वेदेन वेद्यं न विदुर्न वेदमित्यत्र ये वेदेन वेद्यं न विदुः ते वेदमपि न विदुः । यः वेदं केवलवेदं वेद ॥

यो वेद वेदानित्यत्र वेदान् केवलवेदान् वेद, स च वेदवेद्यं तं नारायणं न वेद । वेदविदोऽपि न विदुः । वेदाः शुष्कवेदा अपि न विदुः न वेदयन्ति । ये ब्राह्मणाः ब्रह्म मीमांसोदितपरंब्रह्म अणन्ति पठन्ति ते वेदविदोऽपि भवन्ति । वेदेन वेद्यं च विदन्ति ॥

धर्मांशभाजोऽस्येत्यत्र महीरुहस्य च शाखा च यथा, तथा वेदाः परमात्मनः अर्थे परमात्मप्रीत्यर्थमिति यावत् । अस्य परमात्मनः धर्मांशभाजोऽपि भवन्ति । एवं धर्मप्रतिपादनवत् तस्मिन्नेव नित्ये वेदभागे अस्य परमात्मनः संवेदने च सं सम्यक्पदसमन्वयेन वाक्यसमन्वयेन ज्ञापने च आमनन्ति तात्पर्यमामनन्ति । अन्यथा प्रलये कर्मणामभावेन नैरर्थक्यप्रसङ्ग इति सूचनाय नित्य इत्युक्तम् । अत एव 'कचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगम' इति श्रुतिगीता । अजया महालक्ष्म्या आत्मना स्वेन च कचित्सृष्टिकाले कृष्ण-

[1]अवगच्छन्ति.

रामादिरूपेणावतीर्य अनुचरतः स्वानुकूल्येन यज्ञादिकमाचरतस्तव प्रीत्यर्थं निगमोऽपि अनुचरेत् अनु त्वच्चेष्टामनुसृत्य चरेत्, विधिनिषेधरूपेणापि संचरेत् । अन्यदा त्वामेव वदेदिति हि तस्यार्थः ॥

तस्य पर्येषणमित्यत्र प्रत्यर्थिषु प्रतिवाक्यं एवमर्थो येषु तेषु ज्ञानिषु कथञ्चन गुरुशुश्रूषया विद्यया धनेन वा तस्य परमात्मनः पर्येषणं श्रवणमननध्यानरूपविचारं गच्छेत् ॥

तूष्णीम्भूत उपासीतेत्यत्र अन्तरात्मनि अन्तः आत्मा परमात्मा यस्य सः अपरोक्षज्ञानी योगीश्वरः तस्मिन्नभ्यागते सति अस्य हरेः श्रुतं वेदप्रतिपादितमहिमानं बुद्ध्वा तन्मुखाच्छ्रवणेन ज्ञात्वा अन्यदा तूष्णीम्भूत उपासीत । असौ अपरोक्षज्ञानाय ब्रह्म वेदं बहु यथा भवति तथा अभ्यावर्तेत । 'आवृत्तिरसकृदुपदेशात्' इति हि सूत्रम् । अनन्तरं पश्चात् अनन्तरं केवलमन्तर एव न भवतीत्यनन्तरो व्याप्तः परमात्मा तं आप्नुयात् अपरोक्षतो जानीयात् । वैकुण्ठादिलोकगतं तमेव प्राप्नुयाच्च ॥

तन्मूलतो व्याकरणमित्यत्र तत् परंब्रह्म तथा यथा[1]ऽस्ति तथा व्याकरोतीति हेतोः तत् वेदात्मकं ब्रह्म मूलतः मूलमारभ्य व्याकरणं वदन्ति ॥

सत्ये परमात्मनि ॥ अध्यायः ४५ ॥

परां अन्याम् । कुमारः कुत्सितः मारो यस्मात्स कुमारः, ब्रह्मणः कुमारो वा ॥

अभिपङ्गेण स्नेहेन । अहिंसा च ब्रह्मचर्यं च अहिंसाब्रह्मचर्यं तेन ॥

आद्यां विद्यां वदसीत्यत्र वदसि वदेति वदसि ॥

य आस्तृणोतीत्यत्र आस्तृणोति ज्ञानं विस्तारयति । अमृतं नित्यं वेदम् ॥

यन्माद्यत इत्यत्र तं गुरुं प्रति 'मदी हर्षे' इति धातोः सन्तोषं करोति ॥

एवं च सङ्गतमित्यत्र यद्धनमुपप्लवेत् उपपन्नतया प्राप्नोति । आचर्यया आ सम्यक् चर्यया गुरुपरिचर्यया । प्राज्ञः एतत् अहं करोमीति न मन्येतेत्यन्वयः ॥

[1] यथा यथाऽवस्थितं.

गुरुयोगतः गुरुप्रसादाख्योपायतः ॥

शास्त्रेण पादं चेत्यत्र शास्त्रेण स्वशिष्यं प्रति व्याख्यानरूपशासनेन ॥

ज्ञानादयो द्वादशेत्यत्र बलं देवताबलं स्वयुक्तिबलं वा ॥

ब्रह्मार्थयोगेनेत्यत्र ब्रह्मार्थयोगेन [1]परब्रह्मार्थज्ञानेन ॥

गन्धर्वाः अप्सरसश्च एतेन ब्रह्मचर्येण रूपं 'जि प्राप्तौ' इति धातोः अजयन् प्राप्नुवन् ॥

अन्तवन्तः क्षत्रियास्ते जयन्तीत्यत्र अन्तवन्तः निश्चयवन्तः ॥

यद्ब्राह्मणः पश्यति तद्धि विद्वानित्यत्र विद्वान् ब्राह्मणः शुक्लादिषु यद्यद्रूपं पश्यति तद्रूपं कथमिति सम्बन्धः ॥

अप्राकृतत्वेन अनन्तसूर्यप्रतिमत्वेन च पृथिव्यादिरूपतो विलक्षणत्वात् स्वतन्त्रतया अन्याधारानपेक्षत्वाच्च न तत्पृथिव्यां तिष्ठतीत्याद्युक्तम् ॥

तदन्तकोऽन्वेति विनाशकाल इत्यत्र अन्तकः अन्ते पृथिव्यादितत्वानामवसाने विद्यमानः कः महत्तत्वाभिमानी ब्रह्मा ॥

वायोर्विकारात्कवयो वदन्तीत्यत्र वायोः विकारः विविधाकारः शास्त्रम् ॥

तदेतदह्ना संस्थितमित्यत्र अह्ना दिवसेन निमित्तेन ॥ अध्यायः ४६ ॥

अभ्यर्थितश्चार्हते शुद्धभाव इत्यत्र सौहार्दाद्दारदानेऽपि सा न नाशनीयेति सूचयितुं शुद्धभाव इत्युक्तम् ॥

एतत्समृद्धमित्यत्र समृद्धमप्येतद्द्रव्यं ततस्त्यागादेव ऋद्धं अभिवृद्धं भवति । नो चेन्नष्टप्रायमिति भावः ॥

मनसाऽन्यस्य भवतीत्यत्र खलः मनसा अन्यस्य व्यापारस्य भवति । वाचा पुनरन्यस्य भवति । कर्मणा च ततोऽन्यस्य भवति । एवञ्च असङ्कल्पः मनोवाक्कर्मभिः समीचीनैकपक्षरहितः दुरात्मा सङ्कल्पसिद्धं पुरुषं अधितिष्ठति

---

[1] परब्रह्माख्यार्थज्ञानेन.

अधिकतया तिष्ठति । ततोऽप्यहमेव कुशल इति मन्यत इति भावः ॥

वाचो विकारं कवयो वदन्तीत्यत्र 'एकमेकं सुशस्तिभिः' 'तयोर्जुष्टिं मातरिश्वा जगाम' 'त्रिपादूर्ध्वं उदैत्पुरुषः' 'चतुर्भिस्साकं नवतिं च' 'विश्वतश्चक्षुः' इत्यादिवेदवाचः विकारं प्रतिपादनयोग्यविविधाकारयुक्तं कवयः वदन्ति ॥ अध्यायः ४७ ॥

यत्तच्छुक्लं महज्ज्योतिरित्यत्र शुक्लं शुभ्रं सूर्यमण्डलं महज्ज्योतिः ज्योतिःश्रेष्ठं महद्यशः महाकीर्तिसम्पन्नम् ॥

पूर्णात्पूर्णमुद्धरन्तीत्यत्र पूर्णाद्धरेर्मूलरूपात् पूर्णमवताररूपम् ॥

आपोऽथाद्भ्यः सलिलस्य मध्य इत्यत्र अथ अद्भ्यः बाह्यावरणोदकेभ्यः आपः ब्रह्माण्डान्तस्स्थितगर्भोदकानि । तस्य सलिलस्य मध्ये अन्तरिक्षे जलान्तस्स्थिताकाशे उभे देव्यौ श्रीभूदेव्यौ शिश्रियाते । सध्रीचीः समीचीनाः विषूचीः विष्वग्वर्तमाना अपः वसानः वस्त्रवत्परितो बिभ्राणः स परमात्मा ॥

चक्रेणा(विश्य)वर्त्य तिष्ठन्तमित्यत्र अव्ययकर्मणः ध्रुवस्य ध्रुवमण्डलस्य सम्बन्धिना चक्रेण ज्योतिश्चक्रेणावर्त्य ग्रहनक्षत्रादीन् परितो भ्रामयित्वा तिष्ठन्तं केतुमन्तं ध्वजसहितं तं सूर्यरथनियामकं परमात्मानं अश्वाः सप्ताश्वाः वहन्ति ॥

न सन्दृशे तिष्ठति रूपमस्येत्यत्र अस्य परमात्मनः रूपं ज्योतिश्चक्रसूर्यमण्डलरथादिनियामकतया तिष्ठति । न सन्दृशे सम्यङ्न दृदृशे ॥

द्वादशधा दशधेत्यत्र तस्य परमात्मनः मन्दिष्टाः अतिशयेन सन्तोषकराः सरितः गङ्गायमुनाद्या नद्यः ईशते [1]पापनिर्हरणाय समर्था भवन्ति । या नद्यः इह लोके अरं सम्यक् सञ्चरन्ति ॥

तदर्प्यमाणमपिबन्नित्यत्र तेन परमात्मना अर्प्यमाणं सञ्चितं स्वस्वकर्मणा आर्जितं मधु 'मदी हर्षे' इति धातोः 'तृतीयोऽनिशय' इति वचनाच्च आनन्दकरत्वान्मधुस्थानीयं सूर्यमण्डलं अमराः आदित्या रुद्रा वसवो मरुतश्चेति चतुर्धा विभक्ताः अमरोपमा देवाः अपिबन् ॥

---

[1] पापनिर्हरणसमर्था.

ईशानः सर्वभूतेष्वित्यत्र हविर्भूतं प्राणाग्निहोत्रे हविर्भूतमन्नं अकल्पयत्॥

हिरण्यवर्णमश्वत्थमित्यत्र सपक्षकाः पक्षसहिताः ते मुक्ताः पक्षिणः अश्वत्थं श्वेतद्वीपगतममृतस्रवणमश्वत्थं अभिप(द्य)त्य अभितो गत्वा यथासुखं प्रभवन्ति प्रकृष्टा भवन्ति ॥

अपानं गिरति प्राण इत्यत्र संहारक्रमः कथ्यते । अत्र प्राणः अवान्तरो वायुः । परः परमात्मा ॥

एकं पादं समुत्क्षिपतीत्यत्र सलिलार्धं सलिलं गर्भोदकं अर्धं यथा भवति तथा कृत्वा उच्चरन् ऊर्ध्वं चरन् स नारायणः एकं पादं 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः विश्वव्यापकं विश्वरूपाख्यं रूपं समुत्क्षिपति ऊर्ध्वाण्डखर्परपर्यन्तं सम्यगूर्ध्वं क्षिपति ॥

न मृत्युर्नामृतमित्यत्र आ समन्तात् मृतं मरणं यस्मात्तदामृतं संसारः न॥

लिङ्गस्य योगेनेत्यत्र लिङ्गस्य लिङ्गदेहस्य ॥

गूहन्ति सर्पा इवेत्यत्र मर्त्याः वृत्तेन श्रवणादीनामावर्तनेन यं परमात्मानं क्षयं हृदयगुहाख्यमन्दिरं नीत्वा गूहयन्ति आच्छादयन्ति । गह्वरेषु गुहासु सर्पाः मण्डलीभूय शयानाः सर्पाः इव स्वशिरोरत्नमिव ते ज्ञानिनः, तैः ज्ञानिभिः दत्तं उपदिष्टं हरिं भवाय शोभनाय गूहयन्ति ॥

असाधना वाऽपीत्यत्र असाधनाः मोक्षसाधनरहिता वा ससाधनाः मोक्षसाधनसहिता वा ये मानुषास्तिष्ठन्ति तेषु मानुषेषु तद्धृदय इत्यर्थः । एतद्ब्रह्म समानं दृश्यते योगिभिर्दृश्यते । उत्तरस्य अमृतस्य मोक्षस्य एतद्ब्रह्म समानं तद्योग्यतया समानं योग्याय दिशति । अयोग्याय न दिशतीत्यर्थः। तदेव विशदयति— तत्र योग्यायोग्यजीवेषु युक्ताः योगयुक्ताः मध्वनुत्तं 'नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समा' इत्यमरः । मध्वरूपेण वायुना प्रेरितं ब्रह्म समापुरिति योजना ॥

उभौ लोकौ विद्यया व्याप्य यान्तीत्यत्र मा(ने)त्रे [1]पंचतन्मात्रके

[1] पंचतन्मात्रात्मके.

देहे ब्राह्मीं वेदसम्बन्धिनीं वेदप्रतिपादितामिति यावत् । लघुतां असारतां आदधानाः कुर्वन्तः अनुहुतं अनु ज्ञानानुकूलतया हुतं पूर्वैर्हुतं अग्निहोत्रं च हुत्वा धीराः अस्य प्रज्ञां लभन्ते नाम । ततः विद्यया उभौ लोकौ व्याप्य यान्ति इमं परमात्मानं यान्ति ॥

पावकं पुरुषोऽङ्गिरा इत्यत्र अङ्गिनि अङ्गदेवतासहिते हरौ रमत इत्यङ्गिराः ज्ञानी ऋषिर्वा ॥

सदाऽध्वसात्कृतोऽस्यान्नमित्यत्र सतः सज्जनस्य असतः दुर्जनस्य च योनिं पोषकतया कारणं एकं मुख्यं अन्नं अन्नस्थं अन्ननामकं परमात्मानं सदा अध्वसात् मोक्षमार्गतया कृतः कुर्वतः अल्पाहारं कुर्वत इति यावत् । अमृतं तदेवामृतप्रायं कुर्वतः अल्पाहारेऽपि चिन्तामकुर्वत इति यावत् । सत्यसमानुबन्धिनी सत्यस्यैव समाने सत्यानृते 'सत्यमोमिति सम्प्रोक्तं यन्नेत्याहानृतं हि तत्' इति वचनात् सत्यं सति वित्ते द्रव्यदानादौ ओमित्यङ्गीकारवचनम्, अनृतं धनाभावे नेति वचनं च कृतः कुर्वतः अस्य ज्ञानिनः मृत्युर्न इति योजना ॥

यः सहस्रं सहस्राणामित्यत्र सहस्राणां मासानां व्रजान् सहस्रं पक्षांश्च यः सम्यक् पतेत्, शतादुपरि विंशतिवर्षपर्यन्तं जीवेदित्यर्थः । कारणस्य सर्वोत्पत्तिमन्निमित्तकारणस्य कालस्य ॥

योगिनस्तं प्रपश्यन्तीत्यत्र तं तादृशकालनियामकं योगिनः प्रपश्यन्तीति योजना ॥

यथोदपाने महतीत्यत्र सर्वतस्संप्लुतोदके महति समुद्रे यथा तृषितस्य उदपाने उदकपानमात्रे कृत्यम् ॥

अहमेवास्मि ते मातेत्यादिकं यज्जीवं प्रति परमात्मनो वचनम्, सनत्सुजातस्तु तदनुवादकः । आत्मा अन्तर्यामी । 'असङ्गो ह्ययं पुरुष' इति श्रुत्यर्थसूचनाय मे यूयं न, वः अहं च नासीत्युक्तम् ॥

आत्मैव स्थानमित्यत्र मम आत्मा देह एव स्थीयते अत्रेति व्युत्पत्त्या स्थानम् । मम आत्मैव जायते अस्मादिति जन्म ॥

पुष्करे हृदयकमले निहितं सन्निहितं विदुः ॥ अध्यायः ४८ ॥

॥ सनत्सुजातीयं समाप्तम् ॥

---

राजानः सर्वपार्थिवा इत्यत्र सर्वपार्थिवाः सर्वपृथिवीसम्बन्धिनः ॥

प्राप्तोऽस्मि मां विजानीतेत्यत्र प्राप्तोऽस्मीति विजानीतेति सम्बन्धः ॥

अध्यायः ४९ ॥

आगुल्फेभ्योऽपि संवीत इत्यत्र संवीतः वस्त्रेणाच्छन्नः । शुद्धान्तः 'शुद्धान्तश्चावरोधश्च' इत्यभिधानात् अन्तःपुरम् ॥

अर्जुनस्य च कृष्णाया इत्यत्र मञ्चसमीपे अधस्तात्कनकमयपीठे स्थितायाः कृष्णाया इत्यर्थः ॥

काञ्चनं पादपीठं तु इत्यत्र पादपीठं सञ्जयं दृष्ट्वा द्रौपद्युत्थानानन्तरं मञ्चादधस्तालम्बमानयोः अर्जुनपादयोः आधारभूतं पीठम् ॥

निर्देशगाविमावित्यत्र निर्देशः शासनम् ॥

धनुर्धरोचितेनेत्यत्र धनुषः धरो धारणं तस्य उचितेन ॥

बहिश्चरस्य प्राणस्येत्यत्र बहिश्चरस्य प्राणस्य बहिश्चरप्राणसमार्जुनस्य ॥

छन्दतः कुरुवृद्धस्येत्यत्र छन्दतः इच्छानुसारेण, कुरुवृद्धस्य भीष्मस्य ॥

राजा हि त्वरत इत्यत्र राजा धर्मराजः ॥ अध्यायः ५० ॥

उपह्वरे वासुदेवस्येत्यत्र उपह्वरे समीपे ॥

अनिर्विष्टं पापकं धार्तराष्ट्रैरित्यत्र 'निर्वेश उपभोगः स्यात्' इत्यमरः । अनिर्विष्टं अभुक्तफलम् ॥

योऽवध्यानान्निर्दहेद्द्यां दिवमित्यत्र अवध्यानात् कोपेनावज्ञानात् ॥

मा तत्कार्षीः पाण्डवस्यार्थहेतोरपैहीत्यत्र तत्तस्मात्कारणात् यदि त्वं मन्यसे तर्हि पाण्डवस्यार्थहेतोः तन्निमित्तं युद्धं मा कार्षीः । अपैहि युद्धादपगतो भव ॥

मायापदं प्रणिधानार्जवाभ्यामित्यत्र मायापदं दुर्योधनमायया कृतामापदं तितिक्षमाण इति सम्बन्धः । प्रणिधानं चित्तसमाधानम् ॥

एवं दग्धा धार्तराष्ट्रस्य सेनामित्यत्र दग्धा दाहं कर्ता । 'दह भस्मीकरण' इति धातोर्लुडन्तस्येदं रूपम् ॥

यदा रथाग्र्यान् रथिनः प्रवेप्ता इत्यत्र प्रवेप्ता प्रवेपयिता ॥

आशीविषः क्रुद्ध इवाचरेद्यदेत्यत्र आचरेत् आ समन्ताद्रणरङ्गे चरेत् ॥

ब्रूयाच्च मामित्यत्र मां प्रवृणीष्वेति यो ब्रूयात् तमित्युत्तरेण सम्बन्धः ॥

स च स्रष्टेत्यत्र सोऽहमर्जुनः यदा स्रष्टा, नागान् हयान् रथिनश्च आददानः अयं दुर्योधनश्च यदा द्रष्टेति सम्बन्धः ॥

यदा मन्द इत्यत्र महेषुभिः स्वसेनास्थरथिभिः विमुक्तान् प्रतीपं अर्जुनस्य प्रतिकूलं यथा भवति तथा क्रियमाणान् तिर्यग्विधान् तिर्यक्पतमानपक्षिसदृशान् परबाणान् अर्जुनवैरिभूतस्वसैनिकानां बाणान् क्षुरैश्छिद्यमानान् अर्जुनमुक्तक्षुराग्रशरौघैश्छिद्यमानांश्च यदा द्रष्टेति सम्बन्धः ॥

काल इवागते तु इत्यत्र आगते मरणसमये प्राप्ते सति कालो मृत्युरिव ॥

द्रष्टा युद्धे धार्तराष्ट्रः समेतानित्यत्र यदा द्रष्टा तदा तप्येदित्युत्तरवाक्यमावर्त्य योजनीयम् ॥

रुद्रो वा हरिवान् वज्रहस्त इत्यत्र रुद्रो वा, 'हरिवान् पाकशासन' इत्यभिधानात् वज्रहस्तः इन्द्रो वा ते पुरस्ताद्यातु ॥

सुग्रीवयुक्तेन रथेन वा ते इत्यत्र सुग्रीवयुक्तेन रथेन वा अदृश्य एव वा रक्षतु ॥

निनदन्तं प्रगृह्येत्यत्र निनदन्तं वृषभम् ॥

निर्मोचने षट्सहस्राणि हत्वेत्यत्र निर्मोचने पाशानां ग्रन्थिनिर्मोचने सति ॥

निर्मोचनं चापि जगामेत्यत्र निर्मोचनं पाशानां निर्मोचनं जगाम ॥

क्रमः पादविक्षेपः स्यात् ॥

नित्यं च कृष्णश्चेत्यत्र नित्यं च कृतार्थः कृष्णः ततः देववराच्च कृतार्थोऽभूदिति योजना ॥

न चेदिममपजयं कर्मबन्धमित्यत्र इमं अस्माकमपजयं कर्मबन्धं दुर्द्यूताख्यकर्मणा[1] बन्धो यस्य तं न मन्यते चेत् ॥

अन्यत्र युद्धादित्यत्र युद्धादन्यत्र कुरवो यदि स्युः तर्हि स्युरेव ॥

उच्चावचं दैवयुक्तं रहस्यमित्यत्र दैवप्रज्ञाः दैवात् दैवबलात् प्रकर्षेण जानन्तीति दैवप्रज्ञाः ग्रहचर्या च मुहूर्तश्च येषु ते तथोक्ताः ॥

पूर्वरूपाणि युक्त्येत्यत्र पूर्वरूपाणि पूर्ववद्राज्यार्हरूपाणि भविष्यन्ति ॥

मृगांश्चैव तरक्षवश्चेत्यत्र मार्गयन्तीति मृगाः ॥

पश्यतु मोहमस्येत्यत्र अस्य मोहं भवान् पश्यत्विति सम्बन्धः ॥

अध्यायः ५१ ॥

विद्धि ब्रह्म परन्तपावित्यत्र ब्रह्म परब्रह्म ॥

तथा ह्यर्जुन आहव इत्यत्र तथा जम्भशिरश्छेदनवत् एष नरः अर्जुनः अर्जुनो भूत्वा ॥

तस्मात्कर्मैव कर्तव्यमित्यत्र कर्मैव सन्धिकर्मैव ॥ अध्यायः ५२ ॥

यज्ञमाश्विनशंसिनमिति पाठे यज्ञं पञ्चमहायज्ञं कुर्विति आश्विनं अश्विनोः पुत्रं सहदेवं प्रति शंसिनम् ॥

केनास्मान् पाण्डवा अभ्ययुञ्जतेत्यत्र केन बलेन अस्मान् प्रति पाण्डवाः अभ्ययुञ्जत युद्धाभियोगमकुर्वन् ॥

यो वै रोषादित्यत्र यच्छब्दस्य तेन पाण्डवा अभ्ययुञ्जतेति सम्बन्धः ॥

पृथिव्यां नास्ति कश्चनेत्यत्र सम इति योग्यपदाध्याहारः ॥ अ० ५३ ॥

झषग्रहगृहीतां तामित्यत्र झषग्रहाः मत्स्यग्राहिणो भारसहाः कैवर्ताः तैर्गृहीताम् ॥

---

[1] दुर्द्यूताख्येन कर्मणा.

वाष्पमुत्सृजता मुहुरित्यत्र वाष्पं ऊष्माणम् ॥ अध्यायः ५४ ॥

उभाभ्यां संशयो लोक इत्यत्र उभाभ्यां गताभ्यामपि संशयः जये संशयः स्यात् । लोके विजयार्दनस्तु नास्ति ॥

यतोऽब्रवीन्निशितान् बाणसङ्घानित्यत्र समरे सव्यसाची यदा आसीत् तदा लोकः सृष्टोऽन्तक इत्यादि यतोऽब्रवीत् ततः कारणात् मामकान् धक्ष्यतीति पूर्वेणान्वयः ॥ अध्यायः ५५ ॥

तथैवाभिसरा इत्यत्र अभितः सरन्तीत्यभिसरा भटाः ॥

(वहिष्यति पतङ्गवदित्यत्र पतङ्गवत् ॥) अध्यायः ५६ ॥

ऋते विनिकृतेषु यदित्यत्र ऋते स(भ्य)त्यमृते ॥ अध्यायः ५७ ॥

श्रुत्वा चैतन्मयोक्ता इत्यत्र एतत् पाण्डवसैनिकैरुक्तं वाक्यम् ॥

विरक्तराष्ट्राश्च वयमित्यत्र विरक्तं स्नेहरहितं राष्ट्रं येषां ते तथोक्ताः ॥

विनेष्यामो दर्पमेषां शितैः शरैरिति भीष्मद्रोणादयः आहुः । इत्थं दुर्योधनोऽब्रवीदिति श्लोकत्रयस्य योजना ॥ अध्यायः ५८ ॥

ऋश्यप्रख्या इत्यत्र 'सारङ्ग ऋश्यः पृपतो रुरुश्च' इत्यभिधानात् ऋश्यः सारङ्गः ॥

कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा इत्यत्र 'कल्माषः कृष्णपाण्डर' इत्यभिधानात् कृष्णपाण्डराङ्गाः, 'तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरक' इत्यभिधानात् चित्रनानावर्णः पक्षी तित्तिरिः, लाविगेहकि इत्यपभ्रंशभाषा । तद्वद्वर्णाः ॥ अध्यायः ५९ ॥

मुखमन्धकवृष्णीनामित्यत्र 'मुखं प्रधाने प्रारम्भे वक्त्रे निस्सरणेऽपि च' इत्यमरः । प्रधानम् ॥

संक्रन्दयति सम्यक् क्रन्दयति आक्रोशयति शत्रूनिति संक्रन्दनः ॥

ऐणेयानिव तन्तुनेत्यत्र ऐणेयान् एणशिशून् तन्तुना जालेन ॥

पर्याप्तं सम्पूर्णम् ॥

प्रतिवीराञ्शरद्वत इत्यत्र शरा एषां वर्तन्त इति शरद्वन्तः शरपाणयस्तान् ॥

अध्यायः ६० ॥

ये तु सम्प्रति तिष्ठेयुरित्यत्र परैः पाण्डवैः पीडिताः पीडिता अपि ॥

प्रतीपमेति मे सेनेत्यत्र व्यस्ता विशेषेण अस्ता नाशिता मे सेनेति सम्बन्धः । दीर्घबाहुना पुरुषेण प्रमृष्टा बलाद्गृहीता सीमन्तिनी नारीव प्रतीपं विपरीतमेति ॥

अध्यायः ६१ ॥

तद्वचोगुणदोषत इत्यत्र तस्य सञ्जयस्य वचसि स्थितान् गुणदोषतः पाण्डवेषु गुणान् स्वकीये(षु)षु दोषांश्च संख्यातुमारेभे इत्यर्थः ॥

जातिगृद्ध्याऽभिपन्नाश्चेत्यत्र जातिगृद्ध्या जातेः स्वसाज्जन्मनः देवजातेर्वा गृद्ध्या आकाङ्क्षया अभिपन्नाः प्राप्ता भविष्यन्ति ॥

भीष्मद्रोणकृपादीनां भयादित्यत्र भयात् गुरुत्वभयात् रिरक्षिषन्तः तान् रक्षितुमिच्छन्तः अन्यत्र संरम्भं गमिष्यन्ति ॥

यस्य ध्वजस्य त्विषा कान्त्या ॥

शतानि पञ्च चैवेषूनित्यत्र पञ्च शतानीति सम्बन्धः ॥

यमाह भीष्मो द्रोणश्चेत्यत्र यं अर्जुनं पराजेतुमशक्यमाहेति प्रत्येकं सम्बन्धः ॥

अध्यायः ६३ ॥

अकामद्वेषसंयोगादित्यत्र स्वेषां कामद्वेषसंयोगाभावात्, भावानां मानुषादिलोकानां मोहाल्लोभान्निमित्तात् मानुषकृतमोहादीनामुपेक्षया चेत्यर्थः ॥

अपार्था दुःखमाप्नुयुरित्यत्र अपगतः अर्थो येषां ते देवाः दुःखमाप्नुयुः । स्वधर्मत्यागाद्दुःखमाप्नुयुरिति भावः ॥

तत् देवप्रामाण्यं नैव विक्रमिष्यति शौर्यं न करोत्येव ॥

ममाप्यनुपमं भूय इत्यत्र देवेभ्योऽपि भूयः मत्तेजः मन्त्रसामर्थ्यम् ॥

भयानि विषये राजन्नित्यत्र भयानि भयङ्कराणि ॥

मया रिष्टा इत्यत्र रिष्टाः मन्त्रसामर्थ्येन नाशिताः स्तम्भिता इत्यर्थः ॥

यदभिध्याम्यहं शश्वदित्यत्र अभिध्यामि अभिध्यायामि ॥ अ० ६४ ॥

शुश्रूषया स्वेन च पौरुषेणेत्यत्र पौरुषेण भृत्यपुरुषस्वभावेन ॥

न कर्ण जानासीत्यत्र यथा यथावत् प्रधाने प्रधानपुरुषे त्वयि ॥

शत्रुजनान् शत्रूणां हननाज्जनं जननं येषां तान् लोकान् प्रपत्स्य इति सम्बन्धः ॥

असंशयं वृष्णिपतिर्यथोक्त इत्यत्र वृष्णिपतिः कृष्णः यथा त्वयोक्तं तथा भवति । ततः कृष्णादपि भूयश्च अहं महात्मा ॥ अध्यायः ६५ ॥

ये तु सन्निधिमासाद्येत्यत्र समीचीनो निधिः सन्निधिः ॥

महाप्रपाते विषम इत्यत्र 'प्रपातस्त्वत(टं)टो भृगुः' इति वचनात् प्रपाते पर्वतशृङ्गे ॥ अध्यायः ६६ ॥

एकतो ह्यस्य दाराश्चेत्यत्र अस्य कृष्णस्य ॥

सभ्रातॄनभिजानीहीत्यत्र तव समानः भ्राता पाण्डुर्येषां पिता ते सभ्रातरः तान् सभ्रातॄन् ॥ अध्यायः ६७ ॥

आनयस्व पितरमित्यत्र पिता कृष्णद्वैपायनः ॥ अध्यायः ६८ ॥

कामादन्यत्र सम्भूतावित्यत्र कामादन्यत्र कामं विनेत्यर्थः । पूर्वेषां भावः स्वभावः ॥

जन्मान्तरं समास्थायेत्यत्र मनस्विनः वासुदेवस्य मायया इच्छया तच्चक्रं जगच्चक्रं जन्मान्तरं समास्थाय पुनःपुनरावर्तते ॥

स यद्ध्रुवं पाण्डवेष्वित्यत्र पाण्डवेषु प्रतिराजसु च सारासारबलं ज्ञात्वा स कृष्णः यत् यस्मात्कारणात् ध्रुवं पाण्डवेष्वेवास्ति तत् समासेन शृण्विति योजना ॥

मनसैव विसृष्टात्मेत्यत्र विशेषेण सृष्टा आत्मानः जीवा येन स तथोक्तः ॥ अध्यायः ६९ ॥

रन्धयन् [1]तद्वत् ॥

महांस्तत्र न सज्जत इत्यत्र महान् मृत्युः तत्र भगवद्भक्ते ॥

[1] तद्वत् कुर्वन्.

नियच्छैतां यतस्तत इत्यत्र यतो व्यथते ततः विषयात् नियच्छ ॥

अध्यायः ७० ॥

विपुत्वाद्विष्णुरुच्यत इत्यत्र 'विपॢ व्याप्तौ' इति धातोः वि(ष्णुः)पुः व्यापनशीलः ॥

मौनाद्ध्यानाच्च योगाच्चेत्यत्र 'माङ् मान' इति धातोः मा मितवाणित्वम्, 'ध्यै चिन्तायाम्' इति धातोः धं ध्यानम्, 'वा गतिगन्धनयोः' इति वचनात् वं ज्ञानयोगः अर्शवानर्श इतिवत् तद्वान्माधवः । सर्वसत्वमयत्वात् मधुवत् सर्वसामर्थ्यसारसङ्ग्रहरूपत्वाच्च माधव इति पूर्वेणान्वयः ॥

कृपिर्भूवाचकः शब्द इत्यत्र कृप्यत इति कृपिर्भूः तस्यामपि णं सुखं यस्य स कृष्ण इत्यर्थः ॥

पुण्डरीकं परं धामेत्यत्र पुण्डरीके हृत्पुण्डरीके अक्षः क्षयरहितः, अक्षं क्षयरहितं पुण्डरीकं मुक्तानां हृत्पुण्डरीकं यस्य परं धामेति वा पुण्डरीकाक्ष इत्यर्थः ॥

जनित्रा जनकेन ॥

सत्तासत्ते चेत्यत्र सत् सत्ता, याति नश्यतीति यं असत्ता, तदुभयं यस्मात्स सत्य इत्यर्थः ॥

गोविन्दश्चेतनादभूदित्यत्र चेतनात् ज्ञानात् 'गमॢ गतौ' इति धातोः गां ज्ञानं विन्दतीति गोविन्द इत्यर्थः ॥ अध्यायः ७१ ॥

परासूनामग्रहणीयरूपामित्यत्र 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिता' इत्यभिधानात् परासूनां प्राप्तमरणानां मुमूर्षूणामिति यावत् । तेषामग्रहणीयरूपाम् ॥

वाचः समुद्रं कलशं यतीनामित्यत्र यतीनां वाचः समुद्रं समुद्रमिव स्थितं कलशं कलशमिव च स्थितम् । कैश्चिद्बहुवाचा स्तुत्यं कैश्चिदल्पवाचा स्तुत्यमिति यावत् । अरिष्टनेमिं अरिष्टा अनष्टा नेमिः सुदर्शनचक्रं आज्ञाचक्रं वा यस्य तम् ॥

अध्यायः ७२ ॥

अहमस्मि महाबाहो इत्यत्र अस्मि तव वशे अस्मि ॥

सोऽन्यात्मा विवृतान्तर इत्यत्र सः धृतराष्ट्रः अन्यात्मा अन्यादृशे स्वपुत्रे आत्मा चित्तं यस्य स तथोक्तः ॥

पुरुषश्च हतः स्वतामित्यत्र अर्शवानर्श इतिवत् स्ववान् धनवानेव स्व इत्युच्यते तस्य भावः स्वता तां हन्ति । अस्वतः अधनात् ॥

यदस्मात्पतितादिवेत्यत्र अस्मात् मदादिजनात् पतितात्पुरुषादिव । एतच्च मरणम् ॥

यच्च नैवोद्यतः प्रातर्भोजनं प्रति दृश्यत इत्यत्र उद्यतः सन्नद्धः ॥

तानि शास्त्राण्यधीमहीत्यत्र तानि राष्ट्राणि प्राप्य वेदशास्त्राण्यधीमहीति योजना ॥

भवे जयपराजयावित्यत्र 'भू प्राप्तावात्मनेपदम्' इति वचनात् भवे प्राप्नोमि ॥

व्यपयाने व्ययाव्ययावित्यत्र व्यपयाने पलायने ॥

हत्वाऽप्यनुशय इत्यत्र यस्य परान् हत्वाऽपि नित्यं अनुशयः अनुकूलः शयः आशयो बुद्धिः तत्पुत्रादिषु आनुकूल्यकरणम्, अस्य अनुबन्धप्रलापः तत्काले स्नेहवार्ता शेषः शत्रुशेषश्च अवशिष्यते ॥

न [1]शेषमवशेषयेदित्यत्र [1]शेषं स्वपितृहन्तुः [1]शेषम् ॥

दोषः वैरास्यदोषः निरन्तरः निरवकाशः ॥

तस्य त्यागेन वा शान्तिरित्यत्र त्यागेन देशत्यागेन प्राणत्यागेन कलहकारणीभूतवित्तत्यागेन वा ॥

फलं निवृत्तिरर्थस्येत्यत्र अर्थस्य स्वस्मादपहृतवित्तस्य निवृत्तिः पुनः स्वात्मानं प्रत्यागमनम् ॥

तच्छुनामिव गोपात इत्यत्र गोपाते गोर्मरणे ॥ अध्यायः ७२ ॥

[1] दोषं.

न देवत्वं कुतः सुखमित्यत्र देवत्वं राजत्वं तव रोधेन निरोधेन निर्बन्धकरणेनापीत्यर्थः ॥

अवाच्यास्तु भविष्याम इत्यत्र अवाच्याः अनिन्द्याः ॥ अ० ७४ ॥

न पर्यायोऽस्तीत्यत्र 'अय पय गतौ' इति धातोः 'गत्यर्था ज्ञानार्था' इति वचनात् पर्यायो निश्चयः । तव दुष्करमपराधं कृत्वाऽपि त्वयि नान्वतप्यन्तेति यावत् । तत्र ते तव तत् मार्दवमेव निमित्तमित्यन्वयः ॥

नाध्यमानः प्रहृष्टात्मेत्यत्र नाध्यमानः याच्यमानः भापते यत्किञ्चिद्भापते ॥

ईपत्कारो वधस्तस्येत्यत्र ईपत्कारः तुच्छीकरणम् ॥

प्रस्कन्दनः प्रतिस्तब्ध इत्यत्र प्रस्कन्दनः प्रकर्षेण रेतस्स्कन्दनशीलः स्त्रैण इत्यर्थः ॥

मा विचिकित्सथाः संशयं मा कुरु ॥ अध्यायः ७५ ॥

अष्ठीला शाल्मलेरिवेत्यत्र अष्ठीला दृढा शाखा ॥

अञ्जयस्यस्रवानिवेत्यत्र अस्रवान् नयनजलवान् शिशुरिव अञ्जयसि अञ्जमञ्जनं तद्वत्करोषि, श्यामीकरोषि आर्द्रीकरोषि वा ॥ अध्यायः ७७ ॥

प्लवद्ध्रदमिवाप्लवमित्यत्र अप्लवं नौकानपेक्षं प्लवद्ध्रदं प्लवत् ह्रदात् प्लवमानं जलमिव मां न जानासि ॥

यदि मे सहसाऽऽकृष्टे इत्यत्र मे मया यदि सहसा सत्वेन आकृष्टे, तर्हि शिले इव समे सत्यौ यातां आयाताम्, द्यावापृथिव्यौ सत्वेनाकृष्य शिलाद्वयवत् सङ्घट्टयामीत्यर्थः ॥ अध्यायः ७९ ॥

किन्तु पर्यायधर्मस्येत्यत्र पर्यायधर्मस्य प्रातरादिकालक्रमेण क्रियमाणधर्मस्य सन्दिग्धस्य 'उदिते जुहोति, अनुदिते जुहोति' इत्यादिवाक्यैः सन्दिग्धस्य, प्रकृतेऽपि अस्मिन् काले युद्धं वा कर्तव्यं सन्धिर्वा कर्तव्य इति सन्दिग्धस्य पर्यायं क्रमं न व्यवस्यन्ति । दुर्जनैः सह काले प्राप्ते युद्धमेव कर्तव्यम्, सन्धिस्तु साधुभिरेव इत्याद्याकारेण न निश्चिन्वन्ति ॥

सन्दिग्धं कर्म पौरुषमित्यत्र पौरुषं पुरुषसम्बन्धि कर्म पौरुषं शौर्यं वा ॥

यत्कृतं मानुषं कर्मेत्यत्र मानुषं विनयादिमनुष्यप्रयत्नेन कृतं कर्म व्याघ्रेण सह सन्धिरूपं कर्म दैवेन व्याघ्रजातेरतिनिष्ठुरस्वभावघटकदैवेन, तथा दैवकृतं अनावृष्ट्यादिकं कर्म पौरुषेण कृषीवलपुरुषप्रयत्नेन विरुध्यते । इदं द्वयमपि मिथो विरुद्धम्, तत्र चैवमेव जायत इति भावः ॥

भिद्यते तत्र लक्षणमित्यत्र लक्षणं फलजनकत्वलक्षणं भिद्यते दैववशाद्भिद्यते, शीतोष्णादिसेवया यत्सुखादिकं भवेत् तदेव दैववशाद्दुःखकारणं भवतीति भावः ॥

कर्मणः दैवकृतकर्मणः । उभयान्वयात् दैवमानुषयोरुभयोरनुकूलत्वात् ॥

नातिप्रणीतबुद्धिः स्यादित्यत्र भावविपर्यये भावस्य वैरिपदार्थस्य विपर्यये वैपरीत्ये सति नातिप्रणीतबुद्धिः अति अत्यन्तं प्रकर्षेण नीता नीतियुक्ता बुद्धिर्यस्य स न स्यात् । गृहदाहे सति विषघटिकादिकं न पश्येदिति भावः ॥

विवृद्धिमिच्छेद्धानिं वा इत्यत्र स्वगृहस्य विवृद्धिम्, दाहकाग्नेर्हानिं इच्छेद्वै ॥

ते चेदभिनिवेक्ष्यन्तीत्यत्र अभिनिवेक्ष्यन्ति अभिनिवेशं गर्वं प्राप्स्यन्ति तर्हि ॥

धनञ्जयस्यैष कार्य इत्यत्र एष सहायः ॥ अध्यायः ८० ॥

प्रतिभाति परन्तपेत्यत्र प्रतिभाति युक्तमिति प्रतिभाति ॥

अफलं मन्यसे चापीत्यत्र पराक्रमं सन्धिकरणपराक्रमम् । कर्माणि दैवकृतकर्माणि अन्तरेण विना पौरुषेण पुरुषप्रयत्नेन फलोदयः न ॥

यदिदं भाषितं वाक्यमित्यत्र यदिदं तव वाक्यं तत्तथैव । तत् धर्मराजवाक्यं तथैव न, तथा वा भवति अन्यथा वा भवतीत्यर्थः ॥ अ० ८१ ॥

येन धर्मसुते दृष्टेत्यत्र धर्मसुते या श्रीर्दृष्टा सा येन दुर्योधनेन नाप-

[1] तथैवमेव ज्ञायत इति भावः.

[2] तत्र दैवमेव ज्याय इति भावः.

कर्षिता बलात्कारेण नापकर्षिता । अपमर्षितेति पाठे स्पष्टोऽर्थः ॥

या येनापश्यतोऽपायमित्यत्र या सम्पत् अपायमपश्यतः धर्मिष्ठात् धर्मराजात् ॥

वध्यतां वध्यत्वं निर्गतः नितरां गतः ॥ अध्यायः ८२ ॥

किमिवार्थं निवर्तेथा इत्यत्र अर्थं तेषां मनोगतमर्थं किमिवं विचार्य निवर्तेथाः । तान् वर्त्मनि न स्थापयेथाः ॥ अध्यायः ८४ ॥

विनाशे पाण्डवाः सहेत्यत्र विनाशे जीविताशां विना वर्तमानः विनाशः सङ्ग्रामः तस्मिन् ॥

ब्राह्मणः प्रसृताग्रभुगित्यत्र प्रकर्षेण सृतं प्राप्तं अग्रं ग्रासाग्रभागः तं भुनक्तीति ग्रासाग्रभुक् ॥

इत्युक्त्वा मृदुसम्भारमित्यत्र सम्यग्भारो यस्य सः सम्भारः मृदुश्चासौ सम्भारश्च मृदुसम्भारः तं वृजिनाग्रं कुटिलाग्रम् ॥ अध्यायः ८५ ॥

कौमुदे मासीत्यत्र कौमुदे कुमुदोत्पत्तिहेतुभूते कार्तिके मासि ॥

निकारानतदर्हा चेत्यत्र निकारान् न्यक्कारान् ॥

प्रव्रजत्यन्वधावदित्यत्र मयि प्रव्रजति सति ॥ अध्यायः ८६ ॥

तस्य प्रयातो यान्यासन्नित्यत्र प्रकर्षेण यान् गच्छन् प्रयान् तस्य प्रयातः ॥

प्रत्यगूहुर्महानद्य इत्यत प्रत्यक् पश्चिमस्यां दिशि ऊहुः, उवाह ऊहतुः ऊहुः प्रापुरित्यर्थः । सिन्धुः समुद्रः सत्तमो यासां तास्तथोक्ताः ॥

संछन्नो ब्राह्मणैरित्यत्र संछन्नः सम्यक् छन्नः आच्छन्नः परितः पुञ्जीभूय प्राप्त इत्यर्थः ॥

अनयानामकोविदा इत्यत्र अनयानामन्यायानामकोविदाः अकुशलाः अन्यायानभिज्ञा इत्यर्थः ॥

कुशस्थलं समासाद्येत्यत्र कुशस्थलं वृकस्थलमित्यत्रोक्तकुशस्थलम् ॥

मुक्त्वा परिवार्य च शाश्वत इत्यत्र परिवार्य तानेव हयान् प्रदक्षिणीकृत्य ॥

कृतमित्युक्त्वेत्यत्र कृतं सम्यकृतम् ॥ अध्यायः ८७ ॥

तस्मिन् हि यात्रा लोकस्येत्यत्र यान्ति यस्यामिति यात्रा मर्यादा ॥ अध्यायः ८८ ॥

यत्त्वमेवं गतं ब्रूया इत्यत्र गतं आगतं कृष्णं शासनात् शास्त्रशासनात् कारणात् स्वयोग्यताख्यकारणात् ॥

लेखाऽश्मनीव भाः सूर्य इत्यत्र अश्मनि शिलायां लेखा लेखनमिव ॥

वार्ष्णेयं त्वं जिहीर्षसीत्यत्र जिहीर्षसि पाण्डवेभ्यः अपहर्तुमिच्छसि ॥

अन्यो धनञ्जयात्कर्तुमित्यत्र धनञ्जयात् अन्यः भिन्नः वियोजित इत्यर्थः ॥ अध्यायः ९० ॥

अनुरक्तोऽप्यसंहार्य इत्यत्र अनुरक्तोऽपि पूजादिसत्कारेण अनुरागं प्रापितोऽपि ॥

न हि शाम्यति विग्रहादित्यत्र ल्यब्लोपनिमित्ता पञ्चमी । विग्रहं विहायेत्यर्थः ॥

वासुदेवेन तीर्थेनेत्यत्र 'निदानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यभिधानात् तीर्थेन गुरुणा संशाम्य शम्यक् शमय ॥

नियंस्यामि जनार्दनमित्यत्र नियंस्यामि बध्नामि ॥ अध्यायः ९१ ॥

निर्वासनं च नगरादित्यत्र यन्निर्वासनं या च प्रव्रज्या ततः जातानां दुःखानामिति सम्बन्धः ॥

अज्ञातचर्या बालानामित्यत्र पुत्रैः सह अज्ञातचर्या एकचक्रानगरे जाता ॥

स्त्रीधर्मिणी वरारोहेत्यत्र 'स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि' इत्यभिधानात् स्त्रीधर्मिणी रजस्वला ॥

अन्तं धीरा निषेवन्त इत्यत्र अन्तं अनुलोमसङ्ख्यायां प्रतिलोमसङ्ख्यायां च अन्ते विद्यमानं धर्मं मोक्षं च, मध्यं तयोर्मध्ये वर्तमानमर्थेन सहितं

कामम्, उत्तमाः धर्ममोक्षरताः परिक्लेशान् इह परिक्लेशान् निषेवन्ते परत्र अतिमानुषान् भोगानिति विवेकः ॥

दुःखमन्तरमन्तयोरित्यत्र अन्तयोर्धर्ममोक्षयोः अन्तरं मध्यगम् ॥

अध्यायः ९३ ॥

अनम्बूकृतमत्रस्तमित्यत्र 'अम्बूकृतं सुनिष्ठीवमबद्धं स्यादनर्थकम्' इत्यभिधानात् न विद्यते अम्बूकृतमबद्धं न भवतीत्यनम्बूकृतम्, अत्रस्तं न विद्यते त्रस्तं त्रासो यस्य कथने तदत्रस्तमिति च वाक्यस्य विशेषणम्[1]। अनिस्तमसकुण्डलः न विद्यते नितरां तमसमन्धतमसं ययोस्ते कुण्डले यस्य स तथोक्तः ॥

प्रतिवक्तुमसाम्प्रतमित्यत्र सम्प्रति वक्तुमयोग्यमसाम्प्रतम् ॥

विरुरुत्सते विरोद्धुमिच्छति ॥

सर्वा मेऽपचितिः कृतेत्यत्र 'पूजा नमस्याऽपचितिः सपर्याचार्हणाः समा' इत्यमरः । अपचितिः पूजा ॥

सम्भ्रमैस्तुष्य गोविन्देत्यत्र सम्भ्रमैः भक्त्युद्रेकादिसम्भ्रमैः तुष्य सन्तुष्टो भव । 'तुष तुष्टौ' इति धातोर्लोटि मध्यमपुरुषवचनम् । एतत् सम्भ्रमकरणम् ॥

अध्यायः ९४ ॥

भूयसी वर्तते वृत्तिरित्यत्र वृत्तिः धनदानादिना अनुवृत्तिः ॥

नेदमस्य युधा शक्यमित्यत्र अस्य दुर्योधनस्य इदं राज्यं युधा युद्धेन शक्यं अपहर्तुं शक्यं न इति योजना ॥

वीतमन्युरित्यत्र विशेषेण इतः प्राप्तो मन्युर्यस्य स तथोक्तः ॥

यश्चाशमं मन्यते प्राप्तमर्थमित्यत्र अशमं अशममेव अर्थं प्रयोजनं प्राप्तं मन्यते ॥

पर्याप्तेयं पृथिवीत्यत्र दुर्योधनार्थे ये योद्धुकामाः तैः पर्याप्तेति सम्बन्धः ॥

कृते कृताशा इत्यत्र कृते युद्धकर्मणि कृताशाः ॥

मन्युवशाविनीता इत्यत्र मन्युवशाश्च ते अविनीताश्चेति विशेषणसमासः[1] ॥

अध्यायः ९५ ॥

---

[1] विशेषणोभयसमासः.

ग्रहीतुं धार्तराष्ट्राणामित्यत्र ग्रहीतुं ग्राहयितुम् ॥ अध्यायः ९६ ॥

ब्रह्मादिवासुदेवान्तं वंशं समनुकीर्तयन्नित्यत्र 'बहुलं छन्दस्यमाङ्योगेऽपि' इति वचनात् समनुकीर्तयन् सम्यगन्वकीर्तयन्नित्यर्थः ॥

पक्षिपक्षवितानैश्चेत्यत्र पक्षी गरुडः तस्य पक्षौ विस्तारदशायां वितानानीव तैः । कृत्रिमशुकहंसादिपक्षविलसितवितानैर्वा

तपनीयैश्च पादपैः । व्याघ्रसिंहवरैश्चैवेत्यादौ पादपादयः सर्वे तत्र कृत्रिमरूपा इति ज्ञेयम् ॥

प्रवाद्यन्ते स्म पुष्करा इत्यत्र 'द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे । अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम्' इत्यभिधानात् पुष्कराः वाद्यविशेषाः ॥ अध्यायः ९७ ॥

ते सत्यमाहुरित्यत्र पृष्टाश्चेदाहुरिति योग्याध्याहारेणान्वयः[1] ॥

पित्र्यं तेभ्यः प्रदायेत्यत्र तेभ्यः कौरवेभ्यः पित्र्यं अंशं पाण्डवेभ्यः प्रदायेति पञ्चमीचतुर्थ्योरन्वयः अध्यायः ९८ ॥

तं स्म वैद्या अकृपणा इत्यत्र वैद्याः विद्यासम्बन्धिनो विद्वांसः ॥

निमित्तवेधी स मुनिरित्यत्र यावन्निमित्तमस्ति तावदेव विध्यतीति निमित्तवेधी । अत एव चक्षुरादेः स्पर्शमात्रं न तु व्रणम् ॥

कङ्कुदीपं कङ्कुलासमित्यत्र कं शिरः कु कुत्सिततया दीपयति ज्वलयतीति कङ्कुदीपम्, कं शिरः कु कुत्सिततया लासयति नर्तयतीति कङ्कुलासम्, आक्षेपं आ समन्तात् क्षेपः क्षेपणं यस्मात्तदाक्षेपम्, सन्तानं एकशरप्रयोगेऽपि शतशः कोटिशः सन्तानो विस्तारो यस्मात्तत्सन्तानम्, हास्यं हासः अकारणतया सदा हासो यस्मात्तत् हास्यम्, औदकं सदा मूत्राद्युदकजनकमौदकम् ॥ अध्यायः ९९ ॥

मातलेर्दातुकामस्येत्यत्र कन्यां दातुकामस्य वरं मृगयतः मातलेः इतिहासमुदाहरन्तीति सम्बन्धः ॥

[1] योग्यपदाध्याहारेण योजना।

कुलत्रयं संशयितमित्यत्र दातुं प्रतिग्रहीतुं च योग्यं न वेति संशययुक्तं कुरुते ॥

अवगाह्यैव विचिताविल्यत्र विचितौ विचारितौ ॥ अध्याय: १००॥

यां प्राप्य सुरतामित्यत्र यां वारुणीमद्यरूपाम् । सुष्ठु रमन्त इति सुराः तेषां भावः सुरता ताम् ॥

एतानि हृतराज्यानामित्यत्र हृतमाहृतं राज्यं येषां ते हृतराज्यास्तेषाम् ॥

अध्यायः १०१ ॥

वर्धितानि प्रसूत्या वै इत्यत्र प्रसूत्या सन्ततिपरम्परया वर्धितानि पक्षिकुलानि ॥

ज्ञातिसंक्षयकर्तृत्वाद्ब्राह्मण्यं न भजन्ति वै इत्यत्र ब्राह्मण्यं ब्राह्मणजातेर्धर्मं दाक्षिण्यम् ॥

एते प्रादेशमात्रेणेत्यत्र प्रकृष्टानां आदेशः कथनं तन्मात्रेणेत्यर्थः ॥

अध्यायः १०२ ॥

निवसन्ति दिशांपाल्य इत्यत्र दिशश्चतुर्दिशः धारयन्त्यः ताः धेनवः दिशांपाल्यः दिक्पाल्य इति स्मृताः । अलुक्समासोऽयम् ॥

तथैलिविलिसंश्रयामित्यत्र 'ऐलिविलिः पौलस्त्यो वैश्रवणः किन्नरेश्वरो धनद' इत्यभिधानात् ऐलिविलिः वैश्रवणः ॥

सुधाहारेषु च सुधामित्यत्र सुष्ठु धार्यन्ते अनया देवा इति सुधा देवाहारभूता स्वाहा ॥

अध्यायः १०३ ॥

इदमद्भिः समं प्राप्ता इत्यत्र इदं पातालतलं अद्भिः शुभोदकसमुद्रात्क्षीरोदकसमुद्राच्च प्रस्रवणरूपेण प्रविशन्तीभिरद्भिः समं प्राप्ताः ध्रुवजङ्गमाः स्थूलशरीराः स्थिरपृष्ठाः कूर्मकर्कटकमकरादयः भयपीडिताः परितः प्रस्रवज्जलोपान्ते ज्वलदग्निदर्शनात् भयपीडिताः सन्तः ॥

अत्र पाताले आसुरोऽग्निः असुरसंहरणार्थं परिकल्पितो दक्षिणोऽग्निव्यापारेण परितो वनं सर्वभक्षणव्यापारेण महात्मानं वनान्तस्स्थितं कञ्चिदपि

निबध्य परितो बद्ध्वा क्रुद्धेन तेन अधः पाताले पतेति शप्तः सन् समबध्यत परितोऽन्तःप्रविष्टबहुयोजनविस्तृतजलसमुद्रप्रान्तजले सम्यक्संम्बन्धोऽभूत्[1] ॥

अत्र पातालमध्यप्रदेशे सोमस्य भगवदाज्ञया पातालोपरिप्रदेशे सञ्चरत्सोमस्य अमावास्यापर्यन्तं बहुशोऽह्नि सञ्चरणेन सूर्यकिरणाभिभूतस्वकिरणानां अमृतस्पर्शाभावात् ह्रानिः क्रमेण कलाह्रानिः, पुनः पौर्णमासीपर्यन्तं क्रमेण निशि निश्येव बहुशः सञ्चारात् अमृतस्पर्शस्याप्यभिवृद्धौ कलाभिवृद्धिश्च प्रदृश्यते । एवञ्च वृद्धिह्रासयोरमृतस्पर्शास्पर्शनिमित्तात् ततोऽमृतादित्युक्तम् ॥

अत्र दिव्यो हयशिरा इत्यत्र अत्र पाताले हयशिराः बडवामुखो बडवाग्निः उत्तिष्ठति पौर्णमास्याममावास्यायां च अभिवृद्धजलपानाय पूर्वस्थिताग्नेरुत्तेजकतयोत्तिष्ठति ॥

यस्मादत्रेत्यत्र यस्मात्कारणात् अस्ताः जलचरैर्मिश्रिताः जलमूर्तयः जलराशयः । तस्माज्जलपातान्निमित्तात् अं अकारवाच्यं नारायणं लाति स्वान्तर्गृह्णातीति अलं जलं तस्य पातो यत्रेति व्युत्पत्त्या पातालमिति भावः ॥

ऐरावतोऽस्मात्सलिलं प्रगृह्येत्यत्र ऐरावतः अस्मात् पातालस्थजलाशयात् स्वशुण्डाद्वारा क्वचित्क्वचिदगाधतया पातालपर्यन्तस्पर्शिलवणसमुद्रजले प्रक्षिप्य तद्द्वारा मेघेष्वामुञ्चते इति ज्ञेयम् ॥

ऐरावतो नागराज इत्यत्र ऐरावतादयः चत्वारो दिग्गजाः सुप्रतीकस्य वंशे प्रसूताः । अन्ये वारणसत्तमाश्च ॥

अप्सु सोमप्रभां अप्सु पतितचन्द्रप्रभां चन्द्रप्रभास्पर्शादमृतीभूतजलमिति यावत् ॥

अत्र सूर्यांशुभिर्भिन्ना इत्यत्र अत्र पाताले भगवदाज्ञया निशि चन्द्र इव अह्नि सूर्योऽपि रूपान्तरेण तत्र तत्र चरति । दशयोजनाभ्यन्तरे सञ्चरतस्तस्य सूर्यस्यातिसमीपस्थत्वात् अत्युष्णकिरणैः भिन्नास्तप्ताः अत एव दिवसतः अह्नि मृताः निशि जीवन्ति चन्द्रस्याप्यतिसमीपस्थामृतकिरणत्वात् शुक्लपक्षे

---

[1] संबद्धोऽभूत्.

चन्द्रकिरणैः, कृष्णपक्षे शीतलवातानीतामृतशीकरैश्च जीवन्ति। ज्योतिश्चक्रे स्थितौ तु सूर्याचन्द्रमसौ 'अरोहन्नुत्तरां दिशं' इति श्रुतेः इह उत्तरां दिशं गत्वा मेरोः प्रादक्षिण्येनैव सञ्चरतः। रूपान्तरेण भगवदाज्ञया पातालेऽपि सञ्चरत इति विवेको द्रष्टव्यः॥

अत्र तेऽधर्मनिरता इत्यत्र अधर्मनिरताः बद्धाः चतुर्मुखाज्ञया मृत्युपाशैर्वरुणपाशैश्च बद्धाः। अत्र पातालस्थजलसमुद्रे मृत्युपाशैर्बद्धाः। कालेन मृत्युना॥

भूतपतिर्नाम महेश्वरो महादेवः, स किङ्करैर्भूतगणैरमृतरक्षां च करोतीति सूचनाय भूतपतिर्नामेत्युक्तम्॥

अत्र गोप्रतिमा विप्रा इत्यत्र गोप्रतिमाः परमशान्ता इत्यर्थः। त्यक्तप्राणाः त्यक्तं प्र प्रकर्षेण अनं अननं चेष्टा यैस्ते त्यक्तप्राणाः॥

यत्रतत्रशय इत्यत्र इह स्थितो मुनिवर्गः यत्रतत्रशयः यत्रकचित् शयः शयनं तत्कुर्वन्। येनकेनचित्तृणपर्णादिना आहारेण आश्रितः देहमाश्रितः देहं रक्षन्निति यावत्। येनकेनचित् वल्कलादिना[1] आच्छन्नः अत एव असङ्गः विरक्तः अप्रतिः प्रतिरहित इत्युच्यते॥

अंशमेतज्जले न्यस्तमित्यत्र एतत् प्रागुक्तं अंशं अग्नेरंशभूतं तेजः जले न्यस्तम्॥

अप्रजानान्निसर्गाद्वा इत्यत्र अप्रजानात् प्रकर्षेण जानो जननं इन्धनादिना उद्बोधनं तदभावात्, निसर्गात् स्वभावात् नोद्भिद्यति ऊर्ध्वं न ज्वलति। न सर्पति ततोऽन्यत्र न सर्पति च॥

अस्य पातालस्थितजनस्य॥

अतः किल महानग्निरित्यत्र अतः अस्मात्पाताललोकात्॥

इति मातलिवरान्वेषणं नाम चतुरधिकशततमोऽध्यायः १०४॥

---

[1] वल्कलाजिनादिना.

मणिस्वस्तिकचक्राङ्कमण्डलुकलक्षणा इत्यत्र मणेः फणामणेः स्वस्तिकचक्रयोश्च अङ्को येषां तानि कानि शिरांसि तेषां मण्डलुकं मण्डलीकरणशीलमेव लक्षणं येषां ते तथोक्ताः ॥ अध्यायः १०५ ॥

शेषेणैवास्य कार्यस्येत्यत्र कार्यस्य शेषेण विशेषेण कार्यविशेषेणेत्यर्थः । अस्य सुमुखस्य आयुषः महत् रूपं प्राप्तं स्यादित्यन्वयः ॥

सङ्गत्या तत्र भगवान्विष्णुरित्यत्र सङ्गत्या अनुजत्वाख्यसम्बन्धेन ॥

नारदो मातलिं प्रतीत्यत्र मातलिं प्रति मातलिमुद्दिश्य आचष्ट विष्णवे आचष्ट ॥ अध्यायः १०६ ॥

भगवन् किमिवाज्ञानात्सुधां प्रति भये ममेत्यत्र सुधां अमृतं प्रति उद्दिश्य भये सति मम कामकारवरं कामेन कारः कार्यकरणं तस्य वरं दत्त्वा ॥

त्यक्त्वा रूपमित्यत्र रूपं मानुषाकारपत्नीप्रीत्यै धृतं मानुषरूपम् ॥

मया यो हि विशिष्टः सन्नित्यत्र मया सम्पदा विशिष्टः सन् इति सम्बन्धः । सबान्धवं भार्याख्यबन्धुसहितम् ॥

बलदाहविदग्धस्येत्यत्र बलस्य दानवसेनायाः दाहे विदग्धस्य निपुणस्य ॥ अध्यायः १०७ ॥

अभ्यगच्छत्स्वयं भूत्वेत्यत्र वसिष्ठः स्वयं अवशिष्टो भूत्वेत्यावृत्त्या योजना ॥

मारुताशनः वाय्वाहारः ॥ अध्यायः १०८ ॥

कुतः पुष्णानि मित्राणीत्यत्र पुष्णानीति लोटि उत्तमपुरुषवचनम् । पुष्टान् करवाणीत्यर्थः ॥

प्रतिश्रुत्य करिष्येऽतीत्यत्र अति अतिशयेन प्रतिश्रुत्य करिष्ये इति सम्बन्धः ॥

वासवावरजो द्विजेत्यत्र वासवावरजः विष्णुः । तेन विष्णुना मे कामश्च कृतः ॥ अध्यायः १०९ ॥

ओङ्कारस्येत्यत्र याः सूतयः लोकाः दशतिर्दश ताः ओङ्कारस्य सूतयः स्वरप्रसूतयः जायन्ते ॥

अत्र गत्वा सुखस्यान्तं दुःखस्यान्तमित्यत्र सुखस्य अन्तं प्रदेशं प्रपद्यते ॥

अध्यायः ११० ॥

अत्र रात्रिश्च निद्रा चेत्यत्र निर्गता पश्चिमदिङ्मध्यादुत्थिता ॥

अत्र मूलं हि मरुत इत्यत्र अत्र दिशि मरुतः वायोः मूलं उत्पत्तिस्थानं अस्ति ॥

अतःप्रभृति सूर्यस्येत्यत्र तिर्यक् मेरोरुत्तरभागे ॥ अध्यायः १११ ॥

शैलो मैनाकः ॥

नाकृतिर्न तु पश्चिम इत्यत्र पश्चिमः पृष्ठभागः ॥

यथा यथा प्रवेक्ष्यन्ति तस्मादित्यत्र उत्तरदिग्भागात् ॥ अ० ११२॥

स मे निर्वाप्य सहसा चक्षुषी इत्यत्र सः अग्निः मे चक्षुषी निर्वाप्य निर्मथ्य ॥

गुरवे मच्छ्रुतानीहेत्यत्र मच्छ्रुतानि मया प्रतिश्रुतानि प्रतिज्ञातानीत्यर्थः ॥

तेषां चैवापवर्गायेत्यत्र अपगतो वर्गो वर्जनं यस्मात् सः अपवर्गः आर्जनमित्यर्थः, तस्मै ॥

न चापि कृत्रिमः काल इत्यत्र कृत्रिमः कृतः क्षणलवादिः ॥

किमहं पूर्वमेवेदमित्यत्र इदं गुरवे अश्वदानप्रतिश्रुतम् ॥ अ० ११३ ॥

अथ अष्टतनूजाङ्ग इत्यत्र 'पतत्रं च तनूरुहम्' इत्यभिधानात् तनूजौ पक्षौ ॥

पक्षौ द्रवणवत्तरावित्यत्र द्रवणं द्रुतगमनं अतिशयेन तद्वन्तौ द्रवणवत्तरौ ॥

अध्यायः ११४ ॥

यस्माद्धिरण्मयं सर्वमित्यत्र हिनोति रुजमिति हिरुक् सुखं तन्मयं हिरण्मयम् ॥

नित्यं प्रौष्ठपदाभ्यां चेत्यत्र प्रौष्ठपदाभ्यां पौर्णम्यां यस्य नक्षत्रस्य योगे सति भाद्रपदमासारम्भः तस्य नक्षत्रस्य तारे प्रौष्ठपदे, ताभ्यामुपलक्षित-काले वामनावतारे सति शक्रे तदेतद्धनं तिष्ठति । धनपतौ कुबेरे तदेतद्धनं तथा पूर्वं यथा हरिणा दत्तं तथैवास्ति ॥

मनुष्येभ्यः सदाऽऽदत्त इत्यत्र मनुष्येभ्य इति पञ्चमी । आदत्त इति पदच्छेदः ॥

एवं न शक्यते लब्धुमित्यत्र एवं उक्तविधया अलब्धव्यमिन्द्रकुबेर-योर्धनम् ॥

ऋते न धनमित्यत्र धनमृते अश्वानामवाप्तिर्न विद्यते । धनं कुतश्चि-द्याचितुं शक्यते । अश्वास्तु न लभ्यन्त इति भावः ॥

उपकारेप्सया द्विज इत्यत्र मया दत्तविद्यादिकं तव उपकार एवास्तु इतीप्सया इच्छया अभ्यनुज्ञातः गच्छेत्याज्ञप्तः ॥

कृत्वाऽपवर्गं गुरव इत्यत्र अपवर्गं ऋणमोचनम् ॥ अध्यायः ११५ ॥

एष्टव्याः शतशस्त्वन्य इत्यत्र अन्ये त्वदभिलषितवाजिभ्यः अन्ये मम वाजिनः शतशश्चरन्ति । ते एष्टव्याः त्वया प्राप्तव्याः ॥

ततः स्थित्वा च पौरुष इत्यत्र पुरुषो नारायणः तदधीनत्वे स्थित्वा ॥

अध्यायः ११७ ॥

द्रष्टुमौशीनरं नृपमित्यत्र औशीनर एव उशीनरः, स्वार्थिकोऽण् ॥

अध्यायः ११८ ॥

पुत्रगतं मार्गमित्यत्र परैरन्यैः पुत्रैर्निमित्तगतं प्राप्तं मार्गम् ॥

कन्यामुक्तवन्तं नराधिपमित्यत्र कन्यामुद्दिश्य ॥

प्रादाच्च तं राज्ञ इत्यत्र तं शिबिम् ॥ अध्यायः ११९ ॥

तेभ्यो मे द्वे शते क्रीत्वा प्राप्ता इत्यत्र तेभ्यः अश्वेभ्यः द्वे शते द्विशतसंख्याकास्ते अश्वाः पार्थिवैः क्रीत्वा मे प्राप्ताः प्रकर्षेण आ समन्ता-त्सम्पाद्य दत्ताः ॥

हृतान्यासन्नित्यत्र हृतानि मया अपहृतानि ॥ अध्यायः १२० ॥

वनेष्वमृतकल्पेष्वित्यत्र अमृतप्रायं कन्दमूलफलादिकं कल्पयन्तीत्यमृतकल्पानि तेषु ॥ अध्यायः १२१ ॥

अदृश्यमानस्तान् पश्यन्नित्यत्र अदृश्यमानः तैरदृश्यमानः ॥

अध्यायः १२२ ॥

आधाने गर्भाधाने ॥ अध्यायः १२३ ॥

न हि मानप्रदग्धानामित्यत्र मानः प्रदग्धो यैस्ते मानप्रदग्धाः निरहङ्कारिण इत्यर्थः ॥ अध्यायः १२४ ॥

किम्पाकमिव भक्षितमित्यत्र अन्ते विपरीतफलत्वात् किं कुत्सितः क्षेपार्हो वा पाकः परिपाको यस्य सः किम्पाकः विम्बफलम् । तद्धि तत्काले स्वादु, मरणकाले हरिविस्मरणनरकाद्यनर्थकारणम् । 'किम्पाकः स्यान्महाकाल ओष्ठी विम्वा च तुण्डिका' इति हलायुधः ॥

योऽर्थकामस्य वचनमित्यत्र अर्थकामस्य स्वपुरुषार्थकामस्य हितोपदेष्टुः॥

आत्मानं तक्षति ह्येष इत्यत्र एषः अधिराज्यपदवीमनुभवन् तक्षति च्छिनत्ति ॥

स सम्पन्नमभिच्छिन्द्याद्यस्य नेच्छेत्पराभवमित्यत्र अभिच्छिन्द्यात् बुद्धिच्छेदं कुर्यात् ॥

भिद्यते ह्याततं सर्वमित्यत्र आततं अत्युन्नतम् ॥

यस्मिन् जिते जितं स्यादित्यत्र जिते स्ववशीकृते सति ॥

पुनः पार्थं कः प्रापयितुमर्हतीत्यत्र पुनः प्रापयितुं परावृत्य प्रापयितुम् । प्रतीयमानं प्रति ईयमानं आगच्छन्तम् ॥

पातयेत् त्रिविधान् देवानित्यत्र त्रिविधान् त्रयस्त्रिंशदादिभेदेन त्रिविधान् ॥ अध्यायः १२५ ॥

वैरं परेषां ग्रीवायामित्यत्र परेषां अन्येषामस्मदादीनाम् ॥

शमं चेद्याचमानं त्वमित्यत्र याचमानं केशवं प्रति त्वं शमं नाख्यास्यसि चेदित्यन्वयः ॥ अध्यायः १२६ ॥

यावत्तिष्ठति गाण्डीवमित्यत्र तिष्ठति तूर्णीं तिष्ठति ॥

अतिलक्षैर्निपात्यन्त इत्यत्र अतिलक्षैः अतिशयितं लक्षं येषां तैः लक्षवेधिभिरित्यर्थः ॥

सुष्ठु दक्षिणा यस्मात्सः तं सुदक्षिणम् ॥

रत्नौपधिसमेतेनेत्यत्र विप्राणां दानसमये रत्नेषु व्रीहियवाद्योप(धी)धिषु च सम्बद्धेन ॥

त्वां सजातो वृकोदर इत्यत्र सजातः समानतया जातः ॥ अ० १२७ ॥

प्रियाभ्युपग(ते)तद्यूत इत्यत्र प्रियेण प्रीत्यैव अभ्युपगते द्यूते ॥

प्रकृष्टाः सत्यमित्रवदित्यत्र प्रकर्षेण कृष्टमाकृष्टं पणेन अपहृतं धनं येषां ते प्रकृष्टाः ॥

यावत्तु राजा ध्रियत इत्यत्र ध्रियते प्राणैर्ध्रियते ॥

यद्धि देयं पुरा दत्तमित्यत्र पुरा दत्तं परवतः नाथवतः पराधीनस्येत्यर्थः, मम यद्राज्यं देयमित्युच्यते ॥ अध्यायः १२८ ॥

कथं नु ज्ञातय इत्यत्र उपस्थातुं कथं नु योग्याः ॥

आनीय च सभां वक्तुमित्यत्र वक्तुं दुर्वाक्यं वक्तुं सभामानीयेति सम्बन्धः ॥

नृशंसानामनार्याणां यथा तथेति सम्बन्धः ॥ अध्यायः १२९ ॥

तथाऽऽयत्यां सुखोदयमित्यत्र आयत्यां दीर्घकाले सति उपर्युपरीत्यर्थः ॥

क्षुद्राक्षेणेव जालेनेत्यत्र क्षुद्रं अल्पीभूतं अक्षं मत्स्यगलप्रादिशङ्कुविशेषो यस्य तत् क्षुद्राक्षम् । अक्षस्य क्षुद्रत्वात् मत्स्यौ जालमेव यथा विलुम्पतः तथेति भावः ॥

विभ्यतोऽनुपरागस्येत्यत्र अनुपरागस्य विषयोपरागरहितस्य पुंसः वर्धितौ स्वविषयाभ्यां वर्धितावपि स्वयमेव विभ्यतः भीतौ भवतः ॥

अमर्षवशमापन्न इत्यत्र जीवनः जीवन् कुरुः कुरुकुलोत्पन्नः पुरुषः अमर्षवशमापन्नः मा भवेत् ॥

राजपिण्डभयादित्यत्र राजपिण्डं राजदत्तान्नम् ॥ अध्यायः १३० ॥

उद्धर्षयन् महाबाहुमित्यत्र उत्कर्षेण धर्षयन्निति पदच्छेदः ॥ अ० १३१ ॥

यावद्बलं मे पुत्रेष्वित्यत्र शममिच्छन्तं मे पुत्रेषु यावद्बलं यथाशक्ति यतमानं मां पश्यसि इति सम्बन्धः ॥ अध्यायः १३२ ॥

अनुवाकहता बुद्धिरित्यत्र अनुवाको धर्मकाण्डस्थसूक्तवाक्यम् ॥

अध्यायः १३३ ॥

मैवमल्पेन भीभर इत्यत्र अल्पेन भाग्येन आत्मानं मा भीभरः । 'भृञ् भरण' इति धातोः यङ्लुङि मध्यमपुरुषवचनम् ॥

अलातं तिन्दुकस्येवेत्यत्र तिन्दुकस्य वृक्षविशेषस्य । तुम्बुरु इत्यपभ्रंशभाषा ॥

आनन्तर्यं चारभन्त इत्यत्र अनन्तरं कर्तव्यं कार्यं आनन्तर्यम् ॥

विपरिच्छिन्नमूलेनेत्यत्र विशेषेण परिच्छिन्नं मूलं यस्मात्तेन शत्रुणा न विषीदेत् ॥

राशिवर्धनमात्रं स इत्यत्र राशिवर्धनमात्रं केवलं राशिभिरन्नराशिभिर्वर्धनं उदरपूरणं यस्य स राशिवर्धनमात्रम् ॥

मातुरुच्चार एव स इत्यत्र 'मूत्रं प्रस्राव उच्चारावस्करं शमलं शकृत्' इत्यमरोक्तेः उच्चारः मूत्रम् ॥

न त्वेव जाल्मीं कापालीमित्यत्र 'निहीनोऽपशदो जाल्म' इत्यमरवचनात् जाल्मीं हीनस्य विद्यमानाम् ॥

अवर्णकारिणमित्यत्र 'अवर्णाक्षेपनिर्वादपरिवादापवादका' इत्यमरोक्तेः अवर्णकारिणं अपवादकारिणम् ॥

अनुत्थानभये चोभे इत्यत्र अनुत्थानभये उत्थानमभिवृद्धिस्तदभावोऽनुत्थानं तदेव भयं ययोस्ते ॥

दिष्टभावं गतस्येत्यत्र दिष्टभावं मरणम् ॥

किन्तु ते मामपश्यन्त्या इत्यत्र युद्धान्मरणे सति मामपश्यन्त्याः ॥

अध्यायः १३४ ॥

सृञ्जयो नामतश्च त्वमित्यत्र 'सृ गतौ' इति धातोः संरति शत्रून् जयति चेति सृञ्जयः ॥

समृद्धिरसमृद्धिर्वेत्यत्र मम सकाशात् पूर्वेषां समृद्धिरसमृद्धिर्वा भवतु एवं विद्वानिति सम्बन्धः ॥

मां चैव भार्यां चेत्यत्र मां, तव भार्यां च भृशदुर्बले द्रष्टासि ॥

अभृत्याऽस्मान् प्रजहत इत्यत्र अभृत्या अभरणेन ॥

सर्वे ते शत्रवः सह्या नो चेदित्यत्र शत्रवः सह्या नो चेदपि जीवितुमिच्छसि ॥

माहेन्द्रं च ग्रहं लेभ इत्यत्र गृह्यत इति ग्रहो यज्ञभागः तम् ॥

प्रलब्धस्य हि शत्रोर्निर्वेशं कुर्वन्तीत्यत्र कर्तरि क्तः । प्रलब्धस्य वञ्चकस्य निर्वेशं प्रतिक्रियाम् । 'निर्वेश उपभोगः प्रतिक्रिया' इत्यमरः ॥

इति विदुलोपाख्याने अध्यायः १३५ ॥

परिवाक्शल्यमाहुस्त्वमित्यत्र परिवादाख्यशल्यं यथा भवति तथा ॥

प्रियाभावाच्च पुरुष इत्यत्र प्रियाभावात् सर्वथा प्रियाभावात् ॥

अतो मे भूयसी नन्दिरित्यत्र यत् यस्मात् एवमनुपश्यसि अनुकूलतया मां पश्यसि, अतो मे भूयसी नन्दिः कार्यमपि करिष्यसीति हर्षः ॥

ऐकगुण्यमनीहायामित्यत्र अनीहायां इच्छाभावे कर्मैव न भवतीत्यवधारणमेको गुणः तस्य भावः ऐकगुण्यम् । तदेव दर्शयति—कर्मणामभाव एव फलमिति । द्वौ गुणौ फलभावाभावौ तयोर्भावः द्वैगुण्यम् ॥

---

[1] युद्धा० [2] सञ्जति

वदेद्वृद्धिसमृद्धी नेत्यत्र प्रतिकूले अवृद्ध्यसमृद्धी न वदेत् ॥

अन्ततस्तद्भविष्यतीत्यत्र तत् निर्वादफलम् ॥ अध्यायः १३६ ॥

नैव राज्ञा दरः कार्य इत्यत्र दरः भयम् । 'दरत्रासौ भीतिर्भीः साध्वसं भयम्' इत्यमरः ॥

बद्धवत्सा जला इवेत्यत्र जं जातं वत्सं लालयन्तीति जलाः गावः ॥

उदके धूरियं धार्येत्यत्र धार्या धर्तुं शक्या । सर्तव्यं 'सृ गतौ' इति धातोर्गन्तुं शक्यम् । त्वद्बुद्ध्या असाध्यमपि करिष्यामीति भावः ॥ अ० १३७॥

॥ विदुलोपाख्यानं समाप्तम् ॥

---

स्त्रीधर्मिणी वरारोहेत्यत्र स्त्रीधर्मिणी रजस्वला ॥

एतत् राज्यमस्य दुर्योधनस्य नास्तीत्यब्रुवन् ॥ भगवद्याने अ० १३८ ॥

भारतीं वाचम् ॥ अध्यायः १३९ ॥

पुनरेवोचतुर्वाक्यमुक्तवन्तावित्यत्र उक्तवन्तौ प्रशस्तवाक्यवन्तौ । उक्तं भाषितमुदितं जल्पितम्' इत्यमरः ॥ अध्यायः १४० ॥

कानीनश्च सहोढश्चेत्यत्र कन्यायां जातो यः कानीनः तस्य पुरुषस्य, तया कन्यया सह यः ऊढः विवाहीकृतः तं वोढारं पितरं प्राहुरिति सम्बन्धः ॥ अध्यायः १४१ ॥

कुन्त्या त्वहमवाकीर्ण इत्यत्र कुलजो यथा न भवामि तथा अवाकीर्णः अप्सु विसृष्टः ॥

तस्याः पिण्डव्यपनयमित्यत्र पिण्डव्यपनयं पिण्डत्यागम् ॥

आवाहाश्च विवाहाश्चेत्यत्र आवाहाः 'वह प्रापणे' इति धातोः स्वगृहं प्रति प्रापणानि ॥

मन्त्रस्य नियममित्यत्र नियमं नितरां यमं यमनमाच्छादनम् ॥

---

[1] दरत्रासो.

शामित्रं तौ महात्मानावित्यत्र शमिता पशुहिंसनकर्ता । तयोर्भावः शामित्रम् ॥

मैत्रावरुण आग्नीध्रावित्यत्र मैत्रावरुणे कर्मणि आग्नीध्रौ 'आदेष्टा त्वध्वरे व्रती' इत्यमरोक्तेः मित्रमुपब्रूहीत्यादिमन्त्रादेशकर्तारौ ॥

कल्माषदण्डा इत्यत्र 'कल्माषः कृष्णपाण्डर' इत्यभिधानात् नानाविधरत्नकान्त्या कृष्णपाण्डरा दण्डा यष्ट्यो यासां ताः ॥

दीक्षितो धार्तराष्ट्रोऽत्रेत्यत्र दीक्षितः दीक्षां प्रापितः पशुः । अत्र यज्ञे महाचमूरेव पत्नी । अतिरात्रे यज्ञे अतिरात्रनामकयज्ञे । रात्रियुद्ध इति ध्वनिः । तदा शामित्रं घटोत्कचः करोतु ॥

तदा सूत्या भविष्यतीत्यत्र सूत्या सोमलवणम् ॥ कर्णप्रजापे अ० १४२॥

समुच्छ्रितो वानरराज उग्र इत्यत्र वानरेण राजत इति वानरराजः ध्वजः ॥

न तदा भविता त्रेतेत्यत्र युगत्रयेऽप्येतादृशा न सन्तीति भावः ॥

अध्यायः १४३ ॥

प्राजापत्यं हि नक्षत्रमित्यत्र 'रोहिणीनक्षत्रं प्रजापतिर्देवता' इति श्रुतेः प्राजापत्यं प्रजापतिदेवताकं रोहिणीनक्षत्रमित्यर्थः ॥

सोमस्य लक्ष्मव्यावृत्तमित्यत्र सोमस्य लक्ष्मणा कलाख्यचिह्नेन व्यावृत्तं रहितं दर्शादन्यदिने स्थितमपीत्यर्थः ॥ अध्यायः १४४ ॥

सहस्रपादं प्रासादमित्यत्र पादाः स्तम्भाः ॥ अध्यायः १४५ ॥

अवकीर्णोऽस्मि यन्मातरित्यत्र अवकीर्णः अकालीनरेतोजातः ॥

तद्यशःकीर्तिनाशनमित्यत्र यशसः कीर्तिः कीर्तनं तन्नाशयतीति तथोक्तम् ॥

समितिं गतमित्यत्र समितिं सभाम् ॥ अध्यायः १४८ ॥

वचनं कुरुमुख्ययोरित्यत्र कुरुमुख्ययोः धृतराष्ट्रभीष्मयोः पुरतः ॥

अध्यायः १४९ ॥

शास्त्रकर्णोऽभवद्राजेत्यत्र त्वम्दोपयुक्तेन राज्यं न कार्यमिति शास्त्रे कर्णौ यस्य स तथोक्तः ॥ अध्यायः १५० ॥

॥ भगवद्यानपर्व समाप्तम् ॥

---

कृत्वा मूलप्रतीकारमित्यत्र मूलप्रतीकारं मूलस्य स्वमूलस्थानभूतोपप्लाव्यस्य प्रतीकारं रक्षाम् ॥

जघनार्धे विराटश्चेत्यत्र जघनार्धे सेनाख्यनार्या जघनस्थानीये अर्धे मध्य इत्यर्थः ॥

विद्राव्य शतशो गुल्मानित्यत्र 'सेनामुखं गुल्मगणौ' इत्यमरोक्तेः गुल्मान् सेनामुखानि ॥

सूपतीर्थां शुचिजलामित्यत्र सुष्ठु उप समीपे तीर्थानि यस्याः सा ताम् ॥ अध्यायः १५२ ॥

योगचन्द्रोदयोद्भूत इत्यत्र योग उपायः ॥ अध्यायः १५३ ॥

सोपासङ्गा इत्यत्र तूणीर–उपासङ्ग–निषङ्गपदेन अवान्तरभेदाः कथ्यन्ते ॥ अध्यायः १५४ ॥

बद्धारिष्टा बद्धकक्ष्या इत्यत्र रिष्टं न भवतीत्यरिष्टं अभेद्यं यत्कवचशिरस्त्राणादिकम् । कक्ष्याः हस्त्यश्वादीनां उदरबन्धनरज्ज्वादयः ॥

धुर्ययोर्हययोरेक इत्यत्र धुर्ययोः रथाग्रे धुरन्धरयोः एकः सारथिः ॥

बभूवुः सप्तपुरुषा इत्यत्र सप्तपुरुषाः सप्तसेवकपुरुषाः ॥ अ० १५५ ॥

देवानामिव पावकिरित्यत्र पावकिः षण्मुखः । 'सेनानीरग्निभूर्गुह' इत्यमरः । अभियाने यात्रायाम् ॥ अध्यायः १५६ ॥

पुनः पुनरुपह्वर इत्यत्र उपह्वरे एकान्ते ॥ अध्यायः १५७ ॥

स भोजराज इत्यत्र भोजराजः, रुक्मिणः प्रागेव बलरामेण मृतत्वात् रुक्मिणोऽनुजो रुक्मरथाख्यः कश्चिद्भीष्मकपुत्रः ॥

द्रोणं व्यपदिशन् शिष्य इत्यत्र द्रोणं गुरुं व्यपदिशन् ॥

वचनं राजशार्दूलेत्यत्र भीतोऽसीति वचनमिति पूर्वेण सम्बन्धः । वज्रायुधं इन्द्रं प्रत्यपि ॥

विनिवर्त्य ततो रुग्मीत्यत्र रुग्ममिति पदमस्य नाम्नि वर्तत इति रुग्मी रुग्मरथाख्यः ॥ अध्यायः १५८ ॥

अमित्राणां वशे स्थानमित्यत्र वशे स्ववशे स्थानं स्थापनम् ॥

अप्रियाणां तु वचन इत्यत्र अप्रियाणां राज्यत्यागरूपपणानां वचने सति ॥ अध्यायः १६० ॥

आज्ञापयत राज्ञस्तानित्यत्र तान् अस्मत्सेनागतान् सर्वान् राज्ञः प्रति उदयात्सूर्योदयात्प्राक् योगः सेनासन्नाहः कार्य इति आज्ञापयतेति योजना ॥ अध्यायः १६२ ॥

शृङ्गं वेद महाराजेत्यत्र शृङ्गं प्राधान्यम् । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः ॥

पत्तीनां तव सेनायां सहितान्यर्बुदानि चेत्यत्र अर्बुदानि बहु-सङ्ख्याकानि ॥ अध्यायः १६४ ॥

व्यलीकं पाण्डवेयेनेत्यत्र व्यलीकमप्रियं जातम् । 'व्यलीकं त्वप्रियेऽनृत' इत्यमरः ॥ अध्यायः १६५ ॥

कृष्णगतिर्यथेत्यत्र कृष्णगतिः कृष्णवर्त्मा ॥ अध्यायः १६६ ॥

करणानां वियोगाच्चेत्यत्र करणानां कवचाद्युपकरणानाम् ॥

मौलाऽपि पुरुषव्याघ्रेत्यत्र मौला धनमूलेन सम्पन्ना ॥ अ० १६७ ॥

राज्ञां दध्वंसिरे तदेत्यत्र दध्वंसिरे 'ध्वंस अधःपतन' इति धातोः ध्वस्ता अभूवन् बलह्रासोऽभूदिति भावः ॥ अध्यायः १६८ ॥

त्वयाऽन्यपूर्वया नाहमित्यत्र अन्यः पूर्वो यस्याः सा अन्यपूर्वा तया त्वया ॥ अध्यायः १७४ ॥

परामृष्टा महायुद्ध इत्यत्र परेण भीष्मेण आमृष्टा स्पृष्टा ॥

प्रवृत्ते वैशसे युद्ध इत्यत्र विशसनं हिंसा तत्सम्बन्धिनि वैशसे ॥

अध्यायः १७६ ॥

केचिदसदुपालम्भ इत्यत्र असदुपालम्भे कन्यापहर्तॄणामस्माकं हिंसने ॥

उचिता ह्यन्यथा बाल्य इत्यत्र अन्यथा भर्तारं विना ॥

न स्यादेवं महात्ययमित्यत्र महानत्ययो हानिर्यस्य तत् ॥

होत्रवाहदर्शनं नाम सप्तसप्तत्यधिकशततमोऽध्यायः १७७ ॥

---

दुःखं द्वयोरिदं भद्रे इत्यत्र द्वयोः साल्वभीष्मयोः सकाशात् ।

जितकाशी तथैव चेत्यत्र जितकाशी जयाकाङ्क्षी ॥ अ० १७९ ॥

काश्ये कामं न गृह्णामीत्यत्र कामं इच्छानुसारेण ॥

सज्जन्तीह शरीरिणामित्यत्र इह लोके शरीरिणां शरीरवतां सतां न सज्जन्ति । मम शरघाते शरीरपात एव भवतीति भावः ॥ अध्यायः १८० ॥

त्वया चैव चतुर्विधमित्यत्र चतुर्विधं शरप्रयोगः शरसन्धानं मन्त्रप्रयोगो मन्त्रोपसंहारश्चेति ॥ अध्यायः १८१ ॥

काल्यंकाल्यं विंशतिर्वै दिनानीत्यत्र काल्यंकाल्यमुषःकालमुषःकालमारभ्य । 'काल्यमुषः प्रत्यूष' इति हलः ॥ अध्यायः १८६ ॥

धिष्ण्यमाकाशगं यथेत्यत्र आकाशगं धिष्ण्यं देवतावासभूतं विमानम् ॥

क्षतस्य क्षतजोक्षणमित्यत्र क्षतजस्य रक्तस्य उक्षणं यस्मिंस्तदासीत् इति सम्बन्धः ॥ अध्यायः १८८ ॥

कथं त्वद्य त्वया जेतुं रामः शक्यो निवर्त वै इति देवर्षीणां वचनात् शिष्येण त्वया गुरौ भार्गवे द्रोहकरणात् त्वमपि पौत्रेण मरिष्यसीति शापदानाच्च भीष्मजयादिकं रामस्य च्छेदभेदादिदर्शनं च असुरजनमोहनार्थम्, आगामिविपरीतफलसाधनार्थं चेति ज्ञेयम् ॥

पूर्वदेवः सनातन इत्यत्र पूर्वदेवः देवानां पूर्वः ॥ अध्यायः १८९ ॥

ततोऽगमद्वत्सभूमिमित्यत्र वत्सो नाम कश्चिदृषिः तस्य भूमिम् ॥

अध्यायः १९० ॥

नास्मि वार्येति वै पुनरित्यत्र वार्या निवारयितुं योग्या नास्मि ॥

अध्यायः १९१ ॥

दिष्टमित्यब्रवीच्छिव इत्यत्र दिष्टं दत्तम् । 'दिश अतिसर्जन' इति धातुः ॥

प्राजायत जनयामास । अन्तर्णीतो णिच् ॥ अध्यायः १९२ ॥

क्षत्तारं सारथिम् ॥ अध्यायः १९४ ॥

॥ अम्बोपाख्यानं समाप्तम् ॥ अध्यायः १९६ ॥

---

भागाधिकं ममेत्यत्र मम भागाधिकं एकदिनस्य दशसहस्रात्मकभागे क्रियमाणे यदधिकं सैन्यं तद्दिवसे दिवसे भागान् कृत्वा हन्याम् । एवं भागे क्रियमाणे यावन्ति दिनानि भवन्ति तावद्भिर्हन्यामिति भावः ॥

समागच्छसि राधेयेत्यत्र यावत् यदा समागच्छसि तावत्तदा त्वं नैवमवमन्यसे ॥ अध्यायः १९७ ॥

वेदान्तावभृथस्नाता इत्यत्र वेदोक्तकर्मणामन्ते अवभृथस्नाता इत्यर्थः ॥

अध्यायः १९८ ॥

कुरुक्षेत्रस्य पश्चार्धे इत्यत्र पश्चाद्भागस्य अर्धे पूर्वभागे ॥ अ० १९९ ॥

भाण्डं समारोपयतामित्यत्र भाण्डं युद्धोपकरणम् ॥

आयती आयामवती ॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां उद्योगपर्वणि कविकुलतिलकभाविसमीरश्रीमद्वादिराजतीर्थपूज्यचरणविरचितलक्षालंकाराख्यटीकायां द्विशततमोऽध्यायः ॥

॥ समाप्तमुद्योगपर्व ॥

---

भाविसमीरश्रीमद्वादिराजपूज्यचरणविरचितं

## श्रीहयग्रीवस्तोत्रम् ।

(पद्यपञ्चकम्)

न शक्ती मे भृत्यो न च कपटचाटूक्तिकुमनु-
र्न वित्तैर्भैषज्यं न च पदरयो नापि खगराट् ।
तथाप्येषा दोषानलसपिशुनोन्मुक्तभुजगी
हयग्रीवश्रीमच्चरणशरणं मां स्पृशति किम् ॥ १ ॥

न षट्शास्त्राभिज्ञा न च निगमयुक्ता न कवयो
न मन्त्रानुष्ठानव्रतचरणचित्ता अपि वयम् ।
न तद्यत्नोपेतास्तदपि चतुरा एव नितरां
वदामो यद्दिष्ट्या हयवदन तुभ्यं नम इति ॥ २ ॥

न वित्तैरुन्मत्ता न च कुहकदुर्मन्त्रबलिनो
न वा मिश्रैर्मिश्रा न च कुजनसाचिव्यसचिवाः ।
न दुःशास्त्रं शस्त्रं विरसमुपजीव्योद्धतधियो
हयग्रीवं देवं वयमिममुपास्यैव कृतिनः ॥ ३ ॥

न वित्तेषूत्कण्ठां न च कुविषयास्वादनविधौ
न वा माठापत्ये न च नृपतिसम्प्रीतिकरणे ।
न नारीसम्भोगे प्रदिश दिश कारुण्यजलधे
तव श्रीमत्पादाम्बुरुहभजने वाजिवदन ॥ ४ ॥

लसन्मध्वस्वाध्वा विकसिततदीयोक्तिसरसी-
रुहामोदान्मोदस्तदुरुमकरन्दे परिचयः ।
हयग्रीवो देवो हरिचरणभक्तिश्च सुदृढा
भवेऽस्मिन्मेऽन्यस्मिन्नपि भवतु भूयश्च भवतात् ॥ ५ ॥

वादिराजयतिप्रोक्तं साध्विदं पद्यपञ्चकम् ।
आदरेण गले धार्यं माधवप्रीतिकामुकैः ॥

इदं स्तोत्रं फलिमारुमठीय(सं० १६३)तालपत्रात्मकपुस्तके उपलब्धम् ॥